गवर्णमेण्टप्रवर्त्तितकाव्यमध्यपरीक्षापाठ्यम् ।

# दशकुमारचरितम् ।

महाकविश्रीमद्दण्ड्याचार्य्यप्रणीतम् ।

विद्योतनाख्यया टीकया वङ्गभाषयेतिवृत्तादिविविध-
विषयेण च समलङ्कृतम् ।

स्यार्. आर्. सि. मित्र संस्थापितोच्च-इंराजि विद्यालयस्य
प्रधानसंस्कृताध्यापकेन साहित्याचार्य्योपाधिकेन

श्रीयुक्त रेवतीकान्त भट्टाचार्य्येण

सम्पादितम् ।

भानुका-दर्शन चतुष्पाठीतः

श्रीअखिलबन्धु भट्टाचार्य्येण

प्रकाशितम् ।

१३२१ वङ्गाब्दीयोत्तरायण-सङ्क्रान्त्याम् ।

PRINTED BY MIHIR CHANDRA GHOSH
AT NEW SARASWATI PRESS,
25/A, MECHUABAZAR STREET, CALCUTTA.

मूल्यं सपादैकरूप्यकम् १।०

## निवेदनम् ।

काव्यमिदं नीतिरसपूर्णं गद्यमयाख्यायिकेति संगीयते परम-विधेयालङ्कारिकशास्त्रसिद्धान्तदर्शिभिः। अस्य च निर्माता कविकुलललामभूतः श्रीमन्महापण्डितकुलभूषणाचार्य्यो दण्डी नाम कविः। किन्त्वेतेन नाम्ना कवेरिदमेव तात्त्विकं नामेति वक्तुमलम् स्मः। येन चतुर्थाश्रमवासिनं सन्यासिनमवोनेनोपाधिना विशेषयन्ति विपश्चिन्मुख्याः। सुतरामयमपि चतुर्थाश्रम-वासीति नाम्नैव प्रतीयते। परं स कं देशं कं वा कालमधि-कृत्य प्रादुर्भूतः, तद्विज्ञानमप्यतिदुर्लभम्। तस्य कलापरि-च्छेद छन्दोविचिति-काव्यादर्श-दशकुमारचरितादीन्यालोचनया दण्ड्याचार्य्यमन्तरेण कामपि विशेषवार्त्तां ज्ञातुं न समर्थाः। केऽपि काव्यादर्शे तस्य वैदर्भीरीतेरत्यधिकप्रशंसादर्शनाद्दाक्षि-णात्यप्रदेशीयविदर्भजनपदवासीति मन्यन्ते, तदस्मभ्यमपि-रोचते। इतःपरम् प्रत्नतत्त्वविशेषज्ञा एव प्रमाणम्। भवतु, स यद्देशवासी उत वा सन्नासी किन्तु जगति तस्य स्थानमनन्य-साधारणम्, कविगुरुर्वाल्मीकेर्व्यासस्य च समानासनमदायि काव्यगुणग्राहिभिः यथाहि—'जाते जगति वाल्मीके कविरित्य-भिधीयते। कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि॥' इति प्राचीनसंवादात् परतोऽस्य यथातथ्यं काव्यरसरसिकानां सूक्ष्म-दिग्दर्शनवतामेव गवेषणीयमिति दिक्।

परतः आचार्य्यपादानां रचनानि रसभावगम्भीरतया काव्यशरीरस्य किञ्चिद्घटनावैचित्र्येण समासप्रपञ्चेन च मना-गनञ्जसतया निसर्गतवाभिनवशिक्षार्थिनां किञ्चन दुर्बोधमुप-

जनयन्ति। विशेषतोऽस्य या प्राचीना नव्या च प्रसिद्धव्याख्या आस्ते। सा न नवीनविद्यार्थिनां शिक्षाविषये प्रचुरतराविरल-व्याख्याविरहिततयेति। अतएवाऽस्माभिः काव्येऽस्मिन् यथा-मति'विद्योतनी' नामैकां निरन्तरां टीकां निर्म्मायाध्येतॄणाम-कृच्छ्रबोधनार्थमशेषो यत्नोऽकारि। परमेतया कियन्तमुपकार-मेष्यन्ति छात्रगोष्ठ्यां तत्र प्रेष्ठाः सहृदया एव प्रमाणम्। अस्माभिः पुनर्मुम्बयी, वाराणसी, कलिकाताप्रभृति जनपद-मुद्रितानि पुस्तकान्याहृत्य तत्रत्यान् रसानुगुणान् पाठान् मूलग्रन्थे समावेश्यापरे मन्यमाना युक्तियुक्तपाठाः पाठान्तरेण पादटीकायां सन्निवेश्य मुद्रणमनायि। यद्यप्येवमशेषाया-समञ्जीकृत्यास्य शोभासम्पत्यर्थं कृतोवसुव्ययप्रयत्नस्तथापि मादृ-शानामनुपदमेव स्खलनं सम्भवति तराम्। मोहेन सीसकाक्ष-राणां यत्र कुत्रचिद्दुष्कलसंपेषणान्निर्गलितेन मुद्रणकार्य्यकारिणा-मसावधानतादोषेण च, या तावदत्र त्रुटिं परिलक्ष्यते, तत् सर्वं परिहर्तव्यम् 'दृष्टं किमपि लोकेऽस्मिन्ननिर्द्दोषं न निर्गुणम्। आवृणुध्वमतो दोषान् विवृणुध्वं गुणान् बुधाः॥' इति वृद्ध-वाक्यस्मरणात्। परन्तु विद्यावयो वृद्धेभ्यः प्रार्थयामहे, यस्तावदत्र प्रमादः परिलक्ष्यते तदौदार्य्येण विज्ञापयितव्यम्, परतो मुद्रणविधौ यथायथं संशोधयितुं प्रयतिष्यामहे। परि-शेषे पुनरियं सकृताञ्जलिप्रार्थना—प्राचीनव्याख्यारीत्यनुक्रमेण ग्रन्थस्यास्य पूर्व्वपीठिकायां व्याख्यां संयोज्य कियत्यंशेषु मुद्रि-तेषु हितैः सुहृद्भिरन्वयपूर्व्विका व्याख्या कर्त्तव्येति विज्ञापिते-

रच्य आभिरसामञ्जस्यभिया तत् परिहृतम्। उत्तरपीठिका यान्तु तेषामुपदेशानुरूपमेव विहितम्। आशंसामहे तेन यथा कथञ्चिदुपकारमनुभविष्यन्ति विद्यार्थिन. इत्यलमधिकवाक् प्रपञ्चेनेति शम्।

विष्णुपुरस्कूल,
१ २१ वङ्गाब्दीयोत्तरायण-संक्रान्तिः।

विधेयस्य—
श्रीरेवती कान्त शर्म्मणः।

## दशकुमारविषयिणी समालोचना।

अधुना प्रचलितकाव्यनिवहेषु दशकुमारचरितं नाम गद्यकाव्यं काव्यरसरसिकानां सहृदयानाञ्च सन्नीतिपथमादिशतीति नास्ति तत्र कियानपि सन्देहः।

अस्तीयं ग्रन्थसम्बन्धिणी कापि जनश्रुतिः 'श्रुत्वा तु भुवनवृत्तान्तम्' इत्यारभ्य 'इत्याकलय्य योगानन्वतिष्ठम्' इत्यन्तमेवाचार्य्यामृतयष्ट्या लेखन्या मुखनिसृतम्। पूर्व्वोत्तरांशौ नापि तस्य कवेर्लेखणीगताविति किं वदन्त्यामस्यामस्ति कत्यवितथ तन्न जानीमहे, मन्यामहे च 'नह्यमूला जनश्रुतिः' इति स्मरणेन, कविना पूर्ण एव ग्रन्थो निर्म्मित आसीत्। उत्तरतो येन केनापि हेतुना पूर्व्वोत्तरभागौ विनाशमुपगतौ। न चेदाद्यन्तचरितद्वयं कथमसंम्पूर्णं स्यात्? कथं वा सप्तकुमारचरितवर्णनेणैव दशकुमारचरितमिति नाम विहितं तत्र भवता निखिलज्ञानोपचितैश्वर्य्यवताचार्य्येण। सूक्ष्मदृष्ट्या पर्य्यालोचितेनापि भागत्रयाणां नैकविधं रचनासाम्यं प्रतीयते।

नितः। पूर्व्वोत्तरभागनाथानन्तरञ्च तथ शिष्टवर्गाणां येन केनापि तदंशौ निर्म्मिताविति सिद्धान्तिते न कापि विप्रतिपत्तिः। परतः दशराजकुमाराणां चरितवर्णनमिषेण कविना तदानीन्तनराजनीति-लोकाचार-समाजविषयिणी नानादोषगुणाख्यान-चित्रचित्रितेन महत्यात्मकविलशक्तिः, प्रसङ्गतो लोकानां हित-कथनञ्च कौशलेन प्रकटितम्। परं तर्कयामो वयमत्र याश्युत्र-संस्कृतयः परिलक्ष्यन्ते ताम् काश्चिल्लिपिकरकराधिगताः कापि वा महामहीयसां कवीनां निरङ्कुशतया प्रयुक्ता इति। ये चात्मकर्म्मणि दृढ़मत्यसन्धाः करतलामलकवदतिदुष्कराण्यपि कार्य्याणि ते साधयितुं प्रभवन्ति। अपि च वसुरचित-विहार-भद्रयोरनुकूलप्रतिकूलवाक्याभ्यां महानुपदेशो धूर्त्तप्रतारण-प्रकाराधिगमश्च सुव्यक्तमेवास्मिन् प्रतिपाद्य प्रदर्शितः। स्थूलत इयन्त एव प्रतिपाद्य विषयाः; पुनरस्य पुङ्खानुपुङ्खभावेन नीतिगुणाख्यानपूर्व्विका पर्य्यालोचनातिबाहुल्यसापेक्षा कष्ट-साध्याचेति किमु तत्र तर्कावतारः। अतएवास्माभिर्गौरव-भिया तासां दिङ्मात्रं प्रदर्शितम्। आशास्महे काव्यरसरसि-कानां गवेषणमिष्टनाञ्च यथा कथञ्चिदपीयं प्रत्युपकारमात-न्वीतेति कृतं बाहुल्येन।

## नायकादिसिद्धान्तः।

अस्यत्र काव्ये मगधाधीशस्य चन्द्रहंसस्य नन्दनो राज-वाहनो नायकः। स च धीरोदात्तः। नायिका च मालव-राजनन्दिनी अवन्तिसुन्दरी। सा स्वकीया मध्या। आलम्बन-

विभावो, चन्द्रचन्दनवसन्तादय उद्दीपनविभावाः, चक्षोऽत्रानुरागबोधकचतुरादिक्रिया अनुभावाः, निर्वेदादयो व्यभिचारिणः, रतिः स्थायो, सम्भोगशृङ्गाररसोऽङ्गी, वीरादयोऽङ्गरसाः, रीतिः वैदर्भी, गुणः प्रसादाख्यः, चूर्णकं गद्यमिति ।

## ग्रन्थस्य संक्षिप्तेतिवृत्तम् ।

पूर्व्वपीठिकायाम्,—मानसारेण राजहंसस्य युद्धम्, निर्ज्जितस्य राजहंसस्य विन्ध्याटव्यावस्थानम्, तस्मिन्नेव राजवाहनस्य जन्म, अपरकुमारगणसमधिगमः, तैः सह राजवाहनस्य दिग्विजयप्रयाणम्, ब्राह्मणवचनेन तस्योपकृतये कुमारराजवाहनस्य रसातलप्रवेशः, तत्र क्षुत्पिपासाविनाशनमणिलाभः अपरेषां कुमाराणां तदन्वेषणाय दिग्विदिशगमनम्, पातालागतेन राजवाहनेन सोमदत्तपुष्पोद्भवयोः समागमः । तयोरात्मचरितकीर्तनम्, राजवाहनस्यावन्तिसुन्दर्य्या समागमः इयन्तं यावद्वर्णितम् ।

परपीठिकायाम्—प्रथमोच्छ्वासे राजवाहनस्य बन्धः, चम्पानगरानयनम्, तत्र राजवाहनेन सुरतमञ्जर्य्याः शापवृत्तान्तस्य श्रवणम्, इतरकुमाराणां मेलनम्, द्वितीयोच्छ्वासतोऽष्टमोच्छ्वासान्तमपहारोपहारवर्म्मार्थपालप्रमतिमित्रगुप्तमन्त्रगुप्तविश्रुतानां यथाक्रमं स्ववृत्तान्तवर्णनम्, विश्रुतराजवाहनयोश्चरितोपसंहारः, राजहंसस्य वनगमनम्, राजवाहनस्य राष्ट्राधिगतिश्च केनचन काव्यरसरसिकेन कविना वर्णितमिति कृतमप्रस्तुतवाग्बाहुल्येन ।

सोमदत्तः—सत्यवर्म्मणो गर्भ्यामुत्पन्नः कालीनाम्न्या विमात्रा सरित्स्रोतसि धात्र्या सह क्षिप्तः, दैवगत्या स्रोतसानीयमानं काष्ठफलकं प्राप्य तत्रारोप्य तया त्रातः, काष्ठफलकलग्नसर्पोघातेनोपरतायां तस्यां वामदेवशिष्येण राज्ञे राजहंसाय दत्तः। चरितेऽस्मिन् राजवाहनस्यान्वेषणाय सोमदत्तः पृथ्वीं पर्य्यटन् एकदा तृषार्त्तः नदजलपातुं कमपि मणिमलभत। तस्य दीनाय ब्राह्मणाय दानम्, ततस्तं ब्राह्मणं बद्धा मत्तकालानुचरैः तदन्तिकानयनम्, चोरोऽयमित्युक्त्वा ते ब्राह्मणं त्यक्त्वा तं बबन्ध। ततस्तस्य कारारोधस्तत्र बन्धिभिर्मानपालशिविरमागत्य युद्धेन मत्तकालं जितवान् परिणीतया चञ्चललोचनया महाकालं गच्छतः मार्गे राजवानेन समागमोऽभूदिति।

पुष्पोद्भवः—कालयवननाम्नि द्वीपे कालगुप्तनाम्नो वणिजः कन्यां सुवृत्तां परिणीय कालक्रमेण भ्रातृविलोकनकुतूहलेन रत्नोद्भवः श्वशुराज्ञयात् निजदेशगमनसमये यानभग्नान्निमग्नयापि धात्रीचातया सुवृत्तया वनभूमौ प्रसूतः, सः सूतः मत्तवारणभीतायाः धात्र्याः अङ्कात् स्खलितः। तञ्च गृह्णाति गजपतौ केनापि केशरिणा गजपतिराक्रान्तः, भयाकुलतया करी बालं वियति शुण्डेन उत्क्षेपयामास। ततस्तत्र वृक्षस्थितेन वानरेण पक्वफलभ्रान्त्या गृहीत्वा फलेतरतयाधः क्षिप्तोऽभूत्। अनन्तरं सोमदेवशर्म्मणा प्राप्तः राजहंसाय दत्तश्च। चरितेऽस्मिन् वह्निगिरिभ्यां पुष्पोद्भवस्य मातापित्रोस्त्राणम्, अन्योऽन्यपरिचयः, चन्द्रपालबन्धुपालाभ्यामालापः, दारुवर्म्मणः गुप्तहननम्, बालचन्द्रिकाप्राप्तिः, राजवाहनेन समागमश्चेयन्तं वर्णितमस्ति।

अपहारवर्म्मा—भूपतिरेकदा तीर्थस्नानाय गच्छन् सुन्दर्याः क्रोडे राजलक्षणयुक्तं बालकं वीक्ष्यार्थादिना तां संतोष्य बालकं गृहीत्वा महिष्यै समर्पितवान्। अयन्तु प्रियम्वदायां प्रहारवर्म्मणो जातः। चरितेऽस्मिन् राजवाहनसुपलिप्सोरपहारवर्म्मणो महर्षिमरीचेराश्रमगमनम्, तस्य समीपे तद्वेश्यासंसर्गेण स्वतपःस्खलनविवरणाख्यानम्, विरूपकस्य वेश्यासक्त्या आत्मधनक्षयकथनम्, अपहारवर्म्मणो द्यूतक्रीड़ा, चौर्य्यम्, पथि कुलपालिकया समागमः, उदारकभवने तस्याः नयनम्, भूयोऽपि कुबेरदत्तावासे चौर्य्यम्, अर्थपतिस्तोरणभङ्गः, रागमञ्जर्य्यामनुरक्तिः, चर्म्मभस्त्रिकया तज्जननीस्वसारौ प्रलोभ्य तदुद्यमनम्, राजद्वारेऽभियुज्य सापवादमर्थपतिनिर्वासनम्, प्रमत्तस्यापहारवर्म्मणः कारारोधस्तस्मिन् कारारक्षकं कान्तकं रागमञ्जर्य्याः सेविकया शृगालिकया राजतनयालाभाय विसृज्य तस्याज्ञाक्रमेण कारातः सुरङ्गां विधाय कान्तकं निहत्य तेनैव सुरङ्गपथेनान्तःपुरप्रवेशः, राजदारिकाम्बालिकानुरक्तिः, चण्डवर्म्मणाम्बालिकायाः हरणम्, अपहारवर्म्मणा चण्डवर्म्मणो वधस्तत्र राजवाहनाधिगमश्च।

---

गभर्ण्मेण्ट परिगृहीतायाः परीक्षायाः

## दशकुमारचरितस्यातीताः प्रश्नाः।

ई० १९०३—१९०७ खीष्टाब्दं यावत्।

४। दण्डिनोक्तं पुष्पोद्भवचरितं सरलेन संस्कृतप्रबन्धेन वर्ण्यताम्। (१९०३)

६। 'ननु धर्म्माद्‌वृत्तेऽर्थकामयोरनुत्पत्तिरेव। तदनपेक्ष एवं धर्म्मो निर्वृत्तिसुखप्रसूतिहेतुरात्मसमाधानमात्रसाध्यश्च। सोऽर्थकामवद्बाह्यसाधनेषु नात्यायतते। तत्त्वदर्शनोपबृंहितश्च। यथा कथञ्चिदप्यनुष्ठीयमानाभ्यां नार्थकामाभ्यां बाध्यते, बाधितोऽपि चाल्पायासप्रतिसमाहितस्तथापि दोषं निर्हृत्य श्रेयसे अनल्पाय कल्पते।'

व्याख्यायतामयं सन्दर्भः। कस्मिन् खलु चरिते कदा केन कस्मै चायं भणितः? अत्र प्रधान्येन का रीतिः? किंवा तस्याः लक्षणम्? (१९०४) १०

७। त्वयाद्य साधुतोन्मीलितेति तत् प्रायस्त्वत्पूर्व्वा दानेभ्यो न रोचते। दृष्टमिदानीमौदार्य्यस्य स्वरूपमिति त्वदाशयमननुमान्य न युक्तो निर्णयः। त्वयाद्युना सुकृतेन क्रीतोऽयं 'दासजन' इत्यसारमतिगरीयसा क्रीणासीति स प्रज्ञाधिक्षेपः। न प्रियादानस्य प्रतिदानमिदं शरीरमिति तदलाभे निधनोन्मुखमिदमपि त्वयैव दत्तम्।

(क) अस्मिन् सन्दर्भे यानि वाक्यानि, तेषां तात्पर्य प्रकाशपूर्वकं व्याख्या कार्य्या। कं प्रति कदा कस्येयं उक्तिः? (१९०५) १

८। प्रक्रममनुसृत्य पूर्वापरघटनावलीसमुल्लेखपुरःसर निम्नस्थः सन्दर्भः विशद्यताम्, वक्तृबोद्धव्यौ च प्रकाश्येताम्।

तथास्मासु प्रतिविधाय तिष्ठत्सु राजापि विज्ञापितोदन्तः जातानुतापः पारग्रामिकान् प्रयोगान् प्रायः प्रायुङ्क्त,

चास्माभिः प्रत्यवसीदन्यन्त। अस्मिन्नेवावसरे * * * राज्ञः शय्यास्थानमवगम्य * * *स्तरगास्येन सुरङ्गामकार्षम्। गता च सा भूमिस्स्वर्गकल्पमनल्पकन्यकाजनं कमभ्युद्देशम्। अभ्युत्थिष्ट च दृष्ट्वैव स मां नारीजनः।

(क) कीदृशं प्रतिविधानं? कोऽयं राजा? कीदृगयमुदन्तः? कथमनुतापः? को तावत् पारग्रामिकाः प्रयोगाः? के च ते? सा का? मां कम्? (१९०६) ५

७। पर्य्यङ्कतले ईषद्विवृतमधुरगुल्फसन्धि परस्पराश्लिष्टजङ्घाकाण्डम्। अपाश्रयान्तनिहिताकुञ्चितेतरभुजलतोत्तानतलकरकिशलयम्। आतिरश्चीनबन्धुरशिरोधरोद्दिश्यमाननिष्टप्ततपनीयसूत्रपर्य्यन्तपद्मरागरुचकम् अर्द्धलक्ष्याधरकर्णपाशनिभृतकुण्डलम्।

उपरिपरावृत्तश्रवणपाशरत्नकर्णिकाकिरणमञ्जरीपिञ्जरितविषमव्याविद्धाशिथिलशिखण्डबन्धनम्।

गण्डस्थलीसंक्रान्तहस्तपल्लवदर्शितकर्णावतंसकृत्यम्। उपरिकपोलादर्शतलनिषक्तचित्रवितानपत्रजातजनितविशेषक्रियम्। उद्भिद्यमानश्रमजलपुलकभिन्नशिथिलचन्दनतिलकम् विस्रब्धसुप्तां राजकन्यामपश्यम्।

(क) व्यासवाक्यानि प्रदर्श्य व्याख्यायतामयमंशः। २५

(ख) केयं राजकन्या? कोऽयमपश्यत्; अस्या दर्शनात्परं किं जातम्? विस्तरेण कथ्यताम्। (१९०७) ८

---

विज्ञेयानि संस्कृतपुस्तकानि ।

## मालविकाग्निमित्रम् ।

सा खलु मञ्जुभाषिणी कीदृशी पेशलालङ्कारायुचिताभरणा परचित्ताकर्षणे च कीदृशी गुणवतीति तद्दृष्टार एव प्रमाणम् । यत् किल मूलोपगतानां च वा प्रश्नत्वव्ययानामपि तवत्योपगतायानां विवृती न आपर्यणमवतारितं टीकाकृता । अस्यामन्वयमुखेनातीवसरला विस्तृता व्याख्या परश्च क्रमशः सरलार्थः, भावार्थः, पाणिन्यादिमतानुसारेण कठिनपदसाधनम्, अभिधानं, प्रतिश्लोकानां गद्यस्थानामपि अलङ्कारनिर्णयः, तथा अलङ्कारस्य लक्ष्ये लक्षणसङ्गमनं, शास्त्राणां प्रमाणं, पिङ्गलसूत्रेण समं छन्दसो मेलनं, पाठान्तरं, प्राकृतपाठान्तराणां संस्कृतानुवादः स्थलविशेषे तेषां व्याख्या च, मुखबन्धे नाटकानां प्रधानो रसः, अङ्गतोऽप्रधानो रसश्च, नायकनायिकयोः स्थिरसिद्धान्तः, पुराणेतिहासं, नाटकलक्षणसमाधानं, नाट्योल्लेखितव्यक्तिगणः, नाटकीयकथार्थसंक्षेपः, स्थूलत एव इयन्तो विषया वर्त्तन्ते । अपि च व्याख्यायां मूलानामेकस्यापि वर्णस्य व्याख्यामवर्जनात् साधारणमात्रभाषाभिज्ञा बालका अपि अस्याः संग्रहेण मूलस्य तावदेवाशजातं गुरुणामुपदेशमन्तरेणापि अनायासेनैव बुध्येरन् । तथा अन्यानि च परीक्षोपयोगिनानाविधज्ञातव्यानि विद्यन्ते । सुतरां विद्यार्थिनः अस्याः सहायेन परीक्षोत्तीर्णा भविष्यन्तीति नास्ति तत्र कीयानपि सन्देहः । विशेषतश्च अत्युत्तमया मसा स्थूलेन च पत्रेण कलेवरम् । स्निग्ध-बभ्रुवर्णप्रावरणोपेतं बहिर्देशः ( cloth binding ) शिल्पिकुशलाभिज्ञेन रचितकारुकार्य्यमयी नयनाभिरामाक्षरमुद्रिका स्वर्णवर्णेन परिशोभितास्ति । मूल्यं सपादैका राजतीमुद्रा १।० । नेयव्ययम् सार्द्धमाषकद्वयम् ॥०।

## प्राकृतप्रकाशः ।

[ श्रीमद्वररुचि-प्रणीतानि सूत्राणि भामहविरचितास्तद्वृत्तयः, सम्पादक-सम्पादित-परिशिष्टञ्च । ]

यत् किल संस्कृत-नाटकादि-प्रबन्धेषु नाय्यादि-पात्रेषु प्राकृतभाषा प्रयुक्तोपलभ्यते। सा किल मागध्यादिभेदेन षोढा प्रविभक्ता बुधैः । नितरां व्याकरणशास्त्राणां

विभिन्नसूत्रतया शब्दानां विभिन्नत्वं रूपवैलक्षण्यञ्च प्रायशः परिलक्ष्यते। अतोऽस्माभिर्यथामति सुकुमारमतीनां सुखसम्बोधनायाद्यावद्ग्रन्थादन्यतो वा समाकृष्य विविध प्राकृतशब्दस्तोमं धातुप्रत्ययाद्यवश्यज्ञातव्यविविधटीप्पण्यञ्च सर्वान्ते संस्कृतशब्दानां प्राकृते परिणतिरूपां सूचीं संयोज्य यथार्थां भाषायां पठतां सम्यक्व्युत्पत्तिः सङ्घटेत्, तथा तथा सर्व्वं सम्पाद्य प्राकृतपरिशिष्टं नाम विधाय ग्रन्थशेषे संयोजितम्। मूल्यं दशाणकम् ( ॥/० )

## सारमञ्जरी।

[ पण्डिताग्रणी ४रजनीकान्त तर्करत्न भट्टाचार्य्यविरचितया बालबोधिनी-टीकयोपेता। ]

शब्दशास्त्रमधीयानानामियं व्युत्पादनाय परमोपयोगिणीति विविच्य राजकीय-संस्कृतशिक्षापरिषदा पाणिनिकलापभिन्नानां व्याकरणोपाधिपरीक्षाणां पाठ्यरूपेण निर्वाचिता। किन्त्वस्मद्देशेषु यानि पुस्तकानि वर्त्तन्ते तेषां पाठ एकेनैवान्यस्य सर्वथानैक्यं परिलक्ष्यते। अतोऽस्माभिस्त्रीणि पुस्तकानि संगृह्य महामहोपाध्याय ४ चन्द्रनारायणन्यायपञ्चानभट्टाचार्य्य-व्यवहृत-पुस्तकेन समं पाठमैक्यीकृत्य महात्मना तर्करत्नेन विनिर्मितयातिविस्तृतया बालबोधिनीटीकया सहितया तेनैव च विचारितं समीचीनं पाठं संयोज्यास्माभिर्महतायासेन सम्पाद्य मुद्रिता—मूल्यं रूपकार्द्धम्। (॥०)

## संस्कृतमञ्जरी।

[ प्रथमसंस्कृतशिक्षार्थिनां परमोपयोगिनी। ]

अस्मिन् ग्रन्थे ईसप् फेबलस् ( Easop's Fables ) पञ्चतन्त्रहितोपदेशेभ्यः श्रुतिसुखकरसंग्रहजातं संगृह्य योजितम्। सुखबन्धे तु सुकुमारमतीनां बालकानां सुखबोधाय संस्कृतवर्णशिक्षा, विभक्तीनां प्रयोगेष श्लोकरूपेण निबद्धः। प्रतिकथान्तेषु व्याकरणानां सूत्राणि कठिनांशानां टीप्पनी च प्रदत्ता। मूल्यं रूप्यकपादः। (।०)

## संस्कृतशिक्षा वा रचनाप्रणाली।

वामनादि-प्राचीन-व्याकरणसूत्रकर्त्तॄणां सूत्राणि संगृह्य तेषां अंशानि वङ्गानु-

वादेश धिमलकृत्योद्भासिताङ्गि संस्कृत ग्रंराजि विशेषपरीक्षादिनां—( optional) इयं परमोपयोगिनीति। मूल्यं रूपकार्द्धम्। ( ||॰ )

## लिङ्गानुशासनम्।

महर्षिपाणिनि-मुनिप्रणीत-सूत्रम्, भट्टोजिदीक्षित-विरचितया वृत्त्या सम्पादक-निर्मितया तत्परिशिष्टेन वङ्गानुवादेन च उद्भासितम्। मूल्यमाणकपञ्चकम्। ( ।/॰ )

## सटीकमीमांसा परिभाषा।

मीमांसकमतज्ञानुमिच्छूनामियं परमोपयोगिनीति नात्यत्र कीयानपि सन्देहः। किन्तु संक्षेपेण तच्छास्त्राणां यावतीयार्थानां परिपोषणतया नवीनशिक्षार्थिनां टीका-साहाय्यं युक्तियुक्तमिति मन्यमानैर्बहुायासेन प्रचुरार्थोपचयेण च अतिविस्तारितां सज्जनमानसमिव निर्मलां बुधजनचित्ताह्लादकरीं टीकां सङ्गमय्य अत्युत्तमया मसा स्थूलेन च पत्रेण कलाविज्ञानाभिज्ञेन विनिर्मितया नयनानन्दविधायिन्या वर्णसंयोजन-मुद्रया ( Bloke ) वहिर्दृश्यं विचित्य मुद्रणं नीतम्। नितरां सर्वथा व्याकुलीयन्ते प्रियच्छात्रवृन्दाः कृतविद्यांसश्च यत् किल अद्यापि एतादृशं पुस्तकं मुद्रायन्त्राधीनं नासीदिति। अपि चास्याः साहाय्येन विद्यार्थिनो नखदर्पणमिव निखिलमीमांसक-मतं परिज्ञातव्यम्। विशेषतश्च परीक्षार्थिनामभिज्ञानाय चन्यायतः एतस्या एव अतीतपरीक्षायाः प्रश्नपत्रं संयोजितम्। मूल्यं षडाणकम् ( ।/॰ )

## लकारार्थनिर्णयः।

मुग्धबोधादिव्याकरणोपाधिपरीक्षायां पाठ्यरूपेण निर्वाचितः। मूल्यमाणक-द्वयम् ( /॰ )

श्रीरोहिणीकान्त सांख्यतीर्थ।
धानुका-दर्शनचतुष्पाठी
पोः पालं, जिः फरिदपुर।

# दशकुमारचरितम् ।

## पूर्व्वपीठिका ।

### प्रथमोच्छ्वासः ।

ब्रह्माण्डच्छत्रदण्डः शतधृतिभवनाम्भोरुहो नालदण्डः
क्षौणीनौकूपदण्डः क्षरदमरसरित्पट्टिकाकेतुदण्डः ।
ज्योतिश्चक्राक्षदण्डस्त्रिभुवनविजयस्तम्भदण्डोऽङ्घ्रिदण्डः
श्रेयस्त्रैविक्रमस्ते वितरतु विबुधद्वेषिणां कालदण्डः ॥ (क)

---

श्रीकृष्णात्रेयवंशे समजनि मतिमांश्चन्द्रनारायणाख्यो
यस्यासीन्न्यायवादे सुविमलविहृतिर्गौतमीये च सूत्रे ।
तर्के सान्द्रान्धकारे समस्तजदिह यः पक्षिपाच्च चान्द्रीम्
सोऽयं स्वादीप्सितार्थे जनकजनयितुर्मन्मदो मे भवाय ॥
तस्य गुणानुरोधात्य राधाकान्त-शिरोमणिः ।
काश्यां राजमठे प्राप्तः सम्मानपदवीं पितुः ॥
तत्पुत्रो रजनीकान्तस्तर्करत्नोपनामकः ।
योऽभूत्तर्कमहाटव्यां वादीभे केशरी महान् ॥
एतान् पितृगणान् नत्वा रैवतीकान्तशर्म्मणा ।
टीका दशकुमारस्य 'विद्योतनी' वितन्यते ॥
क्व वा मम मतिर्मन्दा क्व दण्ड्याचार्य्यभाषितम् ।
आरुरुक्षुर्गिरिं तुङ्गं पङ्गुरिव दुराशया ॥

(क) अथ कविकुलमुकुटमहामणिसत्वभवानाचार्य्यो दण्डी प्रारिप्सितग्रन्थपरिसमाप्तिपरिपन्थिप्रत्यूहव्यूहविध्वंसनार्थं प्रस्तौति—ब्रह्माण्डेति । ब्रह्माण्डं ब्रह्मणः परमात्मनोऽण्डं जीवकोषः । तथा च मनुः—"अप एव ससर्ज्जादौ तासु बीजमवासृजत् ।

अस्ति समस्तनगरी-निकषायमाणा शश्वदगण्य-पण्य-विस्तारितमणिगणादिवस्तुजातव्याख्यातरत्नाकरमाहात्म्या मगधदेशशेखरीभूता पुष्पपुरी नाम नगरी (१)। तत्र वीरभट-पटलोत्तरङ्ग-तुरङ्गकुञ्जर-मकरभीषण-सकलरिपुगणकटकजल-

---

सदण्डमभवद्धेमं सहस्रारसमप्रभम्। तस्मिन् यज्ञे स्वयं ब्रह्मा सर्व्वलोकपितामहः॥" इति। तदेव छत्रं तस्य दण्डः आधारयष्टिरित्यर्थः। शतधृतिः ब्रह्मा "शम्भुः शतधृतिः स्रष्टा" इति हैमः। तस्य भवनस्य उत्पत्तिगृहस्य अम्भोरुहः अम्भसि जले रोहतीति रुहः क्विप्, पद्मस्य इत्यर्थः। नालदण्डः नालिका। क्षौणी पृथ्वी एव नौः तरणिः तस्याः कूपदण्डः गुणवृक्षः 'मास्तुल्' इति यस्य वङ्गभाषायां प्रसिद्धिः। यद्वा कूपदण्डः कर्णदण्डः, 'हाइल्' इति वङ्गीयाः। क्षरन्ती प्रवहन्ती या अमरसरित् वियद्गङ्गा सैव पट्टिका पताका तस्याः केतुदण्डः ध्वजयष्टिः, "पताकायां ध्वजे केतुर्ग्रहोत्पातविलक्ष्मसु" इति रुद्रः। ज्योतिर्मण्डली एव चक्रं रथाङ्गं तस्य अक्षदण्डः नाभिरूपकाष्ठविशेषः। विहन्मानसराजहंसेत्यादाविव चक्रशब्दः समूहरथाङ्गरूपोभयार्थकत्वात् श्लिष्टः। त्रयाणां भुवनानां समाहारस्त्रिभुवनं तस्य विजयस्य व्यापनरूपस्य स्तम्भदण्डः, स्थूना इत्यर्थः। तथा विबुधद्वेषिणां दनुजानां कालदण्डः यमदण्डस्वरूपः, मृत्युरिति यावत्, त्रिविक्रमस्य वामनस्यायमित्यण् त्रैविक्रमः, अङ्घ्रिः चरणः स एव दण्डः इवेत्युपमितसमासः। ते तव श्रेयः निःश्रेयसं सुकृतं पुण्यं वा। अतिशयेन प्रशस्यम् ईयसुः 'प्रशस्य'—इति श्रादेशः। वितरतु ददातु। अत्र ब्रह्माण्डस्य छत्रत्वारोपः अङ्घ्रेः दण्डत्वारोपे निमित्तम्, अतः परम्परितरूपकालङ्कारः। तथाहि दर्पणे—"यत्र कस्यचिदारोपपरारोपणकारणं तत् परम्परित" मित्यादि। पद्येऽस्मिन् दण्डशब्दस्य प्रायश एकार्थत्वात् अनवीकृतत्वं दोषः। इदं स्रग्धरा नाम वृत्तम्। यदुक्तं पिङ्गले—"स्रग्धरा म्रौ भ्नौ यौ य् त्रिःसप्तकाः" यस्य पादे मकाररेफभकारनकारास्त्रयश्च यकारा भवन्ति, तद्वृत्तं स्रग्धरा नाम सप्तसु सप्तसु सप्तसु च यतिः।

(१) समस्तेति। समस्तानां सकलानां नगरीणां पुरीणां, तल्लक्षणन्तु—"पुण्यक्रियादिर्विपुणश्चातुर्वर्ण्यजनैर्युताम्। अनेकजातिसंबद्धां नैकशिल्पिसमाकुलाम्। सर्वदैवतसंबद्धां नगरीत्वभिधीयते।" इति "स्त्रियः पूर्नगरीपूर्य्यः" इति वोपालितः। निकषः निकष्यतेऽत्र कषः घः। "निकषः शाणफलके" इति मेदिनी। गुणपरीक्षास्थानम् आदर्शो वेत्यर्थः। स इव आचरतीति तथोक्ता। निकषशब्दादाचारार्थे क्यङ्।

न्निधिमथनमन्दरायमाणसमुद्दण्डभुजदण्डमण्डलः (२) पुरन्दर-पुराङ्गणवनविहरणपरायण-तरुणगणिकागण-गीयमानया अतिमानया (३) शरदिन्दुकुन्दघनसारनीहारहारमृणालमराल-सुरगजनीरक्षीरगिरीशाट्टहासकैलासकाशनीकाशमूर्त्या (४)

---

शश्वत् निरन्तरम् अगण्यैः असंख्येयैः पण्यैः विक्रेयैः विस्तारितैः मणिगणादिवस्तुजातैः रत्ननिचयादिद्रव्यसङ्घैः व्याख्यातं निवेदितं रत्नाकरस्य उदधेः, रत्नानाम् आकरस्य खनेर्वा माहात्म्यं महिमा यया तथाभूता बहुशो रत्नपरिपूरिता क्रयविक्रयद्रव्यशाला इत्यर्थः। मगधदेशस्य शेखरीभूता शिरोभूषणस्वरूपा पुष्पपुरी नाम नगरी अस्तीत्यन्वयः।

(२) तत्रेति। तत्र पुष्पपुर्याम्। वीराणां शूराणां भटानां योधानां भटन्ति युध्यन्ते इति भटोऽक्; तेषां पटलः समूहः उत्तरङ्गा उन्नताः तुरङ्गा अश्वाः कुञ्जराः करिणश्च नक्रा जलजन्तुविशेषा इव ते भीषणं भयङ्करं, सकलाश्च ते रिपवश्च गणः तेषां कटकं सैन्यं तस्य जलनिधिः स एव तस्य मथने मन्दरायमाणं मन्दराद्रिरिवाचरत् समुद्दण्डं समुन्नतं भुजदण्डमण्डलं बाहुदण्डयुगलं यस्य तथाविधः। 'तुरङ्गकुञ्जर' इति काक-मयूरादिवत् समासः।

(३) पुरन्दरेति। अरीणां पुरं दारयतीति 'पुरन्दरे'त्यादिना निपातितः। पुर-न्दरः इन्द्रः तस्य पुरम् नगरं अमरावतीत्यर्थः। "पूरी नगरी पुरम्" इत्यमरः। तस्य अङ्गणं चत्वरं तस्मिन् यद्वनं नन्दनमिति यावत् तत्र विहरणे विहारे परायणानां तत्पराणां तरुणीनां युवतीनां गणिकानाम् स्वर्वेश्यानाम् अप्सरसामित्यर्थः। गणैः समूहैः गीयमानया कीर्त्यमानया। अतिमानया अति-अतिशयमानं परिमाणं यस्यास्तया विस्तृतया इत्यर्थः।

(४) शरदिति। शरदिन्दुः शरत्कालीनः चन्द्रः कुन्दं पुष्पविशेषःमाघ्यकुसुममित्यर्थः। शरदिन्दुश्च कुन्दं चेत्यादितः काशान्तं यावत् द्वन्द्वः "कुन्दं वा ना क्लीबं माघ्ये दलकोषो दलाढ्यकः" इति व्याडिः। घनसारः कर्पूरं चन्दनरसो वा, नीहारः तुषारः, हारः मौक्तिकस्रक्, मृणालं बिसं मृदुना लीयते इति मृणः कालन्प्रत्ययः। पद्मनालस्थितसूक्ष्मतन्तुकोमलतनुविशेषः इत्यर्थः। मरालः राजहंसः, सुरगजः ऐरावतः, नीरं वारि, क्षीरं दुग्धं, गिरीशस्य शम्भोः अट्टहासः महाहासः। "अट्टहासो महाहासः सुप्रहासः परिकीर्त्तितः" इति कोषः। कैलासः रजतगिरिः, काशं तृणविशेषकुसुमं तैः नीकाशा तुल्या मूर्त्तिर्यस्यास्तथाभूतया अतिधवलीतकायया इत्यर्थः। सदृशी इत्यर्थे

रचितदिगन्तरालपूर्त्या (५) कीर्त्या अभितः सुरभितः, स्वर्लोकशिखरोरुरुचिररत्नाकर-वेलामेखलावलयित-धरणीरमणी-सौभाग्यभोगभाग्यवान्, (६) अनवरत-याग-दक्षिणारक्षितशिष्ट-विशिष्टविद्यासम्भारभासुरभूसुरनिकरो (७) विरचितारातिसन्तापेन प्रतापेन सतततुलितवियन्मध्यहंसो राजहंसो नाम (८) घनदर्पकन्दर्पसौन्दर्य्यसोदर्य्यहृद्यनिरवद्यरूपो (९) भूपो

---

नौकाशब्देन नित्यसमासः। तथाच "इव वद्वा समप्रख्यप्रसुतुल्यनिभप्रभाः। विद्ध पिचौरनौकाशसहाध्यायिसजातयः। इवशब्दसमा एते शब्दाः साहश्यवाचकाः॥" इति।

(५) रचितेति। रचिता निर्म्मिता दिशां ककुभाम् अन्तरालानां पूर्त्तिः पूरणम् आच्छादनमिति यावत् यया तथोक्तया समन्तात् व्यापिन्या इत्यर्थः।

(६) कीर्त्त्येत्यादि। कीर्त्या यशसा। अभितः समन्तात् सुरभितः मनोज्ञः आमोदितः इति यावत् स्वर्लोकानां सुरालयानां शिखरेषु चूड़ासु किरीटेषु वा उरूणि स्थूलानि रुचिराणि सुन्दराणि रत्नानि यस्य तादृशो यो रत्नाकरः समुद्रः तस्य वेला कूलं "वेला काले च सीमायामङ्गे: कूलविकारयोः" इति मेदिनी। सा एव मेखला रसना तया वलयिताऽमण्डलिता वेष्टितेत्यर्थः। या धरणी पृथिवी सैव रमणी तस्याः सौभाग्येन सुभगत्वेन यो भोगः तत्र भाग्यं विद्यते यस्य तथाभूतः दयितोपभोगवदासमुद्रं धरित्रीमुपभोगे निरत इति भावः।

(७) अनवरतेति। अनवरतं निरवच्छिन्नं यो यागः यज्ञानुष्ठानं तस्य दक्षिणाभिः वैधकर्म्मणः शेषे देये पुरस्कारविशेषैः रक्षितः प्रतिपालितः शिष्टानां सज्जनानां विशिष्टानां सतां विद्यायाः सम्भारः विस्तारः तेन भासुराः दीप्यमानाः लब्धप्रतिष्ठा इति यावत्। भुवि सुरा भूसुराः तेषां भूसुराणां ब्राह्मणानां निकरः वृन्दं येन तादृशः।

(८) विरचितेति। विरचितः विहितः जनित इत्यर्थः, अरातीनां शत्रूणां सन्तापस्तापो येन तादृशेन प्रतापेन प्रभावेन सततं प्रतिदिनं तुलितः समीकृतः वियन्मध्यहंसः वियत आकाशस्य मध्ये हंसः सूर्य्यो येन तथाविधः तेजसा भास्कर इवेत्यर्थः। राजहंसः नाम्ना तथेति।

(९) घनेति। घनः सान्द्रः अतिशयित इत्यर्थः। दर्पः अवलेपः यस्य सः रूपेण-

बभूव। तस्य वसुमती नाम सुमतिर्लीलावतीकुलशेखरमणी रमणी बभूव (१०)। रोषरूक्षेण * निटिलेक्षणेन भस्मीकृतचेतने मकरकेतने तदा भयेनानवद्या वनितेति मत्वा, तस्या रोलम्बावलो केशजालं, प्रेमाकरो रजनीकरो विजितारविन्दं वदनं, जयध्वजायमानो मीनो जायायुतोऽक्षियुगलं, (११) सकल-

प्रतिम इति भावः, "गर्व्वे दर्पावलेपौ" इत्यमरदत्तः। यः कन्दर्पः स्मरः तस्य यत् सौन्दर्य्यं तस्य सोदर्य्यं सहोदरत्वमित्यर्थः, हृद्यं मनोहरं निरवद्यम् अनिन्द्यं रूपं यस्य तथोक्तः, रूपेण कन्दर्पसम इत्यर्थः। भूपः भूपालः राजहंसः बभूव आसीत्।

१०। तस्येति। तस्य राज्ञः सुमतिः सु-शोभना मतिः यस्याः सा तथोक्ता अतिबुद्धिमतीत्यर्थः। लीलावत्यः विलासवत्यः योषितः तासां कुलं वंशं तस्य शेखराणि शिरोभूषणानि तेषां मणिः रत्नभूतेत्यर्थः, राजकुलस्य विशेषेण आदरणीयेति भावः। रमणी मनोहारिणी स्त्री बभूव अभवत्।

(११) रोषेति। रोषरूक्षेण कोपनिष्ठुरेण निटिलेक्षणेन निटिले भाले अक्षि नयनं यस्य षच् समासान्तः। ललाटचक्षुषा शिवेनेत्यर्थः। "गोधिर्ल्ललाटमलिकं निटिलं भालमर्द्धकम्" इति पञ्चतत्वप्रकाशः। भस्मीकृता, दग्धीकृता चेतना सम्वित् यस्य तादृशे दग्धे इत्यर्थः। मकरः मकरचिह्नितः केतनः ध्वजो यस्य स तथोक्तः तस्मिन्। तदा तस्मिन् काले भयेन सहसा स्मरभस्मजनितेन संभ्रमेणेति भावः। अनवद्या निर्द्दोषा सर्वाङ्गसुन्दरीत्यर्थः। वनिता स्त्री मदनस्येति भावः, मत्वा इयं स्मरपत्नी रतिरिति मत्वेत्यर्थः। रोलम्बावली भ्रमरपंक्तिः "भ्रमरश्च शरिकः स्याद्रोलम्बो मधुसूदनः" इति त्रिकाण्डशेषः। मदनस्य सहचर इति भावः। तस्याः वसुमत्याः केशजालं कुन्तलकलापः कार्ष्ण्येन समत्वं तुल्यमभूदिति विभक्तिविपरिणामेनान्वयः। एवमपि सर्व्वत्र। प्रेमाकरः प्रेम्णः आकरः खनिः परमप्रेमभाजनमिति भावः, रजनीकरः चन्द्रः, विजितम् कान्त्या तिरस्कृतम्, अरविन्दं कमलं येन तत् तथाभूतं वदनं समभूदित्यर्थः। जयध्वजायमानः जयध्वज इवाचरति जयध्वजे तिष्ठति वा क्यङ्, ततः शानच्। विजयपताकाध्वजदण्डसदृशः जायायुतः पत्नीसहितः मीनः कामस्येति शेषः, अक्षियुगलं, अक्ष्णी द्वयम्।

* रोषपेक्षणेनेति वा पाठः।

सनिकाङ्गवीरो मलयसमीरो निश्वासः, (१२) पथिकहृद्दलन-करवालः प्रवालस्याधरबिम्बं, (१३) विजयशङ्खो बन्धुरा लावण्य-धरा कन्धरा, पूर्णकुम्भौ चक्रवाकाऽनुकारौ पयोधरौ, (१४) ज्यायमाने मार्दवासमाने बिसलते च बाहू, (१५) ईषदुत्फुल्ला-वतंस-कह्लारकोरको गङ्गावर्त्तसनाभिः (१६), नाभिः दूरीकृत-योगिमनोरथो चैत्ररथोऽतिघनं जघनं (१७) जयस्तम्भभूते

---

(१२) सकलेति। सकलेषु सैनिकाङ्गेषु सैन्यापत्येषु मध्ये वीरः प्रधानयोधः। मलयसमीरः दक्षिणानिलः निःश्वासः तस्या इत्यनेनान्वयः। एवमपि सर्वत्र।

(१३) पथिकेति। पथिकाः प्रोषिताः पान्थाः तेषां हृदयस्य यद्दलनं पाटनं तस्मिन् करवालः कृपाणः असिस्वरूपः इत्यर्थः, प्रवालः नवपल्लवः अधरबिम्बं बिम्बतुल्यौष्टम्। "प्रवालोऽस्त्री विद्रुमे नवपल्लवे" इति रभसः।

(१४) विजयेति। विजयशङ्ख एव बन्धुरा उन्नतावनता, लावण्यधरा लावण्यं धरतीति धृञः अच्, स्त्रियामाप्। लावण्यपूर्णेत्यर्थः, लावण्यलक्षणन्तु—"मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते॥" इति। कन्धरा ग्रीवा पूर्णकुम्भौ तदाकारितौ स्थूलावित्यर्थः। तयोस्तुल्यरूपत्वात् साम्यं, चक्रवाकानु-कारौ चक्रवाकसदृशौ पयोधरौ स्तनौ।

(१५) ज्येति। ज्यायमाने ज्या धनुर्गुणः सेवाचरत इति क्यङ्, मौर्वीसदृशे, मार्दवेन मृदुत्वेन असमाने असदृशे बिसलते मृणालतन्तू तस्या बाहू समभूतामिति विभक्तिविपरिणामेनान्वयः।

(१६) ईषदिति। ईषत् किञ्चित् उत्फुल्लः विकस्वरः अवतंसः कर्णपूरीकृत इत्यर्थः, कह्लारकोरकः कह्लारं सौगन्धिकं "सुंधी" इति वङ्गीयाः। तस्य कोरकः कुड्मलः उत्फुल्लत्वेन तत्कोरकस्य नाभितुल्यदृश्याकारत्वम्। "कोरकोऽस्त्री कुड्मलेऽपि" इति मेदिनी। गङ्गाया आवर्त्तः जलभ्रमः "आवर्त्त आवर्त्तने स्याच्चिन्तने जलभ्रमौ भ्रमौ" इति विश्वः। तस्य सनाभिः सदृशः।

(१७) दूरीकृतेति। दूरीकृतः निराकृत इत्यर्थः, अपनीतः योगिनां संयमिनां मनोरथः योगाभिलाष इत्यर्थः, येन तादृशः योगिजन-योगभंशकारक इति भावः। चैत्ररथः कुबेरस्योद्यानं, जैत्र इति पाठे जयनशील इत्यर्थः। अतिघनम् अतिस्निग्धः।

सौन्दर्य्यभूते विघ्नित-यतिजनारम्भे रम्भे चोरुयुगम्, आतपत्र सहस्रपत्रं पादद्वयं (१८) मस्त्रभूतानि प्रसूनानि तानि इतराणि अङ्गानि समभूवन्निव (१९)। विजितामरपुरे पुष्पपुरे निवसता सा वसुमती वसुमतीव मगधराजेन यथासुखमन्वभावि (२०)। तस्य राज्ञः परमविधेयाः (२१) धर्मपाल-पद्मोद्भव-सितवर्मनामधेया धीरधिषणावधीरितविबुधाचार्य्यविचार्य्यकार्य्यसाहित्याः कुलामात्यास्त्रयोऽभूवन् (२२)।

---

जघनस्यातिघनत्वात् तत् माद्दृश्यम्। चेवरयमत्र योगिजनानाम् अतिलोभनीयत्वात् योगभंगसम्भवात् दूरीकृतेत्यादिविशेषणं योज्यम्। स्त्रीकट्या अग्रभागो जघनं "जघनञ्च स्त्रियाः श्रोणिः पुरोभागे कटावपि" इति मेदिनी।

(१८) जयस्तम्भभूतेति। जयरूपः स्तम्भः स्थूणा तत् भूते युक्तेत्यर्थः। सौन्दर्य्यभूते लावण्ययुक्ते। विघ्नितः विहतः योगिजनानां यतीनाम् आरम्भो योगाभ्यासरूपो याभ्यां तादृशे। एकस्याः मीनकेतनस्तम्भत्वेन, इतरस्याः सौन्दर्य्यवत्त्वेन तथात्वम्, रम्भा कदली, विद्याधरी च। ऊर्व्वोर्युगमूरुयुगम् आतपत्रं छत्रं, तद्रूपं सहस्रपत्रं कमलम् एव पादद्वयम्। "सहस्रपत्रं कमलम्" इत्यमरः।

(१९) अस्त्रेति। असाने क्षिप्यते इति अस्त्रः तत्, अस्त्रं तत् भूतानि तद्रूपाणीत्यर्थः। प्रसूतानि कुसुमानि। मदनं विनष्टं दृष्ट्वा तस्य अनुचरो भ्रमरादयो भ्रान्त्या वसुमतीं कन्दर्पसवर्णीं रतिं मन्यमानाः तस्याः सर्वाङ्गरूपेण परिणमन्ति स्मेवेति तात्पर्य्यः। तानि इतराणि अन्यानि अङ्गानि अवयवानि समभूवन्निव 'भूस त्तायम्' इति धातो लुङि रूपम्।

(२०) विजितेति। विजितं स्वैभवेन तिरस्कृतममरपुरमिन्द्रनगरी येन तस्मिन्। पुष्पपुरे तदाख्ये नगरे निवसता वासं कुर्व्वता मगधराजेन सह सा प्रसिद्धा वसुमती वसुमती वसुन्धरेव। यथासुखं सुखमनतिक्रम्य। अन्वभावि भुक्ता।

(२१) तस्येति। तस्य राज्ञः राजहंसस्येत्यर्थः। परमविधेया अतिवशंवदा विनयग्राहिणो वा। "विधेयो विनयग्राही" इत्यमरः।

(२२) धर्म्मेति। नामभिः धर्म्मपाल-पद्मोद्भव-सितवर्म्मन इति। धीराभिः गम्भीराभिः धिषणाभिः बुद्धिभिः अवधीरितम् अवज्ञातं विबुधाचार्य्यस्य सुरगुरोः विचार्य्यस्य कार्य्यस्य

तेषां सितवर्मणः सुमतिसत्यवर्माणौ, धर्मपालस्य सुमन्त्र-सुमित्रकामपालाः, पद्मोद्भवस्य सुश्रुतरत्नोद्भवाविति, तनयाः समभूवन् (२३)। तेषु धर्मशीलः सत्यवर्मा संसारासारतां बुद्ध्वा तीर्थयात्राभिलाषी देशान्तरमगमत् (२४)। विट-नटवारनारीपरायणो दुर्विनीतः कामपालो जनकाग्रजन्मनोः शासनमतिक्रम्य भुवं बभ्राम (२५)। रत्नोद्भवोऽपि वाणिज्य-निपुणतया पारावारतरणमकरोत् (२६)। इतरे मन्त्रिसूनवः

---

साहित्यं साहाय्यं यैः तादृशाः बृहस्पतेरपि प्राज्ञतमा सुबुद्धय इत्यर्थः। कुलामात्या वंशक्रमागताः त्रयस्त्रिसंख्यकाः मन्त्रिणः अभवन् आसन्।

(२३) तेषामिति। तेषाम् अमात्यानां मध्ये सितवर्मणः तन्नामधेयस्य सुमति-सत्यवर्माणौ तत्-संज्ञकौ, धर्मपालस्य तन्नामधेयामात्यस्य सुमन्त्र-सुमित्र-कामपालाः इति नामधेयाः, पद्मोद्भवस्य तन्नाम्नामात्यस्य सुश्रुत-रत्नोद्भवौ संज्ञौ इति एते तनयाः पुत्राः समभूवन् आसन्।

(२४) तेष्विति। तेषु अमात्यतनयेषु मध्ये सितवर्मणः पुत्रः सत्यवर्मा धर्म-शीलो धार्मिकः, सं-सरत्यस्मादिति सं-सृधातोः घञ्; मिथ्याज्ञानजन्यसंस्काररूपवासना संसारः, तस्य संसारस्य असारतां फल्गुतां "असारं फल्गु" इत्यमरः। बुद्ध्वा ज्ञात्वा तीर्थं ऋषिसेवितजलं प्रभासपुष्करादि "यदध्यासितमर्हद्भिस्तद्धि तीर्थं प्रचक्षते।" इति। तीर्थाय यात्रा गमनं तस्मिन् अभिलाषो वर्त्तते यस्य इति अभिलाषशब्दादिन्। अन्यो देशो देशान्तरम् अगमत् अयात् यातवान् इति यावत्।

(२५) विटेति। कामपालः धर्म्मपालामात्यस्य तृतीयः कुमारः, विटाः पिङ्गाः "विटोऽद्रौ लवणे पिङ्गे मूषिके लवणेऽपि च" इति मेदिनी। नटाः शैलूषाः, वारनार्यो गणिकाः, एतेषु परायणः अत्यन्तासक्तः। दुर्विनीतः अविनीतः, जनकश्चाग्र-जन्मा च जनकाग्रजन्मानौ तयोः, पितुः ज्येष्ठभ्रातुश्चेत्यर्थः। शासनं निर्देशम् अतिक्रम्य उल्लङ्घ्य भुवं धरित्रीं बभ्राम आट।

(२६) रत्नेत्यादि। रत्नोद्भवः पद्मोद्भवस्य द्वितीयकुमारः वाणिज्यं वणिक्कर्म्म वस्तुनः द्वीपान्तरे नयनं द्वीपान्तरादानयनरूपं क्रयविक्रयादि, तस्मिन् निपुणतया प्रवीणत्वेन पारावारः समुद्रः तस्य अवतरणम् अवरोहणं समुद्रगमनमित्यर्थः।

पुरन्दरपुरातिथिषु पितृषु यथापूर्वम् अन्वतिष्ठन् (२७)। ततः कदाचिन्नानाविधमहदायुधनैपुण्यरचितागण्यजन्यराजन्यमौलिपालिनिहितनिशितसायको (२८) मगधनायको मालवेश्वरं प्रत्यग्रसंग्रामघस्मरं समुत्कटमानसारं मानसारं प्रति (२९) सहेलं न्यक्कृतजलधिनिर्घोषाहङ्कारेण भेरीझङ्कारेण हठिकाकर्णनाक्रान्तभयचण्डिमानं (३०) दिग्दन्तावलवलयं विघूर्णयन् निजभरनमन्मेदिनीभरेण आयस्तभुजगराजमस्तकबलेन चतुरङ्गबलेन संयुतः संग्रामाऽभिलाषेण रोषेण महता आविष्टो निर्ययौ (३१)। मालवनाथोऽपि अनेका-

---

(२७) इतरे इत्यादि। इतरे अन्ये मन्त्रिसूनवः मन्त्रिपुत्राः पुरन्दरपुरातिथिषु स्वर्गस्थेषु सत्सु पितृषु पितृपितृव्येषु इति यावत्। यथापूर्वं पूर्वमनतिक्रम्य तथोक्तम् अन्वतिष्ठत् आचचार।

(२८) तत इति। नानाविधानां बहुप्रकाराणां महतां गरीयसाम् आयुधानाम् अस्त्राणां नैपुण्येन शिक्षाकौशलेन रचितं विहितम् अगण्यम् असङ्ख्यं जन्यं युद्धं यैः "युद्धमायोधनं जन्यम्" इत्यमरः। तादृशानां राजन्यानां क्षत्रियाणां मौलीनां किरीटानां पालिषु प्रान्तदेशेषु निहितः प्रवेशितः निशितः तीक्ष्णः सायकाः बाणा येन तथाभूतः महावीरविजितेति भावः।

(२९) मगधेति। मगधनायकः मगधनेता मालवेश्वरं मालवाख्यजनपदाधीश्वरम्। प्रत्यग्रः नवः यः संग्रामः जन्यं तस्य घस्मरः भक्षकः शत्रुजेता इत्यर्थः, 'सृघसादः क्मरच्' इति क्मरच्। तं कुत्रचित् अभिनवे संग्रामे जयशालिनमित्यर्थः। अतएव समुत्कटः समुन्नतः अतिरिक्तः,मान एव सारः यस्य तथाभूतम्, मानसार इति भूपनाम।

(३०) सहेलमिति। सहेलं सलीलया। न्यक्कृतः अवधूतः तिरस्कृतः जलधेः सागरस्य निर्घोषाहङ्कारः कलरवजनिताहङ्कारः येन तादृशेन। भेर्य्या दुन्दुभेः झङ्कारः महाशब्दः तेन हठिकस्य हठादागतस्य शब्दस्येत्यर्थः आकर्णनेन श्रवणेन आक्रान्तः आविष्कृत इत्यर्थः, भयेन चण्डिमा चञ्चलत्वं यस्य तादृशम्।

(३१) दिगिति। दिशां दन्ता बला हस्तिनः तेषां वलयं चक्रं विघूर्णयन्

नेकपयूथसनाथो विग्रहः सविग्रह इव साग्रहोऽभिमुखीभूय भूयो निर्जगाम। तयोरथ रथतुरङ्गखुरक्षुण्णक्षोणीसमुद्भूते करिघटाकटस्रवन्मदधाराधौतमूले (३२) नववल्लभवरणागतदिव्यकन्यकाजनजवनिकापटमण्डप इव (३३) वियत्तलव्याकुले धूलीपटले दिविषद्ध्वनिधिकृतान्यध्वनिपटहध्वानवधिरिताशेषदिगन्तराल (३४) शस्त्राशस्त्रि हस्ताहस्ति

---

चालयन् निजस्य स्वस्य भरेण नमन् अधोगच्छन् मेदिन्या भरः यस्य तथोक्तेन। आयन्तम् आयासेन क्लेशितं भुजगराजस्य अनन्तस्य मस्तकानां सहस्रशिरसामिति यावत् चक्रं येन तथाभूतेन। चत्वारि अङ्गानि यस्य तथोक्तं यत् बलं सैन्यं तेन हस्त्यश्वरथपादातमयेन चतुर्विधेन सैन्येन इत्यर्थः, संयुतः मिलितः संग्रामाभिलाषेण युद्धपरिकामनया महता अतिशयेन रोषेण क्रोधेन आविष्टो व्याप्ताकारः निर्ययौ गतवान्।

(३२) मालवेति। मालवनाथः अवन्तीपतिः अनेकेषां बहूनाम् अनेकपानां करिणां यूथेन सङ्घेन सनाथः सहितः। विग्रहः युद्धम्। सविग्रहः मूर्त्तिमान्। साग्रहः साभिनिवेशः संग्रामाय अत्यादरवानित्यर्थः। अभिमुखीभूय सन्मुखीभूत्वा भूयः पुनः निर्जगाम समुपार्थयौ। तयोः अथ इति च्छेदः। तयोः राजहंसमानसारयोः। रथतुरङ्गाणां रथाश्वानां खुरैः शफैः क्षुण्णा दलिता या क्षोणी मही तस्याः समुद्भूते समुत्थिते। करिणां हस्तिनां घटाः समूहाः तासां कटा गण्डाः "बहूनां घटना घटा" "कटः स्यात् कटो गण्डः" इति च हलायुधः। स्रवन्त्यः क्षरन्त्यः या मदधाराः ताभिः धौतं क्षालितं मूलं यस्य तथाभूते।

(३३) नवेति। नवाः नवीनाः ये वल्लभाः प्रियास्तेषां वरणं पतित्वेनाङ्गीकरणं तदर्थमागतो यो दिव्यकन्याजनः अप्सरासमुदायस्तस्य जवनिका तिरस्करिणीयुक्तः पटमण्डपः "प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा" इत्यमरः। केचित्तु नवाः वल्लभाः प्रियाः रणनिहता वीरा इति यावत्, रणनिहताः सद्य एव स्वर्गमायान्तीति शास्त्रादिति भावः। तेषां वरणाय आगतानां दिव्यकन्यकाजनानाम् अप्सरसामित्यर्थः, जवनिका तिरस्करिणी एव पटमण्डपः वसनचयः तस्मिन्।

(३४) वियत्तलेत्यादि। वियत्तलव्याकुले वियत् आकाशस्य तले व्याकुलं संभृतं

(३५) परस्पराऽभिहतसैन्यं जन्यमजनि (३६)। तत्र मगध-नाथः प्रक्षीणसकलसैन्यमण्डलं मालवराजं जीवग्राहमभिगृह्य कृपालुतया पुनरपि स्वराज्ये प्रतिष्ठापयामास (३७) ततः स रत्नाकरमेखलाम् इलाम् अनन्यशासनां शासत् अनपत्यतया नारायणं सकललोकैककारणं निरन्तरम् अर्चयामास (३८)। अथ कदाचित् तदग्रमहिषी देवी[वि]

---

तस्मिन् आकाशविस्तारिते इत्यर्थः। धूल्याः पांशोः पटलं चयस्तस्मिन्। दिवि स्वः सीदन्तीति दिविषदः देवाः तेषाम् अध्वनि मार्गे धिक्कृतः अन्येषां ध्वनिः यः तादृशैः पटहानां ढक्कानां ध्वनिः तैः बधिरीकृतं स्थगितम् अशेषं समस्तं दिशाम् अन्तरालं येन तथोक्तम् "स्यायशः पटहो ढक्का" इत्यमरः।

(३५) शस्त्राशस्त्रीति। शस्त्रैः शस्त्रैश्च प्रहृत्य यत् युद्धं प्रवृत्तं तत्। हस्तैः हस्तैश्च प्रहृत्य यत् युद्धं प्रवृत्तं तत् 'तत्र तेनेदं'—इति बहुव्रीहिः। 'इच्कर्मव्यतिहारे' इति इच्समासान्तः, पूर्वपददीर्घश्च।

(३६) परस्परेति। परस्परेण अन्योऽन्येन अभिहतानि सैन्यानि हस्त्यश्वादीनि यस्मिन् तथोक्तम्। जन्यं युद्धम् "युद्धमायोधनं जन्यम्" इत्यमरः। अजनि, 'जनी-प्रादुर्भावे' इति धातोः लुङि रूपम्।

(३७) तत्रेति। तत्र तादृशे युद्धे मगधनाथः मगधेश्वरः प्रक्षीणं हतं निःशेषित-मित्यर्थः। सकलं सैन्यमण्डलं यस्य तथोक्तम्। जीवग्राहं जीवस्य जीवनस्य ग्राहो ग्रहणं यस्मिन् कर्मणि तद् यथा तथा अभिगृह्य आक्रम्य धृत्वा इत्यर्थः। कृपां लातीति लाधातोः डुः, कृपालुतया दयापरवशेनेत्यर्थः। पुनरपि युद्धे सर्व्वं विजित्यपीत्यर्थः, पुनः भूयः स्वराज्ये आत्मराष्ट्रे प्रतिष्ठापयामास प्रतिष्ठितमकरोत्।

(३८) ततः इति। ततः तस्मात् स राजा रत्नाकरः समुद्रः मेखला काञ्ची कटिसूत्रमित्यर्थः, यस्याः तां तथोक्ताम्। नास्ति अन्यस्य शासनं यस्यां ताम् अनन्य-शासनाम् इलां पृथिवीम्। "इला कलत्रे सौम्यस्य धरित्र्यां गवि वाचि च" इति मेदिनी। शासत् पालयन्नित्यर्थः। अनपत्यतया सन्ततिहीनत्वेन। नारायणं नराणां विचित्रपथनुषामयनं गमनं तस्मिन् तम्। अथवा "आपो नारा इति प्रोक्ता आपो वै

'देवेन कल्पवल्लीफलमाप्नुहीति' (३९) विभातसमये सुस्वप्नम् अवलोकितवती, सा तदा (४०) दयितमनोरथपुष्पभूतं गर्भम् अधत्त (४१)। राजापि सम्पन्न्यक्कृताखण्डलः (४२) सुहृत् नृपमण्डलं समाहूय निजसम्पन्नमनोरथानुरूपं देव्याः सीमन्तोत्सवं व्यधत्त (४३)। एकदा हितैः सुहृन्मित्रपुरोहितैः सभायां सिंहासनासीनो गुणैरहीनो भालस्थलन्यस्ताञ्ज-

---

नरसूनवः ता तदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥" इति मनुः। सर्व्वेषां त्रिभुवनस्थानां लोकानां जनानामेकमद्वितीयं कारणं हेतुः। निरन्तरम् अविच्छिन्नम्, अर्चयामास आराधितवान्।

(३९) अथेति। तस्य राज्ञः अग्रमहिषी प्रधाना राज्ञी "अग्रं पुरस्तादुपरि प्रधाने च" इति मेदिनी। देवी कृताभिषेका। देवेन मगधराजेन सहार्थं वृतीया। कल्पवल्लीफलं कल्पतरुफलम्, आप्नुहि लभस्व।

(४०) विभातेति। विभातसमये प्रातःसमये। सुस्वप्नं सानन्दसम्वेशमवलोकितवती ददर्श। सा वसुमती तदा तस्मिन् समये प्रभातकाले।

(४१) दयितेति। दयितस्य पत्युः मनोरथं आकाङ्क्षा तदेव पुष्पं तस्मात् भूतः यातः तम्, यथा फलं प्रति पुष्पस्य कारणत्वं तथास्या गर्भरूपं फलं प्रति पत्युर्मनोरथस्यैव कारणत्वमिति भावः। गर्भं भ्रूणं तथा च "गर्भाशयगतं शुक्रमार्त्तवं जीवसंज्ञकम्। प्रकृतिः सविकारा च तत् सर्व्वं गर्भसंज्ञितम् ॥" इति। अधत्त 'डु धाञ् धारणपोषणयोः' इति धातोः लङ्यात्मनेपदम्।

(४२) राजेति। सम्पदा ऐश्वर्य्येण न्यक्कृतः गौणकृतः आखण्डल इन्द्रो येन। "आखण्डलस्तुराषाट्" इति हलायुधः।

(४३) सुहृदिति। सु-शोभनानि हृदयानि येषां ते तथोक्ताः। सुहृदश्च ये नृपास्तेषां मण्डलं वृन्दं समाहूय आकार्य्य सम्-आ-पूर्व्वकस्य ह्वे धातोः ल्यप्। निजसंपन्नमनोरथानुरूपं स्वकीयैश्वर्य्याभिलाषयोः सदृशमित्यर्थः। देव्याः महिष्याः सीमन्तोत्सवं तन्नामसंस्कारस्तदनुसङ्गिकमुत्सवम्। तथा च "चतुर्थे गर्भमासे सीमन्तोन्नयनम्" इति आश्वलायनः। सीमन्तः केशवेशो यस्मिन् कर्म्मण्युन्नीयते तत् सीमन्तोन्नयनम्। व्यधत्त अकरोत्।

लिना द्वारपालेन व्यज्ञापि—(४५) 'देव ! देवसन्दर्शन-लालसमानसः कोऽपि देवेन विरच्यार्चनार्हो यतिः द्वारि निवसति' इति । तदनुज्ञातेन तेन स संयमी नृपसमीपम् अनायि । (४६) भूपतिः आयान्तं तं विलोक्य सम्यग्-ज्ञाततदीयगूढ़चारभावो निखिलम् अनुचरनिकरं विसृज्य मन्त्रिजनसमेतः प्रणतमेनं मन्दहासम् अभाषत—(४७)

---

(४५) एकदेति । एकदा एकस्मिन् समये हितैः पथ्यैः "हितं पथ्ये गते धृते" इति मेदिनी । सुहृदश्च मित्राणि च पुरोहिताश्च इति द्वन्द्वः । अत्र मित्र-शब्देन स्वभूम्यन्तरितो राजा गृह्यते । सुहृन्मित्रयोरेकपर्य्यायत्वात् । "विषया-नन्तरो राजा शत्रुर्मित्रमतः परम्" इत्यमरः । यद्वा सु शोभनानि हृदयानि येषां ते सुहृदः अतिप्रशस्तहृदयाः इत्यर्थः । राज्ञां दृष्टादृष्टफलेषु कर्म्मसु पुरस्कृताः जनाः पुरोहिताः तैः सह मित्रपुरोहितानां कर्म्मधारयः । सह भान्ति अभीष्ट-निर्णयार्थमेकत्र गृहे यत्र सा सभा तस्याम् । सिंहचिह्नितासनं सिंहासनं तत्र आसीनः 'इन्द्रासः' इति आनस्य ईत् । गुणाः सत्प्रवृत्तिनिमित्ताः तैः अहीनो-ऽशून्यः 'अनवारणप्रयोजनार्थेऽ' इति तृतीया । भालस्थले ललाटदेशे न्यस्त' विन्यसितः अञ्जलिर्येन तथोक्तेन कपालबद्धाञ्जलिनेत्यर्थः । द्वारपालेन द्वाररक्षके व्यज्ञापि न्यवेदि । 'ज्ञा अवबोधने' इत्यस्य धातोः णिजन्तात् कर्म्मणि लुङ् ।

(४६) देवेति । देव हे महाराज, 'राजा भट्टारको देवः' इत्यमरः । देवस्य महाराजस्य सन्दर्शनमवलोकनं तस्मै लालसमभिलाषयुक्तं मानसं मनो यस्य स तथोक्तः । कोऽपि अज्ञातपूर्व्वो जनः देवेन भवता विरच्या करणीया या अर्च्चना पूजा तां अर्हतीति तथाभूतः । भवतोऽपि पूजनीय इत्यर्थः । यतिः सन्न्यासी "ये निर्ज्जितेन्द्रियग्रामा यतिनो यतयश्च ते" इत्यमरः । द्वारि प्रतीहारे निवसति तं देशमध्यास्ते इत्यर्थः । तस्य अनुज्ञातस्तदनुज्ञातः तेन । तेन तेन हेतुना अतएवेत्यर्थः । स द्वारस्थः संयमी यतिः नृपसमीपं भवदन्तिकम् अनायि अगामि । 'णीञ् प्रापणे' इति धातोः लुङः कर्म्मणि रूपम् । मयेति शेषः ।

(४७) भूपतिरिति । भुवः पृथिव्याः पतिः भर्त्ता स तथोक्तः । आयान्तम् आगच्छन्तं तं यतिं विलोक्य समीक्ष्य सम्यक् सुष्ठु ज्ञातोऽवगतः, तस्यायं तदीयः, गूढ़ः गुप्तः चारभावः गूढ़पुरुषकर्म्म येन सः । "चारश्च गूढ़पुरुषः" इत्यमरः—

'ननु तापस ! देशं सापदेशं भ्रमन् भवान् तत्र तत्र भवदभिज्ञातं कथयतु' इति। तेन अभाषि भूभ्रमणबलिना प्रबद्धाञ्जलिना—'देव ! शिरसि देवस्याज्ञामादायैनं निर्दोषवेशं स्वीकृत्य मालवेन्द्रनगरं प्रविश्य तत्र गूढतरं वर्त्तमानः तस्य राज्ञः समस्तम् उदन्तजातं विदित्वा प्रत्यागमम्। (४८) मानी मानसारः स्वसैनिकायुष्याऽन्तराये सम्पराये भवतः पराजयमनुभूय वैलक्ष्यलक्ष्यहृदयोऽपि वीतदयो महाकालनिवासिनं कालीविलासिनम् अनश्वरं महेश्वरं समाराध्य तपःप्रभावसन्तुष्टादस्मादेकवीरारातिघ्नीं भयदां गदां लब्ध्वा आत्मान-

---

निखिलं सर्व्वं अनुचरनिकरं अनु पश्चात् चरन्ति ये ते अनुचराः अनुयायिकाः तेषां निकरं वर्गं विसृज्य त्यक्त्वा मन्त्रिजनसमेतः सचिवयुक्तः प्रणतं नम्रं एनं यतिं मन्दहासं मृदुहासेन सहितमित्यर्थः। अभाषत अवदत् 'भाष व्यक्तायां वाचि' इति धातोः लङि रूपम्।

(४८) नन्विति। ननु प्रश्ने। "ननु प्रश्नेऽप्यनुनये" इति विश्वः। तपः अस्त्यस्येति अच्; तापसः, तस्य सम्बुद्धिः। देशमत्र जातावेकवचनम्। कुरुपाञ्चालादिप्रदेशमित्यर्थः। सापदेशं सह अपदेशेन सव्याजेन छलेनेत्यर्थः। यतिवेशं विधृत्य देशान् भ्रमन् पर्य्यटन् इत्यर्थः। तत्र तत्र तेषु तेषु प्रदेशेषु। भवता अभिज्ञातं ज्ञानविषयीकृतम्; कथयतु इत्यत्र भवच्छब्दस्य कर्तृत्वेन प्रयोगात् प्रथमपुरुषः। तेन हेतुनेत्यर्थः। अभाषि अवादि 'भाष व्यक्तायां वाचि' इति धातोः कर्म्मणि लुङ्। भुवः पृथिव्याः भ्रमणे पर्य्यटने यत् बलं सामर्थ्यं तदस्यास्तीति तथोक्तेन। प्रबद्धोऽञ्जलिर्येन तथोक्तेन। देव इत्यामन्त्रणम्, राजन्नित्यर्थः। शिरसि मौलौ देवस्य भवतः आज्ञां निदेशं आदाय गृहीत्वा तव निदेशमङ्गीकृत्येत्यर्थः। एनं परिदृश्यमानं निर्दोषं दोषरहितं वेशं भूषणादिकं स्वीकृत्य गृहीत्वा मालवानां तद्देशीयानां इन्द्रः राजा मानसारः तस्य नगरं पुरं प्रविश्य गत्वा तत्र तस्मिन् नगरे गूढतरं अतिशयेन गोप्यमित्यर्थः 'द्विवचनविभज्योपपदे तरबीयसुनौ' इति तरप्। वर्त्तमानः वृतः कर्त्तरि शानच्। स्थितस्य तस्य मानसारस्य। समस्तं सर्व्वं उदन्तः वृत्तान्तः तस्य जातं समूहं निखिलां प्रवृत्तिमित्यर्थः। "वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्" इत्यमरः। विदित्वा ज्ञात्वा प्रत्यागमम् प्रत्यायासिषम् अहमिति शेषः।

मप्रतिभटं मन्यमानो महाभिमानो भवन्तमभियोक्तुम् उद्युक्तः ।(४९) ततः परं देव एव प्रमाणम्' इति । तदाऽऽलोच्य निश्चिततत्कृत्यैः अमात्यैः राजा विज्ञापितोऽभूत्—'देव ! निरुपायेन दैवसहायेन योद्धुमरातिरायाति । तस्मादस्माकं युद्धं साम्प्रतम् असाम्प्रतम् । सहसा दुर्गसंश्रयः क्रियताम्' इति । तैर्बहुधा विज्ञापितोऽपि अखर्वेण गर्वेण विराजमानो राजा तद्वाक्यमसत्यमित्यनादृत्य प्रतियोद्धुमना बभूव । (५०)

---

(४९) मानीति । परस्य उत्कर्षकल्पनेन चेतस उन्नतिर्मानं तद्विद्यत इति ताच्छील्ये णिनिः ; मानसारः मालवेश्वरः । सेनायां समवैतीति ठक् ; स्वसैनिकानां आत्मभटानां आयुष्यस्य जीवनस्य अन्तराये विघ्नभूते सम्पराये युद्धे "सम्परायः स्मृतो युद्धे" इत्यजयः । भवतः देवात् त्वत्तः इत्यर्थः । पराजयं अभिभवं 'पराजेरसोढ़' इत्यात्मनेपदम् । वैलक्ष्येण दैन्येन लक्ष्यमाक्रान्तं हृदयं यस्य स तथोक्तः । युद्धे पराजयेन निर्वेदान्तःकरण इत्यर्थः । वीतदयः वीता नष्टा दया यस्य स तथोक्तः । महाकालः शिवः तथा च तन्त्रम्—"महाकालं यजेद्देव्या दक्षिणे धूम्रवर्णकम्" इति स वसति यत्र तं दाक्षिणात्यतीर्थनिवासिनमित्यर्थः । कालीविलासिनं पार्वतीपतिं अनश्वरं नाशरहितं शाश्वतमित्यर्थः । महांश्चासावीश्वरश्चेति महेश्वरः शिवः तं समाराध्य संसेव्य संतोष्येत्यर्थः । तपसस्तदनुष्ठितस्य प्रभावः सामर्थ्यं तेन सन्तुष्टः प्रीतः तस्मात् तथोक्तात् । तस्मात् महेश्वरात् एकवीरश्चासावरातिश्च तं हन्तीति हनधातोः ठक् । भयं भीतिं ददातीति भयदां त्रासजनयित्रीं गदां आयुधविशेषां "आमयेऽप्यायुधे गदा" इति विश्वः । लब्ध्वा प्राप्य आत्मनः स्वस्य अप्रतिभटं न विद्यते प्रतिभटः प्रतियोद्धा यस्य तम् । मन्यमानः मनसि विचार्यमाण इत्यर्थः । महान् अतिशयोऽभिमानोऽहंकारो यस्य स तथोक्तः । भवन्तं देवं अभियोक्तुमभिषेणयितुं उद्युक्तः समुद्यतः ।

(५०) तत इति । ततः परं तस्मात् परम् । देवः महाराजः एव प्रमाणं कर्त्तव्याकर्त्तव्यनिर्धारणेन प्रमातेत्यर्थः । इति कथा समाप्तौ । "इति हेतुप्रकरणप्रकर्षादिसमाप्तिषु" इत्यमरः । तदा दूतमुखादवगतकाले । आलोच्य सदसदित्यवधार्य निश्चितं नीर्णीतं तत्कृत्यं तस्य शत्रोः कृत्यं कर्म्म यैस्तैः । अमात्यैः सचिवैः राजा मगधेश्वरः विज्ञापितः निवेदितः अभूत् गृतवान् 'गतिस्था—' इत्यादिना

क्षितिकण्ठदत्तशक्तिसारेः मानसारो योद्धुमनसामग्रीभूय सामग्रीसमेतोऽक्लेशं मगधदेशं प्रविवेश। (५१) तदा तदाकर्ण्य मन्त्रिणो भूमहेन्द्रं मगधेन्द्रं कथञ्चिदनुनीय रिपुभिः असाध्ये विन्ध्याटवीमध्येऽवरोधान् मूलबलरक्षितान् निवेशयामासुः। (५२) राजहंसस्तु प्रशस्तवीतदैन्यसैन्यसमेतः तीव्रगत्या निर्गत्य अधिकरुषं द्विषं रुरोध। परस्परबद्धवैरयोरेतयोः शूरयोस्तदालोकनकौतूहलागतगगनचराश्चर्य्यकारणे रणे वर्त्त-

---

लुङि परस्मैपदे सिचो लुक्। 'भूसुवोस्तिङि' इति गुणप्रतिषेधः। देव हे राजन्। नास्ति उपायं प्रतिविधानं यस्य तेन तथोक्तेन। दैवसहायेन दैवतालब्धसाहाय्येनेत्यर्थः। योद्धुं संग्रामावतारयितुं अरातिः शत्रुः आयाति आगच्छति तस्मादत एवेत्यर्थः। अस्माकं मामकानां युद्धमाहवम् साम्प्रतमिदानीं असाम्प्रतमयुक्तम्। सहसा अतर्कितेन। दुर्गः दुःखेन गच्छत्यनेनेति दुरुपसर्गात् गमः डः; 'केल्ला' इति यस्य बङ्गभाषायां प्रसिद्धिः। संश्रयः आलम्बनं क्रियतां विधीयतां देवेनेति शेषः। तैरमात्यैः बहुधा भूयोभूयः विज्ञापितोऽपि सनिर्बन्धमनुनीयतोऽपीत्यर्थः। अखर्व्वेण परिपूर्णेन गर्व्वेण मदेन विराजमानः स्थितः सन् तद्वाक्यं तेषामनुरोधं अकृत्यं कर्त्तुमनुचितमिति अनादृत्य अनादरं कृत्वा प्रतियुद्धुमना युद्धं कर्त्तुमभिलाषी 'तुमः काममनसोः' इति श्रीपतिसूत्रेण तुमः मकारलोपः।

(५१) क्षितीति। क्षितिकण्ठः महेशः तेन दत्ता अर्पिता या शक्तिः गदेत्यर्थः, सा एव सारो बलं यस्य स तथोक्तः। योद्धुमनसां युद्धार्थिनां सैन्यानां अग्रीभूय अग्रसरो भूत्वा 'तुं काममनसोऽपि' इत्यनुस्वारलोपः। सामग्रीसमेतः सामग्र्या उपायेन समेतः युक्तः अक्लेशं अकष्टेनेत्यर्थः। प्रविवेश समुपाययौ आगतवान् इति यावत्।

(५२) तदेति। तदा तस्मिन् काले तदाकर्ण्य तत् तादृशं वाक्यं आकर्ण्य श्रुत्वा मन्त्रिणः सचिवाः भूमहेन्द्रं भुवः पृथिव्याः महेन्द्रः इन्द्रः राजा तम्। मगधेन्द्रं राजहंसं कथञ्चिदनुनीय कथञ्चिद्यत्नेन प्रार्थ्येत्यर्थः। रिपुभिः शत्रुभिः असाध्ये प्रतिकारानर्हे दुर्गाह्वनीये इति यावत्। विन्ध्याटवीमध्ये विन्ध्यनामाटवी वनं तस्याः मध्यं अन्तर्वर्त्तिनं तस्मिन्। अवरोधान् अन्तःपुरिकवर्गान्। मूलबलैः प्रधानसैन्यैः रक्षितान् सदा सतर्केण रक्षितानित्यर्थः। निवेशयामासुः स्थापितवन्तः।

मालवे जयाकाङ्क्षी मालवदेशरक्षी विविधायुधस्थैर्य्यचर्य्याञ्चित-समरतुलितामरेश्वरस्य मगधेश्वरस्य तस्योपरि पुरारातिदत्तां गदां प्राहिणोत्। निशितशरशतेन शकलीकृताऽपि सा पशुपतिशासनस्य अवन्ध्यतया सूतं निहत्य रथस्थं राजानं मूर्च्छितमकार्षीत्। (५३) ततो वीतप्रग्रहा अक्षतविग्रहा वाहा रथमादाय दैवगत्या अन्तःपुरशरण्यं महारण्यं प्राविशन्। मालवनाथो जयलक्ष्मीसनाथो मगधराज्यं प्राज्यं समाक्रम्य पुष्पपुरमध्यतिष्ठत्। तत्र हेतितततिहतिश्रान्ताः अमात्या दैवगत्या अनुत्क्रान्तजीविता निशान्तवातलब्धसंज्ञाः कथञ्चिदाश्वास्य,

---

(५३) राजेति। प्रशस्तः अत्युत्कृष्टः; वीतं गतं दैन्यं यस्मात् तत् तथोक्तं; प्रशस्तञ्च वीतदैन्यञ्च तादृशं सैन्यं तेन समेतः युक्तः। तीव्रा चासौ गतिश्चेति तया निर्गत्य वहिरागत्य अधिका प्रवला रुषास्य तम्। द्विषं शत्रुं रुरोध रोधितवान्, 'रुधिरावरणे' इति धातोः लिट्। परस्परेण अन्योऽन्येन बद्धं यत् वैरं द्वेषं याभ्यां तयोः। शूरयोः वीरयोः। तयोः आलोकने दर्शने यत् कौतूहलं कौतुकं तदर्थ-मागता ये गगनचराः खेचराः तेषां आश्चर्य्यस्य विस्मयस्य कारणं हेतुः तस्मिन्। रणे युद्धे वर्त्तमाने प्रवृत्ते, जयमाकाङ्क्षते यः स तथोक्तः। मालवदेशस्य अवन्ति-प्रदेशस्य रक्षी रक्षिता। विविधानां नानाप्रकाराणां आयुधानां अस्त्राणां स्थैर्य्येण स्थिरतया चर्य्या गुरूपदिष्टानुरूपसेवाचालनमुपयोग इत्यर्थः. तया अञ्चितं युक्तं यत् समरं तेन तुलितः समीकृतः अमरेश्वरः देवेन्द्रः येन तादृशस्य। तस्य मगधेश्वरस्य राजहंसस्य उपरि सम्मुखे; पुरः दनुजः तस्य अरातिः शत्रुः शिवः तेन दत्ता अर्पिता गदा स्वनामप्रसिद्धास्त्रविशेषः, तां प्राहिणोत् अक्षिपत्। निशिताः तीक्ष्णाः ये शराः वाणास्तेषां निकरः समूहः तेन शकलीकृता खण्डितेत्यर्थः, सा गदा पशुपतिशासनस्य पशुपतिः शिवः तस्य शासनस्य निर्देशस्य अवन्ध्यतया दुर्लङ्घत्वेन सफलतयेत्यर्थः। सूतं सारथिं तल्लक्षणमाह मात्स्ये—"निमित्तशकुन-ज्ञाने हयशिक्षाविशारदः। स्वामिभक्तो महोत्साहः सर्व्वेषाञ्च प्रियंवदः॥ शूरश्च कृतविद्यश्च सारथिः परिकीर्त्तितः॥" इति। निहत्य विनाश्य रथस्थं स्यन्दनोपरि-गतं राजानं मगधेश्वरं मूर्च्छितं विगतचेतनं अकार्षीत् व्यधात् कृतवतीत्यर्थः। 'डुकृञ्करणे' इति धातोः लुङि रूपम्।

राजानं समन्तादन्वीक्ष्य अनवलोकितवन्तो दैन्यवन्तो देवीमवापुः। वसुमती च तेभ्यो निखिलसैन्यक्षतिं राज्ञोऽदृश्यत्वं चाकर्ण्योद्विग्ना शोकसागरमग्ना रमणानुगमने मतिं व्यधत्त। (५४) 'कल्याणि! भूरमणमरणमनिश्चितं किञ्च दैवज्ञकथितो मथितोद्धतारातिः सार्वभौमोऽभिरामो भविता सुकुमारः कुमारस्त्वदुदरे वसति, तस्मादद्य तव मरणमनुचितम्' इति भूषितभाषितैः अमात्यपुरोहितैः अनुनीयमानया तया क्षणं

---

(५४) तत इति। ततः अनन्तरम्। वीताः विगताः प्रग्रहाः रश्मयः येषां तादृशाः नियन्तुरभावादपहृतबन्धनरज्जवः इति तात्पर्य्यम्। अक्षतः अव्रणं विग्रहः शरीरं येषां ते तथोक्ताः। वाहाः हयाः रथं स्वनामप्रसिद्धयानं आदाय गृहीत्वा दैवगत्या स्वेच्छाक्रमेण अन्तःपुरशरणं अन्तःपुरस्य 'राजागारस्थितयोषितानां शरणं साधु। "शरणं गृहरक्षित्रोः" इत्यमरः। गृहञ्च तद्रक्षणं च इति द्वन्द्वः। प्राविशन् प्रविष्टाः। मालवनाथः मालवेश्वरः जयलक्ष्म्या विजयश्रिया सनाथः सयुक्तः, प्राज्यं पुष्कलं प्रभूतमित्यर्थः। समाक्रम्य बलेनायत्तीकृत्येत्यर्थः। पुष्पपुरं पुष्पपुरे अधितिष्ठत् 'अधिशीङ्स्थासां कर्म्म' इति अधिकरणे कर्म्मत्वम्। तत्र युद्धे हेतीनां अस्त्राणां ततयः समुदायाः तैर्हतिस्ताड़नं प्रहारस्तेन श्रान्ताः क्लान्ताः। "हेतिः स्यादायुधं ज्वाला सूर्य्यतेजःसु योषिति" इति मेदिनी। अमात्याः मन्त्रिणः दैवगत्या भाग्यवशेन अनुत्क्रान्तं अत्यक्तं जीवितं प्राणाः येषां ते। निशायाः रजन्याः अन्तोऽवसानं तत् सम्बन्धिवातः तेन मन्दं मन्दं वहनादतिशैत्येनेत्यर्थः, लब्धसंज्ञाः प्राप्तचेतनाः यैः ते। कथञ्चित् महतायासेन आयस्य धैर्य्यावष्टम्भं कृत्वा राजानं राजहंसं समन्तात् चतुर्दिक्षु अन्वीक्ष्य अन्विष्य अनवलोकितवन्तः न दृष्टवन्तः दैन्यं मनस्तापः तद्वन्तः दुःखिता इत्यर्थः। देवीं राज्ञीं "देवी कृताभिषेकायाम्" इत्यमरः। अवापुः लेभिरे प्राप्तवन्त इत्यर्थः। वसुमती महिषी तेभ्यः मन्त्रिभ्यः निखिलां समस्तानां सैन्यानां क्षतिं नाशं राज्ञः राजहंसस्य अदृश्यत्वं अदर्शनं आकर्ण्य श्रुत्वा उद्विग्ना दैन्यपरिगता। शोक एव सागरः तस्मिन् मग्ना निमज्जिता रमयतीति णिजन्तरमधातोः ल्युः, रमणः वल्लभः तस्य अनुगमनं अनुमरणं तस्मिन् मतिं बुद्धिं व्यधत्त अकरोत् कृतवतीत्यर्थः।

क्षणहीनया तु तूष्णीम् अस्थायि। (५५) अथार्द्धरात्रे निद्रालीढ़-नेत्रे परिजने विजने शोकपारावारम् अपारमुत्तर्तुम् अशक्नुवती सेनानिवेशदेशं निःशब्दलेशं शनैः अतिक्रम्य यस्मिन् रथस्य संसक्ततया तदानयनपलायनपरिश्रान्ता गन्तुम् अक्षमाः क्षमा-पतिरथ्याः पथ्याकुलाः पूर्व्वमतिष्ठन्, तस्य निकटवटतरोः शाखायां मृतिरेखायामिव क्वचित् उत्तरीयार्द्धेन बन्धनं मृति-साधनं विरच्य मर्त्तुकामाऽभिरामा वाष्पाधुरोदूरीकृतकलकण्ठा-कण्ठा साश्रुकण्ठा व्यलपत्---(५६) 'लावण्योपमितपुष्प-

---

(५५) कल्याणेति। कल्याणि शुभलक्षणान्विते, भूरमणस्य महीवल्लभस्य भूपतेरित्यर्थः, मरणं अनियतं अध्रुवं किञ्च अन्यच्च दैवं भाग्यं चिन्तयतीति दैवज्ञः ज्योतिःशास्त्रवेत्ता तेन कथितः उक्तः, मथितः विध्वस्तः उद्धतारातिः उत्कृष्ट-शत्रुर्येण तथाविधः। सार्व्वभौमः सर्व्वभूम्यधिकारी ; अभिरामः नयनानन्दः भविता भावी सुकुमारः पेशलः कुमारः राजदारकः त्वदुदरे तवजठरे वसति वर्त्तते इत्यर्थः। तस्मादतएव। अद्य साम्प्रतम्। मरणं जीवनविसर्ज्जनं अनुचितं अयुक्तम्। इति एतादृशैः भूषितं अलङ्कृतं विनयान्वितमिति यावत् भाषितं येषां तैः। अमात्यैश्च पुरोहितैश्च तैः अनुनीयमानया अनुरुद्ध्यमानया तया वसुमत्या क्षणं मुहूर्त्तं 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया। क्षणहीनया क्षणेन उत्सवेन हीना रहिता तया निरुत्सवयेत्यर्थः। तूष्णीं मौनं यथा तथा अस्थायि अवर्त्ति इत्यर्थः। 'ष्ठा गतिनिवृत्तौ' इति धातोः भावे लुङ्।

(५६) अथेति। अथ अनन्तरं अर्द्धरात्रे निशीथे निद्रालीढ़नेत्रे निद्रयालीढ़े आक्रान्ते नेत्रे लोचने यस्य तादृशे। परिजने सेवकवर्गे विजने जनशून्ये। शोक-पारावारं शोकसागरं अपारं असीमं पारयितुमशक्यं दुस्तरमित्यर्थः। उत्तर्त्तुं पारङ्गन्तुं अशक्नुवती अशक्ता। सेनाया निवेशः शिविरं तस्य देशं स्थानं तत् तथोक्तम्। नास्ति शब्दानां लेशः सम्पर्कः यत्र तत्तथोक्तम् शनैः मन्दं मन्दं अतिक्रम्य निर्गत्य यस्मिन् वटपादपे रथस्य संसक्तस्य भावः तया लग्नतया सान्द्रस्थित्या इत्यर्थः। तस्य राज्ञः आनयने यत् पलायनं तेन परिश्रान्ताः क्लान्ताः गन्तुं यातुं अक्षमाः अशक्ताः। क्षमायाः धरित्र्याः पतिः भर्त्ता तस्य रथ्याः रथवाहकाः वाहाः अश्वाः इति यावत्। पथि वर्त्मनि आकुलाः व्याकुलाः, पूर्व्वं यथा तथा अतिष्ठन् अवो-

सायक ! भूनायक ! भवानेव भाविन्यपि जन्मनि 'वल्लभो भवतु' इति, तदाकर्ण्य नीहारकरकिरणनिकरसम्पर्कलब्धाऽवबोधो मागधोऽगाधरुधिरचिरक्षरणनष्टचेष्टः स देवीवाक्यमेव निश्चिन्वानस्तन्वानः प्रियवचनानि शनैः तामाह्वयत्। सा ससम्भ्रमम् आगत्याऽमन्दहृदयानन्दप्रफुल्लवदनारविन्दा तमुपोषिताभ्याम् इव अनिमेषिताभ्यां लोचनाभ्यां पिबन्ती विकस्वरेण स्वरेण पुरोहितामात्यजनमुच्चैः आहूय तेभ्यः तमदर्शयत्। ( · )

---

वर्त्तन्तेत्यर्थः। निकटे समीपे यः वटतरुः वटपादपः तस्य शाखायां वृक्षावयवविशेषे मृति रेखायामिव मृतेः मरणस्य रेखायामिव चिह्नरूपायामिव पाशरूपलात् तस्यास्तच्चिह्नरूपलम्। क्वचित् कुत्रचिद्देशे इत्यर्थः। उत्तरीयस्य प्रावारस्य अर्द्धेन अर्द्धभागेन बन्धनं रज्जुं मृतिसाधनं वधसाधनयोग्यं विरच्य कृत्वा भर्त्तुं कामो यस्याः सा तथोक्ता। अभिरामा मनोज्ञा सुन्दरीत्यर्थः। वाचां माधुरी माधुर्यं तया दूरीकृतः तिरस्कृतः कलकण्ठायाः कोकिलायाः कण्ठो यया तादृशी। अश्रुभिः सह सास्रु तैः पूर्णः कण्ठो यस्याः सा तथोक्ता व्यलपत् अरोदीत् क्रन्दितवतीत्यर्थः।

(५७) लावण्येति। लावण्येन सौन्दर्येण उपमितः तुलितः पुष्पसायकः मदनः येन तदामन्त्रणम्। भुवः पृथिव्याः नायकः नेता तस्य सम्बुद्धिः। भवानेव त्वमित्यर्थः। भाविन्यपि आगामिन्यपि जन्मनि उत्पत्तौ वल्लभः प्रियः भर्त्तेति यावत्, भवत्विति प्रार्थनायां लोट्। तत् तादृशं करुणरवमित्यर्थः, आकर्ण्य श्रुत्वा नीहारस्य तुषारकणस्य चन्द्रस्येत्यर्थः, किरणनिकराणां मयूखसमूहानां सम्पर्केण लब्धः प्राप्तः अवबोधः संज्ञा येन तथाभूतः, मागधो मगधेश्वरः अगाधं अपरिमितं यत् रुधिराणां असृजां चिरक्षरणं बहुकालावपतनं तेन नष्टा चेष्टा यस्य तथोक्तः। स राजा देव्याः महिष्याः वाक्यं एव कण्ठस्वरमित्यर्थः। एव अवधारणे। "स्युरेवन्तु पुनर्वै वेत्यवधारणवाचकाः" इत्यमरः। निश्चिन्वानः निश्चयं कुर्वन्, तन्वानः विस्तारयन् मृदु इति यावत्, प्रियवचनानि मनोसुखानि वाक्यानि शनैः मन्दं तां राज्ञीं आह्वयत् आवाहयामास "हूतिराकारमाह्वानम्" इत्यमरः। सा वसुमती ससम्भ्रमं सत्वरं आगत्य राजसमीपमिति शेषः। अमन्दोऽदुष्टः हृदयानन्दः चित्तसन्तोषकारी अमन्दश्चासौ हृदयानन्दश्चेति तथोक्तः, तेन प्रफुल्लं सम्यक् विकशितं प्रसन्नमित्यर्थः, वदनारविन्दं मुखपद्मं यस्याः सा तथोक्ता। तं राजानं उपोषिताभ्यां

राजा निटिलतटचुम्बितनिजचरणाम्बुजैः प्रशंसितदैवमाहात्म्यैः अमात्यैः अभाणि—'देव ! रथ्यचयः सारथ्यपगमे रथं रभसात् अरण्यमनयत्' इति। 'तत्र निहतसैनिकग्रामे संग्रामे मालवपतिना आराधितपुरारातिना प्रहितया गदया दयाहीनेन ताडितो मूर्च्छाम् आगत्याऽत्र वने निशीथपवनेन बोधितोऽभवम्' इति महीपतिः अमात्यान् अकथयत् (५८)। ततो विरचितमहेन मन्त्रिनिवहेन विरचितदैवाऽऽनुकूल्येन कालेन शिबिरमानीयापनीताशेषशल्यो विकसितनिजाननारविन्दो राजा सहसा विरोपितव्रणोऽकारि। विरोधिदैवधिक्कृतपुरुषकारो दैन्यव्याप्ताकारो मगधाधिपतिः अधिकाधिः अमात्यसंमत्या मृदुभाषितया वसुमत्या मत्या कलितया

---

जातोत्कण्ठाभ्यामित्यर्थः। अनिमिषिताभ्यां स्पन्दनरहिताभ्यां लोचनाभ्यां नेत्राभ्यां पिबन्तो दर्शयन्तीत्यर्थः। विकस्वरेण ईषदुच्चेन स्वरेण रवेण पुरोहिताः पुरुधसः अमात्याः मन्त्रिणः तेषां जनः तं उच्चैः तारस्वरेणेत्यर्थः, आहूय आकार्य तेभ्यः पुरोहितादिभ्यः, अत्र क्रियायोगे चतुर्थी। तं राजानं अदर्शयत् अवालोकयत्।

(५८) राजेति। निटिलतटेन ललाटस्थलेन चुम्बितं स्पृष्टं निजचरणाम्बुजं आत्मचरणपद्मं यैः तथोक्तैः। प्रशंसितं स्तुतं दैवमाहात्म्यं महिमा यैस्तैः अमात्यैः मन्त्रिभिः अभाणि अवादि भणधातोः कर्मणि लुङ्। देव हे राजन्, रथ्यचयः रथ्यानां अश्वानां चयः समूहः सारथेः नियन्तुः अपगमे नाशे रथं स्यन्दनं रभसात् वेगात् अरण्यं वनं अनयत् प्रापयत् 'णी प्रापणे' इतिधातोः लङि रूपम्। तत्र संग्रामे निहताः विनष्टाः सैनिकाः योधाः तेषां ग्रामः समूहः यस्मिन् तथाभूते संग्रामे आहवे मालवपतिना मानसारेण आराधितः परितोषितः पुरारातिः शम्भुः येन तेन, प्रहितया प्रेरितया गदया, दयया कृपया हीनः शून्यः तेन। ताडितः प्रहृतः मूर्च्छां विचेतनां आगत्य समेत्य अत्र परिदृश्यमाने वने अरण्ये निशीथपवनेन निशावायुना बोधितः जागरितः संज्ञावान् इत्यर्थः। इति इतमन्तं यावत् महीपतिः राजहंसः अमात्यान् सचिवान् अकथयत् न्यवेदयत्। कथनार्थधातूनां द्विकर्मकत्वात् इति, अमात्यानिति कर्मद्वयम्।

न्त सम्बोधि—(५९) 'देव! सकलस्य भूपालकुलस्य मध्ये तेजोवरिष्ठो गरिष्ठो भवानद्य विन्ध्यवनमध्यं निवसतीति सलिलबुद्बुदसमाना विराजमाना सम्पत् तड़िल्लतेव सहसा एव उदेति विनश्यति च, तन्निखिलं दैवायत्तमेवाऽवधार्य्य कार्य्यम्। किञ्च पुरा हरिश्चन्द्ररामचन्द्रमुख्या महीन्द्रा ऐश्वर्य्योपमितमहेन्द्रा दैवतन्त्रं दुःखयन्त्रं सम्यगनुभूय पश्चादनेककालं निजराज्यम् अकुर्व्वन्। तद्वदेव भवान् भविष्यति, कञ्चन कालं विरचितदैवसमाधिः तिष्ठतु तावदिति' (६०)।

---

(५९) ततइति। ततः अनन्तरं विरचितः अनुष्ठितः कृत इत्यर्थः। महः पूजा सत्कारः इति यावत्, येन उत्सवमनुष्ठिता इत्यर्थः। मन्त्रिणां निवहः समूहः तेन विरचितं कृतं दैवानुकूल्यं दैवानुष्ठानं येन तेन। कालेन समयेन शिविरं कटकं सैन्यनिवासस्थानमिति यावत् आनीय प्रापयित्वेत्यर्थः। अपनीतं अपसारितं गात्रात् अशेषं बहूनीत्यर्थः, शल्यं शङ्कुः यस्य तादृशः। विकसितमुत्फुल्लं निजस्य स्वस्य आननारविन्दं मुखकमलं यस्य तथोक्तः। राजा राजहंसः सहसा शीघ्रं विरोपिताः चिकित्सिताः व्रणाः यस्य सः, शोषितक्षतदेश इत्यर्थः। अकारि व्यधायि कृत इत्यर्थः, 'डुकृञ्करणे' इति धातोः कर्म्मणि लुङ्। विरोधिना प्रतिकूलेन दैवेन भाग्येन धिक्कृतः पराकृतः पुरुषकारः पराक्रमः यस्य, तथोक्तः। दैन्येन परभिवदुःखेन व्याप्तः आकारो यस्य तथाविधः मगधाधिपतिः मगधेश्वरः, अधिका प्रबला आधिः मनोव्यथा यस्य स तथोक्तः। अतान्तं दुःखितमना इत्यर्थः। अमात्यानां मन्त्रिणां संमतिः अभिमतिः तया, मृदु कोमलं भाषितं यस्यास्तया वसुमत्या राज्ञ्या मत्या प्रज्ञया कलितया युक्तया प्रज्ञाप्रेरितयेत्यर्थः। समबोधि अवगामि समाश्वासित इत्यर्थः। 'बुध अवगमने' इति धातोः कर्म्मणि लुङ्।

(६०) देवेति। देव हे महाराज, सकलस्य समुदयस्य भूपालानां कुलं वृन्दं तस्य, मध्ये अन्तरे तेजसा वीर्य्येण वरिष्ठः श्रेष्ठः, अतिशयेन गुरुः गरिष्ठः, भवान् त्वं अद्य अधुना विन्ध्यवनमध्यं विन्ध्यनामवनं तस्य मध्यं निवसति अध्यास्ते इति एवं सलिलस्य जलस्य बुद्बुदः वारिस्फोटः तत्समाना तत्सदृशी विराजमाना प्रकाशमाना सम्पत् श्रीः तड़िल्लता विद्युदेव सहसा सपदि एव निश्चितं उदेति दृक्पथमायाति, विनश्यति तिरोभवति। तत् तस्मादत एवेत्यर्थः, निखिलं सर्व्वं

ततः सकलसैन्यसमन्वितो राजहंसस्तपोविभ्राजमानं वामदेवनामानं तपोधनं निजाभिलाषाऽवाप्तिसाधनं जगाम। तं प्रणम्य तेन कृतातिथ्यस्तस्मै कथितकथ्यः तदाश्रमे दूरीकृतश्रमे कञ्चन कालमुषित्वा निजराज्याऽभिलाषो मितभाषी सोमकुलावतंसो राजहंसो मुनिम् अभाषत—'भगवन्! मानसारः प्रबलेन दैवबलेन मां निर्जित्य मद्भोग्यं राज्यं चाऽनुभवति। तद्वदहमपि उग्रं तपो विरच्य तम् अरातिम् उन्मूलयिष्यामि लोकशरण्येन भवत्कारुण्येनेति नियमवन्तं भगवन्तं प्राप्नवम्' इति (६१)। ततस्त्रिकालज्ञः तपोधनो राजानम् अवोचत्—

---

दैवायत्तं अदृष्टाधीनं अवधार्य्यं निर्णेतव्यं कार्य्यं करणीयम्। किञ्च अवान्तरे। "किञ्चारम्भे च साकल्ये प्राक्पूर्व्वस्मिन्नवान्तरे" इति मेदिनी। पुरा प्राक् हरिश्चन्द्र-रामचन्द्र इति प्रसिद्धसूर्य्यवंशीयराजनाम एतौ मुख्यौ येषां ते तथोक्ताः, महीन्द्राः भूपालाः ऐश्वर्य्येण सम्पदा उपमितः तुलितः महेन्द्रः इन्द्रः यैः तथाविधाः। दैवतन्त्रं दैवचालितं भाग्यायत्तमित्यर्थः। दुःखयन्त्रं दुःखराशिं सम्यक् साकल्येन अनुभूय लब्ध्वेत्यर्थः, पश्चात् दुःखभोगानन्तरं अनेककालं दीर्घदिनं निजराज्यं स्वराष्ट्रं अकुर्व्वन् अशासुरित्यर्थः। तद्वदिव तेषां रामचन्द्रादीनां वत् इव "वद्वा यथा तथैवैवं साम्ये" इत्यमरः। एव निश्चये। भवान् देवः भविष्यति, रामचन्द्रादयो भूपाः यथा-कथञ्चित् कालं दुःखमनुभूय पश्चात् शाश्वतं सुखं लेभिरे तथा भवानपि सुखं लप्स्यत इति भावः। कञ्चनकालं समयं तावत् शब्दयोगेनाच द्वितीया। विरचितः अनुष्ठितः दैवः देवोद्देश्यकः समाधिः ध्यानं येन। गता आधिः पीड़ा यस्य स तथोक्तः। तिष्ठतु वर्त्तस्वेत्यर्थः।

(६१) ततः तदनु सकलैः सैन्यैः समन्वितः युक्तः राजहंसः मगधेश्वरः, तपसा विभ्राजमानं दीप्यमानं वामदेवनामानं तन्नामधेयं तपः एव धनं यस्य तम्। निजस्य आत्मनः अभिलाषस्य वैरसाधनरूपमनोरथस्य अवाप्तेः सिद्धेः साधनं उपायभूत-मित्यर्थः, तदनुग्रहेणैव अरातिजयी भवितेति तात्पर्य्यम्। जगाम ययौ गत-वानित्यर्थः। तं वामदेवं प्रणम्य नमस्कृत्य तेन वामदेवेन कृतमातिथ्यं यस्य स तथोक्तः। तस्मा इति क्रियायोगे चतुर्थी। कथितं उक्तं कथ्यं कथयितुयोग्यं सर्व्वं येन तादृशः। तस्य वामदेवस्य आश्रमः तस्मिन्। दूरीकृतः अपसारितः श्रमः

'सखे ! शरीरकार्श्यकारिणा तपसा अलम्। वसुमतीगर्भस्थः सकलरिपुकुलमर्दनो राजनन्दनो नूनं सम्भविष्यति। कञ्चन कालं तूष्णीमास्व' इति। गगनचारिण्या वाण्याऽपि 'एतत्सत्य'मिति तदेवावोचि। राजाऽपि मुनिवाक्यमङ्गीकृत्याऽतिष्ठत् (६२)। ततः सम्पूर्णगर्भदिवसा वसुमती शुभमुहूर्ते सकललक्षणलक्षितं सुतमसूत। ब्रह्मवर्चसेन तुलितवेधसं पुरोधसं पुरस्कृत्य कृत्यवित् महीपतिः कुमारं सुकुमारं जातसंस्कारेण बाला-

---

क्रान्तिः यस्मिन् तादृशे। कञ्चनकालं कति दिनमित्यर्थः। उषित्वा वासं कृत्वा निजमात्मनः राज्यं राष्ट्रं तं प्रति अभिलाषो लालसा विद्यते इति णिन्। मितं पर्य्याप्तं भाषणमस्येति तान्। सोमस्य चन्द्रस्य कुलं वंशं तस्य अवतंसः शिरोभूषणभूत इत्यर्थः, राजहंसः मगधपतिः मुनिं वामदेवं अभाषत अब्रवीत् वचनानवचनमिति शेषः। भगवन् हे स्मृतिधर, तथाह—"देवाय खिलिनश्चैव नानास्मृतिधराय वै। भगवान् इति ते वाच्याः पुरुषाः स्त्रिय एव च॥" इति। मानसारः अवन्तिपतिः प्रबलेन प्रभूतबलवता दैवबलेन दैवसहायेन मां निर्जित्य पराभूय मत्भोग्यं मया भोग्यं भोक्तव्यं 'भोज्यं भक्ष्ये' इति जकारस्य गकारः। राज्यं राष्ट्रं अनुभवति भुङ्क्ते इत्यर्थः। तद्वत् तस्य तुल्य इत्यर्थः। उग्रमुत्कटं तपः देवताराधनरूपमित्यर्थः। विरच्य कृत्वा तं मज्जेतारं अरातिं शत्रुं उन्मूलयिष्यामि उन्मूलयितुमुद्यतोऽस्मि। लोकानां शरणे रक्षणे साधु तेन। "शरणं गृहरक्षित्रोः" इति मेदिनी। भवतः कारुण्यं दया तेन। इति हेतोः नियमवन्तं व्रतिनं भगवन्तं षडैश्वर्य्यशालिनं आप्तवम् अलभि।

(६२) तत इति। ततःपरम्. त्रिकालज्ञः त्रि भूतभविष्यद्वर्त्तमानकालं जानातीति जनेर्डः। तपोधनः तापसः राजानं राजवाहनं अवोचत् अभाषिष्ट 'वच भाषणे' इति धातोः लुङि रूपम्। सखे इति राज्ञः अत्यातिदरसूचक सम्बुद्धिः। शरीरस्य कायस्य कार्श्यं कृशस्य भावः तत् करोतीति तेन, तपसा तपानुष्ठानेन अलं व्यर्थं किमित्यर्थः। अलं शब्दयोगेनात्र तृतीया। "अलं भूषणपर्य्याप्तिवारणेषु निरर्थके" इति मेदिनी। वसुमत्याः महिष्याः गर्भः तस्मिन् तिष्ठतीति स्थाधातोः कः। सकलानां रिपूणां शत्रूणां कुलं गोत्रं तत्मर्दनः धर्षणकारीत्यर्थः। नन्दयति प्रीतिं जनयतीति नन्दनः पुत्रः राज्ञो नन्दनः राजनन्दनः। नूनं निश्चितम्। "नूनं तर्केऽर्थनिश्चये" इत्यमरः। भविष्यति जनयि-

लङ्कारेण च विराजमानं राजवाहननामानं व्यधत्त (६३)। तस्मिन्नेव काले सुमतिसुमन्त्रसुमित्रसुश्रुतानां मन्त्रिणां प्रमति-मित्रगुप्तमन्त्रगुप्तविश्रुताख्या महदभिख्याः सूनवो नवोद्यदिन्दुरुचयः चिरायुषः समजायन्त। राजवाहनो मन्त्रिपुत्रैरात्ममित्रैः सह बालकेलिम् अनुभवन्नवर्द्धत (६४)।

---

यतीत्यर्थः। कञ्चन कालं समयं तूष्णीं मौनं आस्स्व तिष्ठेत्यर्थः। 'आस उपवेशने' इति धातोः लोट् स्व। गगने आकाशे चरति गच्छतीति गगनचारी अशरीरी तस्य स्त्रिया तया तथोक्तया वाण्या वाचा, अपि समुच्चये, एतत् मद्याहृतं वच इत्यर्थः। सत्यं यथार्थमिति तदा तस्मिन् काले अवोचि अभाषि। ब्रूधातोः कर्मणि लुङि रूपम्। राजा राजहंसः मुनिवाक्यमङ्गीकृत्य परमार्थेन स्वीकृत्येत्यर्थः। अविष्ठत् तद्दिनमपेक्षते स्मेतिभावः।

(६३) तत इति। ततः अनन्तरम्। संपूर्णाः परिपूरिताः गर्भस्य भ्रूणस्य दिवसाः दिनानि यस्याः सा तथोक्ता। वसुमती राजमहिषी शुभमुहूर्ते मङ्गलान्विते क्षणे सकलैः लक्षणैः लक्षणाङ्कान्तैः लक्षितं युक्तं सुतं तनयं असूत प्रसूतवती 'षूङ् प्राणिगर्भविमोचने' इति धातोः लङि रूपम्। ब्रह्मवर्चसेन ब्रह्मतेजसा तुलितः समीकृतः वेधाः धाता येन तथोक्तम्। पुरोधसं पुरोहितं पुरस्कृत्य अग्रे कृत्वा कृत्यं कर्त्तव्यविषयं वेत्तीति विदः क्विप्, महीपतिः राजा कुमारं बालं सुकुमारमतिपेशलं जातसंस्कारेण अपत्यजननानन्तरानुष्ठितसंस्कारेण बालालङ्कारेण बालार्हैः भूषणैश्च विराजमानं विशेषेण शोभमानं राजवाहननामानं एतन्नामकरणं व्यधत्त अकरोत् कृतवानित्यर्थः।

(६४) तस्मिन्निति। तस्मिन्नेव काले राजपुत्रजननसमये सुमति-सुमन्त्र-सुमित्र-सुश्रुत इत्यभिधेयानां मन्त्रिणां सचिवानां यथाक्रमेण प्रमति-मित्रगुप्त-मन्त्रगुप्त-विश्रुता इति आख्याः नामानि येषां ते तथोक्ताः। महाभिख्या महती अभिख्या शोभा येषां ते तथोक्ताः। "अभिख्या नामशोभयोः" इत्यमरः। सूनवः पुत्राः नवः नूतनः उद्यन् उद्गच्छन् य इन्दुः चन्द्रः तस्य रुचिरिव रुचिर्येषां तथाभूताः प्रथमोदितविधुनिभा इत्यर्थः। चिरायुषः दीर्घायुष्मन्तः समजायन्तप्रादुरभवन्। राजवाहनः राजकुमारः मन्त्रिपुत्रैः सचिवतनयैः आत्ममित्रैः स्वबन्धुभिः सह बालकेलिं बाल्यक्रीडामनुभवन् परमार्थेनाङ्गीकुर्वन्नित्यर्थः। अवर्द्धत वृद्धिमलभतेत्यर्थः।

---

## उपहारवर्मोत्पत्तिकथा ।

अथ कदाचिदेकेन तापसेन रसेन राजलक्षणविराजितं कञ्चित् नयनानन्दकरं सुकुमारं कुमारं राज्ञे समर्प्य अवोचि—'भूवल्लभ! कुशसमिदानयनाय वनं गतेन मया काचित् अशरण्या व्यक्तकार्पण्या अश्रु मुञ्चन्ती युवती विलोकिता। 'निर्जने वने किं निमित्तं रुद्यते त्वया' इति पृष्टा सा करसरोरुहैः अश्रूणि प्रमृज्य सगद्गदं मामवोचत् (१)—'मुने! लावण्यजितपुष्पसायके मिथिलानायके कीर्त्तिव्याप्तसुधर्मणि निजसुहृदो मगधराजस्य सीमन्तिनीसीमन्तमहोत्सवाय पुत्रदारसमन्विते पुष्पपुरमुपेत्य कञ्चन कालमधिवसति, समाराधितगिरीशो मालवाधीशो मगधराजं योद्धुमभ्यगात्। तत्र प्रख्यातयोरेतयोरसंख्ये संख्ये वर्त्तमाने सुहृत्साहाय्यकं कुर्वाणो

---

(१) अथेति। अथ अनन्तरम्। कदाचित् एकस्मिन् समये तापसेन मुनिना रसेन रागेण राजानं प्रत्यनुग्रहेणेत्यर्थः। "रसो गन्धरसे स्वादे चित्तादौ विषरागयोः" इति विश्वः। राजलक्षणविराजितं तल्लक्षणयुक्तं कञ्चित् कमपि नयनानन्दकरं चक्षुरभिरामं सुकुमारं लावण्ययुक्तं कुमारं बालं राज्ञे राजहंसाय समर्प्य दत्त्वा अवोचि अभाषि वचः कर्मणि लुङ्। भुवः पृथिव्याः वल्लभः पतिः तस्य सम्बोधनम्। कुशाश्च समिधश्च तेषामानयनं ग्रहणं तस्मै। नास्ति शरणं रक्षिता यस्याः सा तथोक्ता। "शरणं गृहरक्षित्रोः" इत्यमरः।, निराश्रया इत्यर्थः। व्यक्तं प्रकटितं कार्पण्यं दैन्यं यया सा तथोक्ता। अश्रु नेत्राम्बु मुञ्चन्ती त्यजन्ती, अत्र तुदादित्वेन पाक्षिको नुम्। युवती तरुणी तथा च स्मृतिः—"आषोडशाब्दं बाला स्याद् द्वात्रिंशत् तरुणी मता" विलोकिता संदृष्टा। निर्जने जनसमागमरहिते वने अरण्ये किं निमित्तं कथं कस्मात् कारणादित्यर्थः। रुद्यते क्रन्द्यते अश्रुणि मुच्यते इत्यर्थः। इति एवं पृष्टा जिज्ञासिता सा युवती करसरुहैः कराविव सरोरुहे कमले ताभ्यां अश्रूणि चक्षुर्जलानि प्रमृज्य संशोध्य अव्यक्तं गदतीति गद्गदः कः, तेन सह वर्त्तमानं यथा तथा मां तापसं अवोचत् अकथयत्।

निजबले सति विदेहे विदेहेश्वरः प्रहारवर्मा जयवता रिपुणाऽभिगृह्य कारुण्येन पुण्येन विसृष्टो हतावशिष्टेन शून्येन सैन्येन सह स्वपुरगमनम् अकरोत् (२)। ततो वनमार्गेण दुर्गेण गच्छन्नधिकबलेन शबरबलेन रभसात् अभिहन्यमानो मूलबलाभिरक्षितावरोधः सः पलायिष्ट (३)। तदीयाऽर्भकयो-

(२) मुने इति। मुने हे तापस, लावण्येन सौन्दर्य्येण जितः पराभूतः पुष्पसायकः कामः येन तस्मिन् तथोक्ते। लावण्यलक्षणमप्याह—"मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते॥" इति। मिथिलायाः तदाख्यजनपदस्य नायकः नेता तस्मिन् तथोक्ते। कीर्त्या व्याप्ता आक्रान्ता सुधर्मा देवसभा येन तस्मिन्। सु शोभनो धर्मोऽस्यास्तीति बहुव्रीहौ धर्मस्य धर्मन् इति पुरुषोत्तमः। निजसुहृदः स्वमित्रस्य मगधराजस्य मगधपतेः सीमन्तिनी नारी तस्याः सीमन्तः संस्कारभेदः, तथा च स्मृतिः—"षष्ठेऽष्टमे वा सीमन्तः" इत्युक्तेः गर्भाधिके षष्ठेऽष्टमे मासि कर्त्तव्ये कर्म्मणि सीमन्तो बोद्धव्यः। तदर्थं महोत्सवः तस्मै। पुत्रश्च दाराश्च तैः समन्विते युक्ते पुष्पपुरं तदाख्यनगरे उपेत्य आगत्य कञ्चनकालं कतिदिनं 'उपन्वध्याङ्वसः' इति कर्मत्वम्। अधिवसति अध्यासे। समाराधितः सम्यक् तोषितः गिरीशः शिवः येन सः। मालवाधीशः मानसारः मगधराजं चन्द्रहंसं योद्धुं युद्धाय अभ्यगात् अभ्यगमत् यातवानित्यर्थः। तत्र युद्धे प्रख्यातयोः प्रसिद्धयोः एतयोः मगधराजविदर्भराजयोः असंख्ये संख्यारहिते संख्यातुमशक्ये इत्यर्थः। संख्ये संग्रामे "एकत्वादौ विचारे च संख्या क्लीवन्तु संयोगे" इति रुद्रः। वर्त्तमाने प्रवृत्ते सति सुहृत्साहाय्यकं सुहृदः मित्रस्य साहाय्यमेव साहाय्यकं स्वार्थे कप्। कुर्व्वाणः विदधन् निजबले स्वसैन्ये, विदेहे देहशून्ये विनष्टे सति इत्यर्थः। विदेहेश्वरः मिथिलापतिः प्रहारवर्म्मानामा जयवता विजयिना रिपुणा शत्रुणा मानसारेण अभिगृह्य धृत्वा कारुण्येन दयावत्तया पुण्येन शुभादृष्टवशेन विसृष्टः परित्यक्तः हतावशेषेण युद्धावशिष्टेन शून्येन विनष्टप्रायेण सैन्येन हस्त्यश्वादिसमूहेनेत्यर्थः। स्वपुरं निजनगरं तस्मिन् गमनं यानं अकरोत् व्यदधात् कृतवानित्यर्थः।

(३) तत इति। ततः ततःपरम्। वनमार्गेण अरण्यपथेन दुर्गेण दुः दुःखेन गन्तुं शक्यः तेन तथोक्तेन। गच्छन् अटन् अधिकं बलं यस्य तेन। शबराः पौण्ड्रकाः म्लेच्छविशेषा इत्यर्थः। "पुलिन्दः पत्रशबरः पौण्ड्रकः" इत्यजयः। तेषां बलं सैन्यं

र्यमजयोः धात्रीभावेन परिकल्पिताहं मद्दुहिताऽपि तीव्र-गतिं भूपतिम् अनुगन्तुमक्षमे अभूव। तत्र विवृतवदनः कोऽपि रूपी कोप इव व्याघ्रः शीघ्रं माम् आघ्रातुम् आगतवान्। भीता अहम् उदग्रग्रावणि स्खलन्ती पर्य्यपतम्। मदीयपाणिभ्रष्टो बालकः कस्यापि कपिलाशवस्य क्रोडम् अलीयत (४)। तच्छवाऽकर्षिणोऽमर्षिणो व्याघ्रस्य प्राणान् बाणो बाणासनयन्त्रमुक्तोऽपाहरत्। विलोलाऽलको बालकोऽपि शबरैः आनीय कुत्रचिदुपानीयत। कुमारमपरमुद्वहन्ती मम नन्दिनी कुत्र गता न जाने। साऽहं मोहं गता केनापि कृपालुना गोपालेन स्वकुटीरमावेश्य विरोपितव्रणाऽभवम्(५)।

---

तेन। रभसात् वेगेन अभिहन्यमानः आक्रमन्, अभि हनधातोः कर्म्मणि शानच्। मूलानि प्रधानानि बलानि सैन्यानि तैः अभिरक्षितः परिपालितः अवरोधः अन्तः-पुरिकावर्गः यस्य तथाभूतः। स प्रहारवर्म्मा पलायिष्ट अन्तरगात् अन्तर्दधे इत्यर्थः। परा पूर्व्वकस्य 'अयगतौ' इति धातोः 'उपसर्गस्यायतौ' इत्यनेन रस्य लः।

(४) तदीयेति। तस्य प्रहारवर्म्मणः इमौ तदीयौ अर्भकौ बालकौ तयोः "अर्भकः कथितो बाले" इति मेदिनी। यमजयोः यमयोः धात्र्याः उपमातुर्भावेन परिकल्पिता नियुक्ता अहं, मम दुहिता कन्यापि तीव्रगतिं तीव्रा द्रुता गतिर्यस्य तम्, त्वरितगतिमित्यर्थः। भूपतिं राजानं अनुगन्तुं पश्चात् यातुं अक्षमे अयुग्ये अभूव आवामिति शेषः। तत्र तस्मिन् समये विवृतवदनः विस्फारित-मुखः। रूपी मूर्त्तिमान् कोपः क्रोधः इव व्याघ्रः शार्द्दूलः शीघ्रं, सत्वरं मां धात्रीं आघ्रातुं आक्रमितुं आगतवान् समुपस्थितः। भीता त्रासिता उदग्रग्रावणि उन्नतम् ऊर्द्ध्वोत्थितम् अग्रं यस्य तादृशो यो ग्रावा प्रस्तरः तस्मिन् "ग्रावाणौ शैलपाषाणौ" इत्यमरः। स्खलन्ती पतन्ती पर्य्यपतम् पर्य्यशीयम्। मदीयपाणिभ्रष्टः मम हस्तात् पतितः बालकः अर्भकः। कपिलाशवस्य मृत-गोशरीरस्य क्रोडं अङ्कं अलीयत प्राविशत्।

(५) तच्छवेति। तच्छवाकर्षिणः तस्याः गोः शवस्य मृतशरीरस्य आकर्षिणः अमर्षिणः कोपपरीतस्य व्याघ्रस्य शार्द्दूलस्य प्राणान् असून् बाणः शरः बाणासन-यन्त्रमुक्तः बाणासनं धनुः तदेव यन्त्रं तस्मात् मुक्तः स्खलितः, अपाहरत्

ततः स्वस्थीभूय भूयः क्ष्माभर्त्तुः अन्तिकमुपतिष्ठासुः असहाय-तया दुहितुरनभिज्ञाततया च व्याकुलीभवामि' इत्यभिदधाना 'एकाकिन्यपि स्वामिनं गमिष्यामि' इति उक्त्वा, सा तदैव निरगात्। अहमपि भवन्मित्रस्य विदेहनाथस्य विपन्निमित्तं विषादमनुभवन् तदन्वयाङ्कुरं कुमारमन्विष्यन् तदैकं चण्डिकामणिमन्दिरं सुन्दरं प्रागाम् (६)। तत्र सन्ततमेवंविध-विजयसिद्धये कुमारं देवतोपहारं करिष्यन्तः किराता 'महीरुह-शाखाविलम्बितम् एनम् असिलतया वा, सैकततले खनन-निक्षिप्तचरणं लक्ष्यीकृत्य शितशरनिकरेण वा, अनेकचरणैः पलायमानं कुक्कुरबालकैर्वा दंशयित्वा संहनिष्यामः' इति

---

प्राग्रहात् गृहीतवानित्यर्थः। विलोलाश्चञ्चला अलकाः चूर्णकुन्तलाः क्षुद्रकेशा इत्यर्थः, यस्य तथाभूतः बालकः कुमारः अपि समुच्चये। शबरैः किरातैः आनीय गृहीत्वा कुत्रचित् अनिर्दिष्टे स्थाने उपानीयत आगृह्यत। अपरं अन्यं कुमारं बालकं उद्वहन्ती उद्गृह्णन्ती मम नन्दिनी तनया क्व अनिर्दिष्टे देशे गता याता न जाने न वेद्मि अहमिति शेषः। साहं याम् अवस्थान्तरं गता सेत्यर्थः। मोहं मूर्च्छां गता याता केनापि केचन कृपालुना दयाप्रवणेन गोपालकेन गोरक्षकेण स्वकुटीरं निजावासं आवेश्य गमयित्वा विरोपिताः तिरोहिताः व्रणाः क्षतानि यस्याः सा अभवम्। गोरक्षकयत्नेनाक्षतशरीरा यातेत्यर्थः।

(६) तत इति। अस्वस्था स्वस्थाभूत्वा स्वस्थीभूय। भूयः पुनः क्ष्माभर्त्तुः नृपतेः मिथिलेश्वरस्य अन्तिकं समीपं उपतिष्ठासुः उपस्थातुमिच्छुः असहायतया सहाय-शून्यत्वेन दुहितुः तनयायाः अनभिज्ञाततया तदुद्देशमज्ञाततया व्याकुलीभवामि उत्कण्ठितास्मि, व्याकुलीत्यत्र अभूततद्भावार्थेन च्विः। इति एवं अभिदधाना कथयन्ती, एकाकिन्यपि सहायरहितापि स्वामिनं प्रभुं गमिष्यामि यास्यामि। इति एवम् उक्त्वा व्याहृत्य सा रमणी तदैव तस्मिन्नेव क्षणे निरगात् अभ्यगमत्। भवतः मित्रं सुहृत् तस्य विदेहनाथस्य मिथिलापतेः विपन्निमित्तं आपदर्थं विषादं खेदं अनुभवन् मन्यमान इत्यर्थः। तस्य अन्वयः वंशः तस्य अङ्कुरः प्ररोहः तं तथोक्तम्। कुमारं बालं अन्विष्यन् मृगयन्। तदा तस्मिन् काले। एकं सुन्दरम् चण्डिकायाः क ाेः मणिना निर्मितं मन्दिरं मन्दिरमायतनं प्रागाम् अगमम्।

भाषमाणा मया समभ्यभाष्यन्त, 'ननु किराताः, सुघोरप्रचारे कान्तारे स्खलितपथः स्थविरभूसुरोऽहं मम पुत्रकं कुत्रचिच्छायायां निक्षिप्य मार्गान्वेषणाय किञ्चिदन्तरमगच्छम् (७)। स कुत्र गतः केन वा गृहीतः? परीक्ष्यापि न वीक्ष्यते, तन्मुखावलोकनसुखेन विना अनेकानि दिनानि अतीतानि किं करोमि? क्व गच्छामि? भवद्भिर्न किमदर्शि' इति? (८)

---

(७) तत्रेति। तत्र मणिमन्दिरे सन्ततं निरन्तरं एवंविधा प्रकारः भेदः यस्य तथाभूतो यो विजयः तस्य सिद्धिः तस्यै। कुमारं बालं देवतायाश्चण्डिकायाः उपहारं बलिं करिष्यन्तः कल्पयन्तः किराताः व्याधाः, महीरुहो वृक्षः तस्य शाखा लता तस्याम् "व्रतती तु लता प्रोक्ता लता तु शाखिनां शाखी" इति व्याडिः। विलम्बितः संलग्न इत्यर्थः तं तथोक्तम्। एनं प्रत्यक्षविषयीभूतं असिलतया खड्गेन सिकतायाः वालुकायाः इदं सैकतं तस्य तलं तस्मिन्। खनने गर्त्ते निक्षिप्तौ यदि कीलितौ चरणौ यस्य तं तथोक्तम्। लक्षीकृत्य उद्दिश्य शिताः तीक्ष्णाश्च ते शराश्च तेषां निकरः समूहः तेन। अनेकचरणैः बहुपादयुक्तैः कुक्कुरबालकैः पलायमानं एनं बालमित्यर्थः। दंशयित्वा दंशं कारयित्वा संहनिष्यामः व्यापादयिष्यामः। इति एवं भाषमाणाः व्याहरन्तः मया तापसेन समभ्यभाषन्त अभ्यधीयन्त उक्ता इत्यर्थः। ननु आमन्त्रणे। "आमन्त्रणे चापि ननु" इति विश्वः। किराताः शबराः सुघोरः अतिभयानकः प्रचारः सञ्चारो यत्र तादृशे कान्तारे दुर्गमे पथि। स्खलितः च्युतः पन्था यस्य सः तथोक्तः। स्थविरः वृद्धः भूसुरः भुवि पृथिव्यां सुरः देवः ब्राह्मण इत्यर्थः। पुत्रकमित्यत्र दयायां कप्रत्ययः। कुत्रचित् छायायां एकस्य तरोरनातपे निक्षिप्य रक्षित्वा। मार्गस्य अध्वनः अन्वेषणं गवेषणं तस्मै। किञ्चिदन्तरं व्यवधानं अगच्छम् अयाम्।

(८) स इति। स पुत्रः कुत्र कस्मिन् अज्ञाते देशे गतः गमः कर्त्तरि क्तः। केन जनेन वा विकल्पे। "वा स्याद्विकल्पोपमयोः" इति मेदिनी। गृहीतः नीतः इत्यर्थः। परीक्ष्यापि अनुसन्धानं कृत्वापीत्यर्थः। न वीक्ष्यते नावलोक्यते मयेति शेषः। तस्य पुत्रस्य मुखं तस्य अवलोकनं अवेक्षणं तेन यत् सुखं आनन्दः तेन विना ऋते 'पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्' इति तृतीया। अनेकानि बहूनि दिनानि दिवसाः अतीतानि गतानि। किं करोमि विदधामि। क्व गच्छामि

'द्विजोत्तम ! कश्चिदत्र तिष्ठति किमेष तव नन्दनः, सत्यमेव ? तदेनं गृहाण' इत्युक्त्वा दैवानुकूल्येन मह्यं तं व्यतरन्। तेभ्यो दत्ताशीः अहं बालकम् अङ्गीकृत्य शिशिरोदकादिना उपचारेण आश्वास्य निःशङ्कं भवदङ्कं समानीतवानस्मि। एनम् आयुष्मन्तं पितृरूपो भवानभिरक्षतात्' इति राजा सुहृदापन्निमित्तं शोकं तन्नन्दनवदनविलोकनसुखेन किञ्चित् सङ्कुचीकृत्य तमुपहारवर्मनाम्नाहूय राजवाहनमिव पुपोष(९)।

---

यामि। भवद्भिः युष्माभिः किं प्रश्ने। "किं कुत्सायां वितर्के च निषेधप्रश्नयोरपि" इति मेदिनी। अदर्शि अवलोकि 'दृशिर् प्रेक्षणे' इति धातोः कर्मणि लुङ्।

(९) द्विजेति। द्विजोत्तम हे ब्राह्मणश्रेष्ठ, कश्चित् बालकः अत्र चण्डिकामन्दिरे इत्यर्थः, तिष्ठति वर्त्तते, किं प्रश्ने। एषः समीपतरः तव नन्दनः तनयः। सत्यमेव स एव तव पुत्रः स्यादिति भावः। तत् तस्मात् एनं बालं गृहाण नय 'ग्रह उपादाने' इति धातोः लोटि रूपम्। दैवस्य भाग्यस्य आनुकूल्यं प्रतिकूलता तेन। अदृष्टवशेनेत्यर्थः, मह्यमिति संप्रदाने चतुर्थी। तं बालं व्यतरन् अददुः। तेभ्यः शबरेभ्यः दत्ता अर्पिता आशीर्येण स तथोक्तः। अङ्गीकृत्य स्वीकृत्य क्रोडीकृत्येत्यर्थः। शिशिरं शैत्यं यत् उदकं जलं तत् आदिर्यस्य अथवा शिशिरं तुषारः उदकं जलं तत् आदिर्यस्य तेन। उपचारेण शुश्रूषणद्रव्यसमूहेन आश्वास्य सन्तोष्येत्यर्थः। निःशङ्कं शङ्कारहितं भवदङ्कं भवतः क्रोडं समानीतवानस्मि समुपस्थितोऽस्मीत्यर्थः। एनं प्रत्यक्षगोचरम्। आयुष्मन्तं आयुः प्रशस्तिरस्तीति आयुष्मान् तम्। पितृरूपः जनकसदृशः भवान् महाराजः अभिरक्षतात् परिपालयतु। 'तुह्योस्तातङाशिष्यन्यतरस्याम्' इत्यनेन लोटि तातङ्। इति एकं अवोचि इति पूर्व्वेणान्वयः। राजा राजहंसः सुहृदः मित्रस्य आपत् विपत्तिः एव निमित्तं कारणं यस्य तथोक्तं। शोकं दैन्यं, तस्य सुहृदः नन्दनः तनयः तस्य वदनं तस्य विलोकनं वीक्षणं तज्जन्यं यत् सुखं तेन। किञ्चित् असम्यक् सङ्कुचीकृत्य क्षीणीकृत्येत्यर्थः। तं बालं उपहारवर्म्मा इति एवम् नाम्ना आख्यायेन आहूय आकार्य्य राजवाहनमिव निजौरसपुत्रमिव पुपोष बभार वृद्धिमनयदित्यर्थः।

## अपहारवर्म्मोत्पत्तिकथा ।

जनपतिः एकस्मिन् पुण्यदिवसे तीर्थस्नानाय शबरालय-निकटमार्गेण गच्छन्नबलया कयाचित् उपलालितमनुपम-शरीरं कुमारं कञ्चिदवलोक्य कौतूहलाकुलः तामपृच्छत्—'भामिनि ! रुचिरमूर्त्तिः सराजगुणसम्पूर्त्तिः असौ अर्भको भवदन्वयसम्भवो न भवति । न कस्य नयनानन्दः ? निमित्तेन केन दीनो भवदधीनो जातः ? कथ्यतां याथातथ्येन त्वया' इति । प्रणतया च तया शबर्य्या सलीलमलापि (१)—'राजन् ! आत्मपल्लीसमीपे पदव्यां वर्त्तमानस्य शक्रसमानस्य मिथिलेश्वरस्य सर्वस्वमपहरति शबरसैन्ये मद्दयितेन अपहृत्य कुमार

---

(१) जनपति इति । जनानां पतिः पालकः मगधेश्वर इत्यर्थः । एकस्मिन् अनिर्दिष्टे पुण्यदिवसे पुण्याहे पर्व्वणीत्यर्थः । तीर्थं ऋषिसेवितजलं तस्मिन् स्नानं अवगाहनं तस्मै । 'तुमर्थाच्च—' इति चतुर्थी । "यदध्यासितमर्हद्भिस्तद्धि तीर्थं प्रचक्षते" इत्युक्तेः पुण्यतोये । "तीर्थं योनौ ऽध्वरे पात्रे शास्त्रे सलिलगोचरे" इति मेदिनी । शबराणां किरातानां आलयः निवासस्थानं तस्य निकटे समीपे यः मार्गः पन्था तेन । गच्छन् चलन्, अबला स्त्री तया । उपलालितं प्रेमविधृतं अनुपमं अतुलनीयं शरीरं यस्य तं कुमारं बालं कञ्चित् कमपीत्यर्थः । अवलोक्य सन्दृश्य कौतूहलेन कौतुकेन आकुलः व्याप्तः जनपतेर्विशेषणम् । तां अबलां अपृच्छत् व्याजहरत् जिज्ञासितवानित्यर्थः । भामिनि, हे कोपने, "कोपना सैव भामिनी" इत्यमरः । कोपनाच्च कोपकारणाभावात् केवलं स्त्रीबोधार्थपरः । रुचिरा मनोज्ञा मूर्त्तिः विग्रहः यस्य स तथोक्तः । राज्ञः गुणाः तेषां संपूर्त्तिः पूरणं यस्मिन् सः असौ प्रत्यक्षीभूतः अर्भकः बालः "अर्भकः कथितो बाले" इति मेदिनी । भवतः अन्वयः वंशः तस्मात् सम्भवः उत्पन्नः । नयने नेत्रे आनन्दयति यः स तथोक्तः । निमित्तेन कारणेन केन अनिर्दिष्टेन । भवत्याः अधीनः आयत्तः, जातः प्राप्तः । कथ्यतां उच्यताम् याथातथ्येन तत्त्वतः याथार्थ्येनेत्यर्थः, त्वया भवत्या इतिशब्दः अपृच्छदित्यस्य कर्म्म पृच्छधातोर्द्विकर्म्मकत्वात् प्र प्रकर्षेण नता नम्रा तया, तया शबर्य्या किरातपत्न्या सलीलं सखेलं अलापि अभाषि 'लप व्यक्तायां वाचि' इति धातोः कर्म्मणि लुङ् ।

एष मह्यमर्पितो व्यवर्द्धत। तदवधार्य्य कार्य्यज्ञो राजा मुनिकथितं द्वितीयं राजकुमारमेव निश्चित्य सामदानाभ्यां तामनुनीयाऽपहारवर्मेत्याख्याय देव्यै 'वर्द्धय' इति उक्त्वा समर्पितवान् (२)।

---

## पुष्पोद्भवोत्पत्तिकथा।

कदाचित् वामदेवशिष्यः सोमदेवशर्मा नाम कश्चिदेकं बालकं राज्ञः पुरतो निक्षिप्याऽभाषत—'देव! रामतीर्थे स्नात्वा प्रत्यागच्छता मया काननावनौ वनितया कयापि धार्य्यमाणम् एनमुज्ज्वलाकारं कुमारमवलोक्य सादरमभाषि—रुचिरे! का त्वमेतस्मिन् अटवीमध्ये बालकमुद्वहन्ती? किमर्थमायासेन भ्रमसि' इति। वनितया तयाऽप्यलापि—'मुनिवर! कालयवननाम्नि द्वीपे कालगुप्तो नाम धनाढ्यो वैश्यवरः कश्चिदस्ति। तन्नन्दिनीं नयनानन्दकारिणीं सुवृत्तां नाम एतस्माद्द्वीपादागतः कश्चिन्मगधनाथमन्त्रिसम्भवो रत्नोद्भवोनाम रमणीय-

---

(२) राजन्निति। राजन् हे भूपाल, आत्मनः स्वस्य पल्लीग्रामः तस्य समीपे सविधे "पल्ली कुटी ग्रामकयोः" इति विश्वः। पदव्यां पथि वर्त्तमानस्य गच्छत इत्यर्थः। शक्रसमानस्य इन्द्रकल्पस्य मिथिलेश्वरस्य विदेहराज्ञः प्रहारवर्म्मणः सर्व्वस्वं सर्व्वद्रव्यं अपहरति हृते सति शवरसैन्ये किरातयोद्धरि मद्दयितेन मम भर्त्रा अपहृत्य चोरयित्वा एष पुरोवर्त्ती कुमारः बालः मह्यमिति दानार्थधातुयोगे चतुर्थी। अर्पितः दत्त इत्यर्थः। व्यवर्द्धत: वृद्धिं प्राप्तः। तत् पूर्व्वोक्तं वाक्यं अवधार्य्य श्रुत्वा कार्य्यज्ञः कर्म्मकुशलः राजा नृपतिः मुनिकथितं ऋषिणाव्याहृतं द्वितीयं अपरमेकं राजकुमारं राजपुत्रं एव निश्चित्य अवधार्य्य सामदाने राज्ञः नीतिविशेषौ ताभ्यां तां स्त्रियं अनुनीय सन्तोष्य अपहारवर्म्मा इत्याख्याय इति नाम कृत्वा देव्यै राज्ञ्यै वर्द्धय वृद्धिं नय इति एवं उक्त्वा समर्पितवान् ददौ।

गुणालयो भ्रान्तभूवलयो मनोहारी व्यवहारी उपयम्य सुवस्तुसम्पदा श्वशुरेण सम्मानितोऽभूत् (१)। कालक्रमेण नताङ्गी गर्भिणी जाता। ततः सहोदरविलोकनकौतुकेन रत्नोद्भवः कथञ्चित् श्वशुरमनुनीय चपललोचनयाऽनया सह प्रवहणम् आरुह्य पुष्पपुरम् अभिप्रतस्थे। कल्लोलमालिकाभिहतः पोतः समुद्राम्भसि अमज्जत् (२)। गर्भभरालसां तां

---

(१) कदाचिदिति। वामदेवस्य तन्नामधेयस्य मुनेः शिष्यः छात्रः सोमदेवशर्मानाम नाम्ना सोमदेव इत्यर्थः। कश्चित् कमपि एकं बालकं शिशुं राज्ञः नृपतेः पुरतः अग्रे निक्षिप्य स्थापयित्वा अभाषत अवदत्—देव हे राजन् "राजा भट्टारको देवः" इत्यमरः। रामतीर्थे तदाख्ये तीर्थे स्नात्वा अवगाह्य प्रत्यागच्छता प्रतिनिवर्त्तमानेन काननस्य वनस्य अवनिः भूमिः तस्मिन् वनितया योषिता कयापि अपरिचितयापीत्यर्थः। धार्य्यमाणं गृह्यमाणं एनं समीपतरं उज्ज्वलाकारं दीप्तिमन्तं कुमारं बालं अवलोक्य दृष्ट्वा सादरं आदरातिशयेनेत्यर्थः। अभाषि अवोचि—स्थविरे हे सुन्दरि, अटवीमध्ये अरण्ये बालकं अर्भकं उद्वहन्ती धारयन्ती किमर्थं कथं आयासेन अतिकष्टेन भ्रमसि चरसि इति। वनितया स्त्रिया अत्रापि अभाषि— मुनिवर, हे ऋषिश्रेष्ठ, "देवाद्वृते वरः श्रेष्ठे" इत्यमरः। तथा च "तपोभिरिष्यते यस्तु देवेभ्यः स वरो मतः" इति। कालयवनगाम्नि तदाख्ये द्वीपे अन्तरीपे कालगुप्तो नाम नाम्ना कालगुप्त इत्यर्थः। धनाढ्यः महर्द्धिसम्पन्नः वैश्यवरः वणिक्श्रेष्ठः कश्चित् कोऽपि अस्ति वर्त्तते। तस्य नन्दिनी पुत्री तां तथाभूताम्। नयनयोरानन्दं सौख्यं करोतीति तथाभूताम्। सुवृत्तां नाम तदाख्याम्। एतस्माद्द्वीपात् अन्तरीपात् आगतः समुपस्थितः। कश्चित् कोऽपि मगधनाथस्य मन्त्री सचिवः तस्मात् सम्भवः उत्पन्नः जातः इत्यर्थः। रत्नोद्भवो नाम नाम्ना रत्नोद्भव इत्यर्थः। रमणीयः मनोज्ञः गुणः तस्य आलयः आवासस्थानम्। भ्रान्तं पर्य्यटन्तं भुवः पृथिव्या वलयं चक्रं येन तथाभूतः। पर्य्यटितपृथिवीमण्डल इत्यर्थः। मनोहारी मनोऽभिरामः। व्यवहारी वाणिज्यकार्य्यपरः, उपयम्य परिणीय विवाहं कृत्वेति यावत्। सुवस्तुसम्पदा शोभनद्रव्यसमृद्ध्या श्वशुरेण पत्नीपित्रा सम्मानितः अर्चितः अभूत् आसीदित्यर्थः।

(२) कालेति। कालक्रमेण प्राप्तकालेन 'प्रकृत्यादिभ्यस्तृतीया' नताङ्गी नतानि नम्राणि अङ्गानि यस्या सा तथाभूता। गर्भिणी आपन्नसत्त्वा जाता प्राप्ता।

ललनां, धात्रीभावेन कल्पिताऽहं कराभ्यामुद्वहन्ती फलकम् एकमधिरुह्य दैवगत्या तीरभूमिमगमम् । सुहृज्जनसहितो रत्नोद्भवस्तत्र निमग्नो वा केनोपायेन तीरदेशमगमत् वा न जानामि । क्लेशस्य पराकाष्ठामधिगता सुवृत्ताऽस्मिन् अटवीमध्ये सुतमसूत । प्रसववेदनया विचेतना सा प्रच्छायशीतले लतातले निवसति स्म (२) । विजने वने स्थातुमशक्यतया जनपदगामिनं मार्गमन्वेष्टुम् उद्युक्तया मया विवशायास्तस्याः समीपे बालकं निक्षिप्य गन्तुम् अनुचितमिति कुमारोऽपि आनायि' इति । तस्मिन्नेव क्षणे वन्यो

---

ततः तत:परम् । सोदरः समानोदर्यः तस्य विलोकने दर्शने यत् कौतुकं औत्सुक्यं तेन । रत्नोद्भवः वणिक्पुत्रः कथञ्चित् अतियत्नेनेत्यर्थः । अनुनीय प्रसाद्य चपललोचनया चपले चञ्चले लोचने नेत्रे यस्याः तथोक्तया अनया पत्न्या सह सार्द्धं प्रवहणं पोतम् । पुष्पपुरं तदाख्यनगरम् । अभिप्रतस्थे अभिययौ । 'समवप्रविभ्यः स्थः' इति आत्मनेपदम् । कल्लोलाः महातरङ्गाः तेषां मालिकाः निचयाः ताभिः अभिहतः ताड़ितः पोतः अर्णवयानम् । अमज्जत् 'टुमस्जो शुद्धौ' इति धातोः लङि रूपम् । शुद्ध्यतेऽनयेति शुद्धिरवगाहनमित्यर्थः । आप्लवो वा ।

(२) गर्भेति । गर्भस्य भरः भारः तेन अलसां जडाम् । ललनां वधूम् । धात्रभावेन उपमातृरूपेण कल्पिता सज्जिता कराभ्यां हस्ताभ्यां उद्वहन्ती धारयन्ती फलकं काष्ठखण्डं अधिरुह्य आरोहणं कृत्वा दैवगत्या भाग्यवशेन तीरभूमिं तटं अगमम् आप्नवम् । सुहृज्जनसहितः आत्मीयबन्धुबान्धवयुक्तः । तत्र उदधौ निमग्नः अन्तःप्रविष्टः वा पश्चान्तरे । "वास्यात् विकल्पोपमयोः" इति मेदिनी; केन उपायेन उपगमेन तीरदेशं तटभूमिम् अगमत् अयास्त् वा किंवा न जानामि न जाने । क्लेशस्य दुःखस्य परां काष्ठाम् अतिशयम् अधिगता प्राप्ता सुवृत्ता वणिक्पत्नी अस्मिन् पुरोवर्तिनि अटवीमध्ये अरण्ये सुतं पुत्रं असूत, अजनयत् प्रसूतवतीत्यर्थः । 'षूङ् प्राणिगर्भविमोचने' इति धातोः लुङ् । प्रसवकाले या वेदना तया विचेतना संज्ञाहीना सा सुवृत्ता प्रच्छायशीतले प्रकृष्टा छाया यस्मिन् तेन शीतलेन शैत्येन लतातले शाखानीडे "व्रतती च लता प्रोक्ता लता तु शाखिनां शाखो" इति व्याडिः । निवसतिस्म उवास ।

वारणः कश्चित् अदृश्यत। तमवलोक्य भीता सा बालकं निपात्य प्राद्रवत्। अहमपि समीपलतागुल्मके प्रविश्य परीक्षमाणोऽतिष्ठम्। निपतितं बालकं पल्लवकवलमिव आददति गजपतौ कण्ठीरवो भीमरवो महाग्रहेण न्यपतत्। भयाकुलेन दन्तावलेन झटिति वियति समुत्पात्यमानो बालको न्यपतत्। चिरायुष्मतया स चोन्नततरुशाखासमासीनेन वानरेण केनचित् पक्कफलमनीषया परिगृह्य फलेतरतया विततस्कन्धमूले निक्षिप्तोऽभूत्। सोऽपि मर्कटः कुत्रापि अगात् (४)। बालकेन सत्त्वसम्पन्नतया सकलक्लेशसहेन

---

(४) विजन इति। विजने जनशून्ये वने अरण्ये स्थातुमशक्यतया निवासायोग्यतयेत्यर्थः। जनपदः देशः तद्गामिनं गच्छन्तं मार्गं पन्थानं अन्वेष्टुं मृगयितुं उद्युक्तया कृतप्रयत्नतयेत्यर्थः। विवशायाः विह्वलायाः तस्याः सुवृत्तायाः समीपे अन्तिके बालकं अर्भकं निक्षिप्य उज्झित्य गन्तुं यातुं अनुचितं अयुक्तं इति हेतोः कुमारोऽपि बालकोऽपि आनायि आपि 'णीञ् प्रापणे' इति धातोः आङ्पूर्वकस्य कर्म्मणि लुङ्। तस्मिन्नेव तदवसरे वन्यः वने भवो वन्यः वारणो हस्ती। अदृश्यत दृष्टिपथमायात इत्यर्थः। 'दृशिर् प्रेक्षणे' इति धातोः कर्म्मणि लङ्। तं करिणं अवलोक्य दृष्ट्वा भीता त्रस्ता बालकं अर्भकं निपात्य प्रच्याव्य त्यक्त्वेत्यर्थः। प्राद्रावत् अधावत् शीघ्रगतया अव्रजदित्यर्थः। लताभिः व्रततिभिः गुल्मकः काण्डशून्योद्भिदः, तस्मिन्। अल्पार्थे कप्रत्ययः। "अप्रकाण्डे स्तम्बगुल्मौ" इत्यमरः। प्रविश्य तदन्तरिते भूत्वेत्यर्थः। परीक्षमाणः प्रतीक्षमाण इत्यर्थः। अतिष्ठम् अपेक्षेतेत्यर्थः। पल्लवं किसलयं यथा कवलं ग्रासं करोति तद्वदेवेत्यर्थः, आददति गृह्णाति गजपतौ करिश्रेष्ठे कण्ठीरवः केशरी भीमः भयङ्करः रवो रावं यस्य स तथोक्तः। महाग्रहेण महता यत्नेन न्यपतत् समुपागमदित्यर्थः। भयाकुलेन त्रासपर्य्याकुलितेन दन्तावलेन हस्तिना "दन्ती दन्तावलो हस्ती" इत्यमरः। झटिति शीघ्रं वियति शून्ये समुत्पात्यमानः पर्य्युत्क्षिप्यमाणः बालकः शिशुः न्यपतत् पपात। चिरायुष्मत्तया दीर्घजीवितया स बालकः उन्नतः महान् तरुः पादपः तस्य शाखा लता तस्मिन् समासीनः समारूढः तेन तथोक्तेन वानरेण मर्कटेन पक्कफलमनीषया पक्कफलबोधेन 'मनस ईषा' इति शकन्ध्वादित्वात्

अभावि। केशरिणा करिणं निहत्य कुत्रचिदगामि। लता-गृहान्निर्गत्य अहमपि तेजःपुञ्जं बालं शनैः 'अवनीरुहात् अवतार्य्य वनान्तरे वनितामन्विष्याऽविलोक्य एनमानीय गुरवे निवेद्य तन्निदेशेन भवदन्तिकम् आनीतवानस्मि' इति। सर्व्वेषां सुहृदाम् एकदैवानुकूलदैवाभावेन महदाश्चर्य्यं बिभ्राणो राजा 'रत्नोद्भवः कथमभवत्' इति चिन्तयन् तन्नन्दनं पुष्पोद्भवनामधेयं विधाय तदुदन्तं व्याख्याय सुश्रुताय विषादसन्तोषौ अनुभवन् तदनुजतनयं समर्पितवान्। (५)

---

सलोपः। परिगृह्य धारयित्वा फलितरतया फलादितरदिति दृष्ट्वा विततस्य विस्तृतस्य स्कन्धस्य काण्डस्य मूले तले निक्षिप्तः त्यक्तः अभूत् आसीत्। स गृहीतबालकः मर्कटः वानरः कुत्रापि अज्ञातदेशे अगात् अगमत् गतवानित्यर्थः।

(५) बालकेनेति। सत्त्वेन आयुषा सम्पन्नः अन्वितः तस्य भावस्तया "सत्त्वं पिशाचादौ गुणे प्राणबलजन्तुषु चेतसि" इत्यजयः। संकलक्लेशसहेनाखिलकष्ट-सहिष्णुना अभावि 'भू सत्तायाम्' इति धातोः लुङ्। केशरिणा सिंहेन करिणं गजं निहत्य व्यापाद्य कुत्रचित् प्रदेशे अगामि 'गमॢ गतौ' इति धातोः कर्म्मणि लुङ्। लतागृहात् कुञ्जात् "निकुञ्जकुञ्जौ वा क्लीवे लतादिपिहितोदरे" इत्यमरः। निर्गत्य बहिरेत्य। तेजःपुञ्जं तेजसः प्रभावस्य पुञ्जं समूहं तं तथोक्तं बालं शिशुं शनैः शीघ्रम् अवनीरुहात् वृक्षात् अवतार्य्य संगृह्येत्यर्थः। वनान्तरे अन्यत् वनं वनान्तरं तस्मिन् वनितां स्त्रियं अन्विष्य संमृग्य अविलोक्य न दृष्ट्वा एनं बालं कथितानुकथने इदमो-द्वितीयायां रूपम्। आनीय गृहीत्वा गुरवे उपाध्यायाय निवेद्य विज्ञाप्येत्यर्थः, क्रिया-योगाच्चतुर्थी। तन्निदेशेन तस्य गुरोः निदेशः आज्ञा तेन। भवदन्तिकं भवतः समीपम् आनीतवान् परिगृह्यसमुपस्थितवानित्यर्थः। सर्व्वेषां सकलानां सुहृदां आत्मीयाना-मित्यर्थः। एकदैव एकस्मिन्नेव काले अनुकूलदैवाभावेन दैवस्य प्रातिकूल्येनेत्यर्थः। महत् अतिशयम् आश्चर्य्यं विस्मयं बिभ्राणः प्रीयमाणः 'डुभृञ् धारणपोषणयोः' इति धातोः कर्त्तरि शानच्। राजा नृपतिः रत्नोद्भवः तदाख्यः कथं केन अभवत् आसीत् रत्नोद्भवस्य का गतिः किमभवदित्यर्थः। इति एवं चिन्तयन् विस्मयन् तन्नन्दनं तस्य सुहृदः नन्दनं पुत्रम्। नन्दयतीति 'नन्द्यादिभ्यो' ल्युः। पुष्पोद्भव-नामधेयं नाम 'भागरूपनामभ्यो धेयः' इति धेयः। "नामधेयञ्च नाम च" इत्यमरः।

## अर्थपालोत्पत्तिकथा ।

अन्येद्युः कञ्चन बालकमुरसि दधती वसुमती वल्लभमभिगता । तेन 'कुतस्त्योऽयम्' इति पृष्टा समभाषत—'राजन् अतीतायां रात्रौ काचन दिव्यवनिता मत्पुरतः कुमारमेनं संस्थाप्य निद्रामुद्रितां मां विबोध्य विनीताब्रवीत्—'देवि त्वन्मन्त्रिणो धर्मपालनन्दनस्य कामपालस्य वल्लभा यक्षकन्याऽहं तारावली नाम, नन्दिनी मणिभद्रस्य, यक्षेश्वरानुमत्या मदात्मजमेनं तव तनूजस्याम्भोनिधिवलयवेष्टितक्षोणीमण्डलेश्वरस्य भाविनो विशुद्धयशोनिधेः राजवाहनस्य परिचर्याकरणाय आनीतवत्यस्मि । त्वमेनं मनोजसन्निभमभिवर्धय' इति । (१) विस्मयविकसितनयनया मया सविनयं

---

विधाय कृत्वा तदुदन्तं तस्य पुष्पोद्भवस्य उदन्तं वार्त्तां व्याख्याय वर्णयित्वा सुश्रुतः तन्नाम्ने तस्य पितृश्वाय विषादसन्तोषौ सुहृदो विपद्वार्त्तया दुःखं, तत्पुत्रप्राप्तिवार्त्तया सन्तोषः तौ अनुभवन् परिरक्षयन् तदनुजतनयं तस्य सुश्रुतस्य अनुजः अनु पश्चात् जायत इति जनेर्डः, तस्य तनयं पुत्रं समर्पितवान् ददौ ।

(१) अन्येद्युरिति । अन्येद्युः अपरेऽहनि 'सद्यपरुत्परार्यैषमः—' इति निपातः । काञ्चन कमपि बालकं शिशुम् उरसि क्रोडे दधती धारयती अभ्यस्तत्वान्नुमभावः । वसुमती राज्ञी वल्लभं दयितम् अभिगता समुपस्थिता । तेन राज्ञा कुतस्त्यः कुत्र भव इति 'अव्ययात्त्यप्' अयं बालक इति पृष्टा जिज्ञासिता महिषीति शेषः समभाषत प्रकाशयामास । राजन् स्वामिन्, अतीतायां विगतायां रात्रौ यामिन्याम् दिवि भवा दिव्या सा चासौ वनिता स्त्रीति तथोक्ता । मत्पुरतः ममाग्रे कुमारं शिशुं संस्थाप्य रचित्वा निद्रया मुद्रिता निमीलिता नयना ताम् । विबोध्य जागरयित्वा विनम्रा विनम्रा अब्रवीत् बभाषे । देवि हे राज्ञि महिष्यां आमन्त्रणम् "देवी कृताभिषेकायाम्" इति मेदिनी । तव मन्त्री सचिवः तस्य । नाम्ना धर्मपालः तस्य नन्दनः पुत्रः तस्य कामपालस्य एतन्नामधेयस्य वल्लभा प्रिया वनितेत्यर्थः । यक्षकन्या यक्षस्य देवयोनिविशेषस्य कन्या पुत्री तारावलीनाम एतत्संज्ञकेत्यर्थः । मणिभद्रस्य तत् संज्ञकस्य नन्दिनी कन्या यक्षयते इति यक्ष कर्मणि घञ् ।

सत्कृता स्वच्छी सच्ची सापि अदृश्यतामयासीत्' इति। कामपालस्य यक्षकन्यासङ्गमे विस्मयमानमानसो राजहंसो रञ्जितमित्रं सुमित्रं मन्त्रिणम् आहूय तदीयभ्रातृपुत्रम् अर्थपालं विधाय तस्मै सर्वं वार्त्ताजातं व्याख्याय आदात् (२)।

---

तेषामीश्वरः श्रेष्ठः राजेत्यर्थः कुवेरः इति यावत् तस्य अनुमत्या आज्ञाक्रमेण मदात्मजं मम आत्मनो जातः इति जनेर्डः, तम्। एनं समीपवर्त्तिनं तनूजस्य पुत्रस्य "तनुजस्तनूजः" इति पुरुषोत्तमः। अम्भोनिधिः समुद्रः स एव वलयः कटकस्तेन वेष्टितं परिव्याप्तं क्षोणीमण्डलम् अवनीचक्रं तस्य ईश्वरः निग्रहानुग्रहक्षमः तस्य तथोक्तस्य। भाविनः भविष्यतः नाद्यापि भूतस्येत्यर्थः। विशेषेण शुद्धः यशसः निधिर्यस्य तस्य तथोक्तस्य राजवाहनस्य एतन्नामधेयस्य परिचर्य्या सेवा शुश्रूषेति. यावत् तां करणाय कर्तुम्। मनसि जायते इति मनोजः कामः। तस्य सन्निभः सदृशः तम् अभिवर्द्धय परिपालय पोषय इत्यर्थः।

(२) विस्मयेति। विस्मयेन आश्चर्य्येण विकसिते उत्फुल्ले नयने नेत्रे यस्याः तथोक्तया मया सविनयं विनयपूर्व्वकं सत्कृता सम्मानिता स्वच्छी सुन्दरनयना सुष्ठु नौ अक्षिणी यस्याः सा तथोक्ता, ततः सुः पूजायामिति समासान्तनिषेधेऽपि 'क्तदिकारादक्तिन' इति ङीप्। यच्ची विद्याधरी अदृश्यतामयासीत् गताभूदित्यर्थः। कामपालस्य धर्म्मपालसूनोः यक्षकन्यायाः विद्याधरीपुत्र्याः सङ्गमः मिलनं तस्मिन्। विस्मयमानम् आश्चर्य्यं मानसं मनः यस्य स तथोक्तः, राजहंसः राज्ञो नाम। रञ्जितानि मित्राणि येन तम्। सुमित्रं तन्नामधेयं मन्त्रिणं सचिवं आहूय संबोध्य आकार्य्येत्यर्थः। तस्य मन्त्रिणः इदं तदीयः तस्य भ्राता सहोदरः तस्य पुत्रः सूनुः तम्। अर्थपालं एतन्नामानं विधाय दत्त्वा तस्मै मन्त्रिणे सर्व्वं साकल्यं वार्त्तायाः कथायाः जातः उत्पन्नः तथोक्तम्। व्याख्याय निर्व्वर्ण्य अदात् समर्पयामास।

---

## सोमदत्तोत्पत्तिकथा।

ततः परस्मिन् दिवसे वामदेवान्तेवासी तदाश्रमवासी समाराधितदेवकीर्त्तिं निर्भर्त्सितमारमूर्त्तिं कुसुमसुकुमारं कुमारमेकम् अवगमय्य नरपतिम् अवादीत्—(१) 'देव! तीर्थयात्राप्रसङ्गेन कावेरीतीरमागतोऽहं विलोलालकं बालकं निजोत्सङ्गतले निधाय रुदतीं स्थविराम् एकां निरीक्ष्य अवोचम् (२)—'स्थविरे! का त्वम्? अयमर्भकः कस्य नयनानन्दकरः, कान्तारं किमर्थमागता? शोककारणं किं?' इति। सा करयुगेन बाष्पजलम् उत्सृज्य निजशोकशङ्कूत्पाटनक्षममिव मामवेक्ष्य शोकहेतुमवोचत्—'द्विजोत्तम! राजहंससचिवस्य सितवर्मणः कनीयानात्मजः सत्यवर्मा

---

(१) तत इति। ततोऽनन्तरं परस्मिन् दिवसे अन्येद्युः। नाम्ना वामदेवः तस्य अन्ते समीपे वसति आवश्यकेऽणिनिः। अन्तेवासी शिष्यः "छात्रान्तेवासिनौ शिष्ये" इत्यमरः। तस्य वामदेवस्य आश्रमः मठः तस्मिन् वसति यः सः। "आश्रमो ब्रह्मचर्य्यादौ वानप्रस्थे मठे वने" इति मेदिनी। समाराधिता देवानां कीर्त्तिर्येन तादृशं देवसदृशकीर्त्तिमित्यर्थः। निर्भर्त्सिता तिरस्कृता मारस्य कन्दर्पस्य कीर्त्तिर्येन तथोक्तं न्यक्कृतमारमूर्त्तिमित्यर्थः। कुसुममिव सुकुमारम् अतिकोमलं कुमारं बालम् अवगमय्य प्राप्य नरपतिं नृपम् अवादीत् अभाषत 'वदव्यक्तायां वाचि' इति धातोः लुङि रूपम्।

(२) देवेति। देव इति राज्ञः सम्बोधनम्। तीर्थं प्रभासपुष्करादि तस्य यात्रा गमनं तस्याः प्रसङ्गेन क्रमेण "तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु" इति विश्वः। कस्य जलस्य वेरं शरीरं तस्येदमित्यण्। कावेरी दक्षिणदेशस्था काचित् पुण्यतोया नदी, तस्याः तीरं तटम् आगतः समुपस्थितः। विलोला चञ्चला अलका भङ्गुरकुन्तला यस्य तम्। "प्रधाना भङ्गुराः केशा अलकाः क्लीवपुंसयोः" इति हड्डः। बालकं शिशुं निजस्य आत्मनः उत्सङ्गतलः क्रोड़ः तस्मिन् निधाय धृत्वा रुदतीं विलपन्तीं स्थविरां वृद्धां निरीक्ष्य दृष्ट्वा अवोचं उक्तवानित्यर्थः।

तीर्थयात्राकाङ्क्षया * देशमेनमागच्छत् । स कस्मिंश्चित् अग्रहारे कालीं नाम एकस्य भूसुरस्य नन्दिनीं विवाह्य तस्या अनपत्यतया गौरीं नाम तद्भगिनीं काञ्चनकान्तिं परिणीय तस्यामेकं तनयम् अलभत (३)। काली सासूयम् एकदा धात्र्या मया सह बालमेनमेकेन मिषेण आनीय तटिन्यामेतस्यामक्षिपत्। करेणैकेन बालम् उद्धृत्यापरेणाम्भसि † प्लवमाना नदीवेगागतस्य कस्यचित्तरोः शाखाम् अवलम्ब्य तत्र शिशुं निधाय नदीवेगेन उह्यमाना केनचित् तरुलग्नेन कालभोगिना अहम् अदंशि। मदवलम्बीभूतो भूरुहोऽयम् अस्मिन् देशे तीरमगमत्। गरलस्योद्दीपनतया

---

(३) स्थविरे इति। स्थविरे इति वृद्धायाः सम्बुद्धिः। अर्भकः बालः। नयनयो आनन्दं सुखं करोति यः स तथोक्तः। कान्तारं महारण्यं "कान्तारोऽस्त्री महारण्ये बिले दुर्गमवर्त्मनि" इति मेदिनी। किमर्थं कथम् आगता उपस्थिता। शोकस्य दुःखस्य कारणं हेतुः किम् प्रश्ने "किं प्रश्नेऽपि च कुत्सायाम्" इति विश्वः। सा वृद्धा करयुगेन हस्तद्वयेन बाष्पजलं नेत्रवारि उत्सृज्य त्यक्त्वा निजस्य स्वस्य शोकः दुःखं स एव शङ्कुः शल्यं तस्य उत्पाटनम् उत्तोलनं तत् क्षमं समर्थमिव मामवेक्ष्य विलोक्य शोकहेतुं शोककारणमवोचत् उवाच। द्विजोत्तम हे ब्राह्मणवर्य्य राजहंससचिवस्य मगधनाथस्य मन्त्रिणः नाम्ना सितवर्म्मणः कनीयान् यवीयान् 'युवाल्पयोः कनन्यतरस्याम्' इति कनादेशः। आत्मनो जायतः इति जनेर्डः। पुत्रः सत्यवर्म्मा एतत् संज्ञकः। तीर्थाय यात्रा गमनं तस्य वा तदर्थं आकाङ्क्षा अभिलाषः तया, एनं प्रत्यक्षायमानं देशं प्रदेशम् आगच्छत् समुपाजगाम। स सत्यवर्म्मा। अग्रे हूयते दीयतेऽसाविति अग्रोपपदेन ह्वातेः घञ्; अग्रहारे राजप्रतिग्रहलब्धे ग्रामे कालीं नाम तन्नाम्नीम्। भूसुरस्य द्विजस्य नन्दिनीं दुहितरं विवाह्य परिणीय तस्याः कालीनाम स्त्रियः अनपत्यतया सन्तानहीनत्वेन गौरीं नाम नाम्ना गौरीति। तद्भगिनीं तस्याः काल्याः भगिनीं स्वसारं काञ्चनकान्तिं काञ्चनं स्वर्णं तदिव कान्तिं प्रभा यस्याः तां तथोक्ताम्, परिणीय विवाह्य तस्यां गौर्य्याम्। तनयं पुत्रं अलभत लब्धवान्।

---

* यात्राभिलाषेण इति पुस्तकान्तरे पाठः।

† पुस्तकान्तरे अम्भसीति पाठः विरलः।

मयि मृतायामरण्ये कश्चन शरण्यो नास्तीति मया शोच्यते इति (४)। ततो विषमविषोल्बणज्वालावलीढ़ावयवा भू- धरणीतले न्यपतत्। दयाविष्टहृदयोऽहं मन्त्रबलेन विष- थाम् अपनेतुमक्षमः समीपकुञ्जे औषधविशेषमन्विष्य प्रत्या- गच्छन्नुत्क्रान्त * जीवितां तां व्यलोकयम्। तदनु तस्याः पावकसंस्कारं विरच्य शोकाकुलचेता बालमेनमगतिमादाय सत्यवर्मवृत्तान्तश्रवणवेलायां तन्निवासाग्रहारनामधेयस्य अश्रुत- तया तदन्वेषणमशक्यम् इत्यालोच्य भवदमात्यनन्दनस्य भवानेव अभिरक्षितेति भवन्तमेनमनयम्' इति। तन्निशम्य सत्यवर्मस्थितेः सम्यगनिश्चिततया खिन्नमना राजा सुमतेः मन्त्रिणे सोमदत्तनाम तदनुजतनयम् अर्पितवान्। सोऽपि सोदरमागतमिव मन्यमानो विशेषेण पुपोष (५)।

---

(४) कालीति। सासूयं दोषाविष्कारसहितम्। धात्र्या उपमात्रा। इत्ये- कखेन। आनीय संरक्ष्येत्यर्थः। एतस्यां समीपतरायां तटिन्यां नद्याम् अचिप- चिक्षेप। करेण हस्तेन बालं शिशुं उद्धृत्य उत्तोल्येत्यर्थः। अपरेण करेण अर्ध- जले प्लवमाना तरन्ती, नदी सरित् तस्याः वेगः प्रवाहः तेन आगतः समुपस्थि- तस्य तरोः वृक्षस्य शाखां लताम् अवलम्ब्य आश्रित्य तत्र शाखायां शिशुं बालं निधाय स्थापयित्वा नदीवेगेन नदीस्रोतसा उह्यमाना नीयमानेत्यर्थः, तरुलग्न- तरुस्थितेन कालभोगिना कालसर्पेण "उरगः पन्नगो भोगी" इत्यमरः। कर्म, अदंशि कर्मणि लुङ्। मदवलम्बीभूतः ममाश्रयगतः भूरुहः वृक्षः प्रत्यचायमानः अस्मिन् देशे एतस्मिन् प्रदेशे तीरं तटम् अगमत् उपागच्छत् गरलस्य विषस्य उद्दीपनतया चैतन्येन मयि मृतायां पञ्चत्वोपगतायां अरण्ये शरण्यः आश्रयः अस्य शिशोरिति शेषः। नास्ति न विद्यते इति हेतोः "इति हेतुप्रकरणप्रकर्षादिसमाप्तिषु" इत्यमरः। शोच्यते खिद्यते।

(५) 'तत इति। विषममतिशयं विषस्य गरलस्य उल्बणं व्यक्तं तस्य ज्वाला- दाहः तेन अवलीढ़ा व्याप्ता अवयवा अङ्गानि यस्याः सा तथोक्ता। धरणीतले भूपृ-

---

* 'प्रत्यागतो व्युत्क्रान्त' इति क्वचित् पाठः।

एवं स्निग्धेन कुमारमण्डलेन सह बालकेलीरनुभवन्नधिरूढानेकवाहनो राजवाहनोऽनुक्रमेण चौडोपनयनादिसंस्कारजातम् अलभत (६)। ततः सकललिपिज्ञानं, सकल-

---

न्यपत् पपात दयया आविष्टं हृदयं यस्य स तथोक्तः। मन्त्रबलेन मन्त्रशक्त्या विषव्यथां विषविकारम् अपनेतुं दूरीकर्तुम् अक्षमः असमर्थः। समीपकुञ्जे सन्निहितनिकुञ्जे वल्ल्यादिपिहितोदरे इत्यर्थः। औषधविशेषं विषविकारप्रतिसेधकभेषजमित्यर्थः। अन्विष्य संगृह्येत्यर्थः। प्रत्यागच्छन् उपस्थितः सन् उत्क्रान्तम् उद्गच्छन्तं बहिर्यातमित्यर्थः, जीवितं जीवनं यस्याः तां तथोक्ताम्। व्यलोकयम् अपश्यम्। तदनु ततःपरम्। तस्याः स्त्रियः पावकसंस्कारम् अग्निसंस्कारं विरच्य कृत्वा चिताधिरोहणेन तस्याः शरीरस्याग्निसत्कारं विहितेत्यर्थः। शोकेन आकुलं विलोडितं चेतः यस्य स तथोक्तः। एनं समीपतरम् अगतिं गतिशून्यमनाथं बालमादाय गृहीत्वा सत्यवर्म्मणः वृत्तान्तः संवादः तस्य अवगमवगतिः तस्य वेला समयः तस्यां तथोक्तायाम्। तत् तस्य सत्यवर्म्मणः निवासः आवासस्थानं तस्य अग्रहारस्य प्रतिग्रहलब्धग्रामस्य यत् नामधेयम् आख्या तस्य अश्रुततया अवणाविषयीभूतेन। तत् तस्य ग्रामस्य अन्वेषणं अनुसन्धानम् अशक्यम् असमर्थम् इति एवं प्रकारम् आलोच्य चिन्तयित्वा भवतः अमात्यः मन्त्री तस्य नन्दनः पुत्रः तस्य तथोक्तस्य। भवानेव अभिरक्षिता पालयिता नान्य एवेतिभावः। इति हेतोः भवन्तं त्वामित्यर्थः। अनयम् आप्रवमित्यर्थः। तत् तादृशीं वार्तां निशम्य श्रुत्वा सत्यवर्म्मस्थितेः सत्यवर्म्मणः विषये इत्यर्थः। सम्यक् यथार्थं निश्चितया अवधारितेन खिन्नमना दुःखितान्तःकरणेन राजा राजहंसः सुमतये तन्नाम्ने मन्त्रिणे सचिवाय सोमदत्तनाम तन्नामधेयं तस्य मन्त्रिणः अनुजतनयः कनिष्ठभ्रातृपुत्रम् अर्पितवान् ददौ। स मन्त्री सोदरं भ्रातरमागतमुपस्थितमिव मन्यमानः परिगणयन् विशेषेण यत्नेन पुपोष संवर्द्धयामास।

(६) एवमिति। एवं एवंप्रकारेण स्निग्धेन एकत्रसमभिव्याहारेण कुमारमण्डलेन कुमारसमूहेन सह समं बालकेलीः क्रीडाः "द्रवकेलिपरिहासाक्रीडा" इत्यमरः। अनुभवन् परिगणयन् अधि अधिकम् आरूढानि अनेकानि वाहनानि हस्त्यश्वादीनि येन तथाभूतः। राजवाहनः कुमारः अनुक्रमेण यथाक्रमेण चौडं च उपनयनञ्च ते तथोक्ते आदी यस्य तत्संस्कारजातम् चूडोपनयनादिसंस्कारसमूहमित्यर्थः। अलभत प्राप्तवान्।

देशीयभाषापाण्डित्यं, षड़ङ्गसहितवेदसमुदायकोविदत्वं, काव्यनाटकाख्यानकाख्यायिकेतिहासचित्रकथासमन्वित*पुराणगणनैपुण्यं, धर्मशब्दज्योतिस्तर्कमीमांसादिसमस्तशास्त्रनिकरचातुर्य्यं, कौटिल्यकामन्दकीयादिनीतिपटलकौशलं, वीणाद्यशेषवाद्यदाक्ष्यं, सङ्गीतसाहित्यहारित्वं, मणिमन्त्रौषधादिमायाप्रपञ्चप्रावीण्यम् मातङ्गतुरङ्गादिवाहनारोहणपाटवं, विविधायुधप्रयोगचतुरत्वं,† चौर्य्यदुरोदरादिकपटकलाप्रौढ़त्वञ्च तत्तदाचार्य्येभ्यः सम्यक् लब्ध्वा यौवनेन विलसन्तं कलेषु अनलसं तं कुमारनिकरं निरीक्ष्य महीवल्लभः सः 'अहं शत्रुजनदुर्लभः' इति परमानन्दममन्दमविन्दत।‡ (७)

इति श्रीदण्डिनः कृतौ दशकुमारचरिते कुमारोत्पत्तिर्नाम प्रथम उच्छ्वासः।

---

(७) लत इति। लिपिरचरसंस्थानं सकलानां लिपीनां ज्ञानम्। सकलदेशीयभाषापाण्डित्यं सर्व्वदेशीयभाषाविषयेषु अभिज्ञत्वमित्यर्थः। षड्भिरङ्गैः सहितः यः वेदसमुदायः तस्मिन् कोविदत्वं पाण्डित्यम्। तथा च—"शिक्षाकल्पौ व्याकरणं निरुक्तं ज्योतिषां गणः। छन्दसां विचितिश्चैव षड़ङ्गो वेद उच्यते॥" इति। काव्यानि रघुवंशनैषधादीनि। नाटकानि शाकुन्तलोत्तररामचरितादीनि। आख्यानकानि चूर्णकानि। आख्यायिकाः वासवदत्ताकादम्बरीतिलकमञ्जरीप्रभृतयः। इतिहासाः पुरावृत्तकथनानि रामायणमहाभारतवर्णितवंशाः। चित्रकथा उपकथा तैः समन्विते युक्ते पुराणगणे मत्स्यभागवतादिपुराणनिचये नैपुण्यं दक्षता, धर्म्मशास्त्रं मन्वादिस्मृतयः। शब्दशास्त्रं व्याकरणम्। ज्योतिःशास्त्रं ग्रहनक्षत्रादीनां गतिनिरूपणरूपं। तथा च—"पञ्चस्कन्दमिदं शास्त्रं होरागणितसंज्ञिताः। केरलिः शकुनं चेति ज्योतिश्शास्त्रमुदीरितम्॥" इति। मीमांसा पूर्व्वोत्तरभेदेन प्रसिद्धं शास्त्रम्। तानि आदीनि समस्तानां सकलानां शास्त्राणां निकरः समूहः तेषु चातुर्य्यं पाटवं तत् तथोक्तम्। कौटिल्यश्चाणक्यः तत्प्रणीतं, कामन्दकीयं तत्प्रणीतं नयशास्त्रं ते आदिः नीतिः नयः तस्याः पटलं समूहः तस्य कौशलं पटुत्वम्। वीणा वल्लकी

---

* सहितेति क्वचित् पाठः। † चपलमिति वा पाठः।

‡ अवाप इति पुस्तकान्तरे पाठः।

वाद्ययन्त्रविशेषः, सा आदि अशेषाणि अगणितानि वाद्यानि मृदङ्गादीनि तेषु दाच्यं दक्षता। "वीणा विद्युति वल्लकाम्" इति मेदिनी। संगीतं तौर्य्यत्रिकम्। यदाह सङ्गीतरत्नाकरे—"नृत्यं गीतं तथा वाद्यं त्रयं संगीतमुच्यते।" इति। तेषु साहित्यं शिल्पं नृत्यादिकलाभिज्ञानत्वमित्यर्थः, हारित्वं मनोरञ्जनकारित्वञ्च। मणिमन्त्रौषधादिषु मायाप्रपञ्चेषु कपटविस्तारेषु च प्रावीण्यं नैपुण्यम्. मातङ्गो वारणः, तुरङ्गो हयः तौ आदि वाहनानि यानानि तेषु आरोहणं तस्य पाठवं पटुत्वम्। विविधानि नानाप्रकाराणि आयुधानि अस्त्राणि तेषां प्रयोगः व्यवहारः तेषु चतुरत्वं कुशलम्। चौरस्य भावः कर्म्म वा चौर-ष्यञ्; चौर्य्यं स्तेयम्। दुरोदरं द्यूतम्। "दुरोदरं द्यूतभेदे द्यूतकृत् पणयोः पुमान्" इति मेदिनी। तानि आदीनि कपटं तेषां कला समूहः तेषु प्रौढ़त्वं निपुणत्वम्। तत्तदाचार्य्येभ्यस्तेषु तेषु विषयेषु प्राप्तज्ञानवद्भ्यः इत्यर्थः। सम्यक् यथावदित्यर्थः, लब्धा प्राप्ता यौवनेन तारुण्येन विलसन्तं शोभमानं क्रतुषु कर्त्तव्येषु अनलससुत्साहयुतं तं कुमारनिकरं कुमारवृन्दं निरीक्ष्य दृष्ट्वा महीवल्लभः राजा राजहंसः स मानसारनिर्जितोऽहमित्यर्थः। शत्रुजनदुर्लभः शत्रुजनदुर्धर्षं इत्यर्थः। इति कुमाराणां ज्ञानवैभववर्द्धितः परमतिशयमानन्दं सुखम् अमन्दं निरतिशयं यथातथा अविन्दत अलभत।

---

# अथ द्वितीयोच्छ्वासः ।

अथैकदा वामदेवः सकलकलाकुशलेन कुसुमसायक-संशयितसौन्दर्य्येण कल्पितसौन्दर्य्येण साहसापहसितकुमारेण सुकुमारेण जयध्वजातपवारणकुलिशाङ्कितकरेण कुमारनिकरेण परिवेष्टितं राजानमानतसिरसं * निजचरणकमलयुगलमिल-न्मधुकरायमाणकाकपक्षं विदलिष्यमाणविपक्षं कुमारचयं गाढ़म् आलिङ्ग्य मितसत्यवाक्येन विहिताशीः अभाषत†(१)—'भूवल्लभ! भवदीयमनोरथफलमिव समुज्ज्वललावण्यं तारुण्यं नुतमित्रो भवत्पुत्रोऽनुभवति। सहचरसमेतस्य नूनमेतस्य

(१) अथेति। अथ आरम्भे एकदा कस्मिंश्चित् समये वामदेवः ऋषिः सकलासु कलासु शिल्पादिषु कुशलः अभिज्ञः तेन। कुसुमसायकः कामः तेन संशयितं संशयाकुलं सौन्दर्य्यं सुकुमारता यस्य तथाभूतेन सौन्दर्य्येण कामसादृश्य तया कामोऽयं नवेति जनानां चेतसि संशयमादधानेति भावः। कल्पितं वेश-रचनादिना विशेषितं सौन्दर्य्यं यस्य तादृशेन। साहसेन बलेन अपहसितः धिक्कृतः कुमारः स्कन्दो येन तथोक्तेन सुकुमारेण पेशलतया जयध्वजः पताका आतपत्रं छत्रं कुलिशं वज्रं एतैः अङ्कितः चिह्नितः करो यस्य तेन। कुमार-निकरेण कुमारसमूहेन परिवेष्टितं परिवृतं राजानं नृपं आनतं नम्रं शिरो यस्य तम्। निजौ स्वौ तावेव चरणकमले पादपद्मे तयोर्युगलं युग्मं तस्मिन् मिलन्तः सङ्गच्छन्तः संयुक्ता इत्यर्थः, मधुकरायमाणाः भ्रमर इवाचरन्तः काक-पक्षाः शिखण्डकाः कुन्तलनिचया यस्य तादृशम्। विदलिष्यमाणाः संमथ्यमानाः विपक्षाः अरयः येन तम्। कुमारचयं कुमारसमूहं गाढं निर्भरं आलिङ्ग्य आश्लिष्य मितसत्यवाक्येन मितं परिमितं सत्यं यथार्थं तथाभूते यद्वाक्यं तेन विहिता कृता आशीर्येन स तथोक्तः। अभाषत अवोचत् उक्तवानित्यर्थः।

* समभिगम्य तेन तां कृतां परिचर्य्यामङ्गीकृत्य इति पुस्तकान्तरे पाठः।

† अभ्यभाषतेति क्वचित् पाठः।

दिग्विजयारम्भसमय एषः। तदस्य सकलक्लेशसहस्य राजवाहनस्य दिग्विजयप्रयाणं क्रियताम्' इति। कुमारा माराभिरामा रामाद्यपौरुषा रुषा भस्मीकृतारयो रयोपहसितसमीरणा रणाभियानेन यानेन तेन अभ्युदयाशंसं राजानमकार्षुः। तत्साचिव्यम् इतरेषां विधाय समुचितां बुद्धिम् उपदिश्य शुभे मुहूर्त्ते सपरिवारं कुमारं विजयाय विससर्ज (२)।

राजवाहनो मङ्गलसूचकं शुभशकुनं विलोकयन् देशं कञ्चिदतिक्रम्य विन्ध्याटवीमध्यमविशत्। तत्र हेतिहतिकिणाङ्कं कालायसकर्कशकायं यज्ञोपवीतेन अनुमेयविप्रभावं

(२) भूवल्लभेति। भुवः पृथिव्याः वल्लभः भर्त्ता पालक इत्यर्थः, तस्यामन्त्रणम्। भवदीयानां मनोरथानामभिलाषाणां फलमिव परिणामरूपमित्यर्थः। सन्नद्धं संबद्धं लावण्यं यस्मिन् तथोक्तम्। तारुण्यं तरुणता। सुतमित्र: सुतानि स्तुतानि मित्राणि येन स तथोक्तः। भवत्पुत्रः तव तनयः अनुभवति अनुमन्यत इत्यर्थः। सहचरतीति सह चरोऽच्, सहचराः वयस्याः तैः समेतः युक्तः तस्य। नूनं निश्चितम्। "नूनमवश्यं निश्चये द्वयम्" इत्यमरः। एतस्य कुमारस्य दिशां विजयस्तस्यारम्भस्तस्य समयः कालः एषः वर्त्तमानसमय इत्यर्थः। तत् तस्मात् अस्य कुमारस्य सकलाः क्लेशाः कष्टानि तान् सहते यः सः। तथोक्तस्य, राजवाहनस्य राजकुमारस्य, दिशां विजयः तदर्थं प्रयाणं प्रेषणं दिग्विजयाय कुमारः प्रहीयतामिति तात्पर्य्यम्। कुमाराः पुत्राः, मारः कामः इवाभिरामाः सुन्दराः, रामस्येव अस्त्रेषु आयुधेषु पौरुषं विक्रमः येषां तथाभूताः। रुषा कोपेन भस्मीकृताः अरयः शत्रवः यैः तथाभूताः। रयेण वेगेन उपहसितः न्यक्कृतः समीरणो वातः यैः तथाभूताः। "रंहस्तरसी तु रयः स्यदः" इत्यमरः। रणाभियानेन रणे समरे अभियानं गमनं येन तादृशेन यानेन गमनेन अभ्युदयाशंसम् अभ्युदये वृद्धौ आशंसा आशा विद्यते यस्य तादृशम्। राजानं भूपं अकार्षुः व्यदधुः कृतवन्त इत्यर्थः। तस्य कुमारस्य साचिव्यं साहाय्यं इतरेषामपरेषां कुमाराणां विधाय कृत्वा अपरान् कुमारान् राजवाहनस्य साचिव्यकार्य्ये नियुज्येत्यर्थः। समुचितां यथोपयुक्तां बुद्धिं इतिकर्त्तव्यतादिरूपां युक्तिम् उपदिश्य विज्ञप्येत्यर्थ.। शुभे मङ्गलयुक्ते मुहूर्त्ते क्षणे परिवारेण सहितं सहचरयुक्तं राजवाहनं विजयाय जयार्थं विससर्ज तत्याज प्रेरयामासेति यावत्।

व्यक्तकिरातप्रभावं लोचनपरुषं कमपि पुरुषं ददर्श (३)। ते
विहितपूजनो राजवाहनोऽभ्यभाषत--'ननु मानव, जनसङ्ग
रहिते मृगहिते घोरप्रचारे कान्तारे विन्ध्याटवीमध्ये भवा
एकाकी किम् इति निवसति ?, भवदंसोपनीतं यज्ञोपवी
भूसुरभावं द्योतयति। हेतिहतिभिः किरातरीतिः अनुमीयते
कथय किमेतत् ?' इति(४) 'तेजोमयोऽयं मानुषमात्रपौरुषो नू

---

(३) राजेति। राजवाहनः राजपुत्रः मङ्गलं शुभोदर्कं भाविफलमित्यर्थं सूचयतीति तथा। शुभशकुनं सुलक्षणं विलोकयन् पश्यन् कञ्चित् देशं अनभिहत स्थानमित्यर्थः, अतिक्रम्य अतिवाह्य विन्ध्याटवीमध्यं विन्ध्यारण्यान्तरम् आविश प्रविष्टवान्। तत्र विन्ध्याटव्यां हेतीनामायुधानां हत्या प्रहारेण किणः व्रणः अङ्कः चिह्नं यस्य तथोक्तम्। "हेतिः स्यादायुधं ज्वाला सूर्यतेजःसु योषिति" इ मेदिनी। कालायसं लोहः तदेव कर्कशः कठिनः कायः शरीरं यस्य तथाभूतम् यज्ञोपवीतेन यज्ञसूत्रेण अनुमातुं योग्यो विप्रभावो यस्य तथाभूतम्। व्यक्त प्रकाशितः किरातस्य शबरस्य प्रभावः वनचरत्वमित्यर्थः, यस्य तथाभूतम् लोचनयोः नेत्रयोः परुषं कर्कशं कमपि कञ्चन पुरुषं जनं ददर्श अवलोकयामास दृष्टवानित्यर्थः।

(४) तेनेति। तेन पूर्वदृष्टजनेन विहितं कृतं पूजनं यस्य तथोक्तः, सत्कार इत्यर्थः, राजवाहनः कुमारः अभ्यभाषत उक्तवान्। ननु सम्बोधने "ननु प्रश्नेऽप्यनुनयेऽप्यनुज्ञानेऽप्यवधारणे आमन्त्रणे" इति विश्वः। मनोरपत्यमित्यर्थे मानवः तस्यामन्त्रणम्। जनानां सङ्गः सम्बन्धः तेन रहितः विवर्जितः तस्मिन् मृगाः पशवः तेभ्यः हितमनुकूलं तस्मिन्। "मृगः पशौ कुरङ्गे च करिणश्च भेदयोः" इति मेदिनी। घोरः दुर्गमः प्रचारः सञ्चारो यस्मिन् तथोक्ते कान्तारे गहने विन्ध्यनामाटवी वनं तस्याः मध्यः तस्मिन्। एकाकी एककः द्वितीय रहित इत्यर्थः। किमिति कथं निवसति अध्यास्ते। भवतः अवतंसः स्कन्ध तमुपनीतं यातं प्राप्तमित्यर्थः। यज्ञेन संस्कृतमुपवीतं सूत्रं तत् तथोक्तम्। भुवि पृथिव्याः सुरः पण्डितः ब्राह्मण इत्यर्थः, तस्य भावं विप्रत्वमितिभावः, द्योतयति सूचयति। हेतिहतिभिः प्रहरणप्रहारचिह्नैः किरातरीतिः व्याधवृत्तिः अनुमीयते तर्क्यते। एतत्सर्वं किमिति कथय यथायथमुपवर्णय इत्यर्थः, त्वमिति शेषः।

न भवति' इति मत्वा स पुरुषः तद्वयस्यमुखान्नामजनने विज्ञाय तस्मै निजवृत्तान्तमकथयत्—'राजनन्दन! केचिदस्यामटव्यां वेदादिविद्याभ्यासम् अपहाय निजकुलाचारं दूरीकृत्य सत्यशौचादिधर्मव्रातं परिहृत्य किल्बिषमन्विष्यन्तः पुलिन्दपुरोगमाः तदन्नम् उपभुञ्जाना बहवो ब्राह्मणब्रुवा निवसन्ति (५)। तेषु कस्यचित् पुत्रो निन्दापात्रचारित्रो मातङ्गो नामाहम् सह किरातबलेन जनपदं प्रविश्य ग्रामेषु धनिनः स्त्रीबालसहितानानीय अटव्यां बन्धने निधाय तेषां सकलधनमपहरन् उद्धृत्य वीतदयो व्यचरम् (६)। कदाचिदेकस्मिन् कान्तारे मदीय-

---

(५) तेज इति। तेजो बहुलं विद्यतेऽस्येति 'तत्प्रकृतवचने मयट्' इति मयट्प्रत्ययः। अयं समीपतरः। मानुषमात्रस्य मानुषसाधारणस्येव पौरुषं पुरुषकारो यस्य तथोक्तः। 'प्रमाणे द्वयसज्दघ्नञ्' इति प्रमाणार्थे मात्रच्। नूनं निश्चितम्। "नूनं तर्केऽर्थनिश्चये" इत्यमरः। इति एवं मत्वा ज्ञात्वा स पुरुषः वनचरवेशधारी, तत् तस्य राजवाहनस्य वयस्याः सहचराः तेषां मुखात् नाम च जननञ्च उत्पत्तिः कुलमित्यर्थः, ते विज्ञाय ज्ञात्वा तस्मै राजवाहनाय, क्रियायोगे चतुर्थी। निजवृत्तान्तम् आत्मन इतिवृत्तं अकथयत् अवदत् ज्ञापयामासेति यावत्। राजनन्दन इति राजवाहनस्य सम्बुद्धिः। केचित् केऽपि अस्यामटव्यां अवारण्ये इत्यर्थः। वेदाः ऋग्यजुःप्रभृतयः ते आदयः विद्याः मन्वादिस्मृतिविद्या इत्यर्थः। तासां अभ्यासः अध्ययनं तम्। अपहाय त्यक्त्वा निजस्य आत्मनः कुलं वंशः तस्य आचारः अनुष्ठानं तं तथोक्तम्। दूरीकृत्य विहाय सत्यम् अवितथकथनत्वम्, शौचं शुचिता, ते आदिनी धर्मव्रातं वंशपरम्परागतकुलधर्मसमुदायं परिहृत्य वर्जयित्वा किल्बिषं पापं अन्विष्यन्तः आचरयन्त इत्यर्थः, पुलिन्दपुरोगमाः पुलिन्दाः म्लेच्छजातिविशेषाः ते पुरोगाः नेतारः येषां तथोक्ताः। "भेदाः किरातशबरपुलिन्दाम्लेच्छजातयः" इत्यमरः। तदन्नं तेषां पुलिन्दानां अन्नं भक्ष्यं उपभुञ्जानाः भक्षयन्तः बहवः अनेकाः ब्राह्मणब्रुवाः ब्रह्मणापसदाः निवसन्ति अध्यासते।

(६) तेष्विति। तेषु पुलिन्देषु कस्यचित् जनस्य पुत्रः सुतः निन्दापात्रचारित्रः निन्दापात्रं कुत्सापूर्णं चारित्रं आचारः यस्य तथोक्तः। मातङ्गः मतङ्गस्यापत्यमिति णः, नाम्ना स इति। किरातस्य बलं सैन्यं तेन। जनपदं नगरं

सहचरगणेन जिघांस्यमानम् भूसुरमेकमवलोक्य दयायत्त चित्तोऽब्रवम्—'ननु पापा ! न हन्तव्यो ब्राह्मणः' इति। ते रोषारुणनयना मां बहुधा निरभर्त्सयन्। तेषां भाषणपारुष्य मसहिष्णुरहमवनीसुररक्षणाय चिरं प्रयुध्य तैरभिहतो गत जीवितोऽभवम् (७)। ततः प्रेतपुरीम् उपेत्य तत्र देहधारिभिः पुरुषैः परिवेष्टितं सभामध्ये रत्नखचितसिंहासनासीनं शमनं विलोक्य तस्मै दण्डप्रणाममकरवम्। सोऽपि मामवेक्ष्य चित्रगुप्तं नाम निजामात्यमाहूय तमवोचत्—'सचिव नैषोऽमुष्य मृत्युसमयः। निन्दितचरितोऽप्ययं महीसुरनिमित्तं गतजीवितोऽभूत्।(८) इतः प्रभृति विगलितकल्मषस्यास्य पुण्य

---

लोकावासमित्यर्थः। प्रविश्य गत्वा ग्रामेषु वसतिषु ग्रामलक्षणन्तु—"विप्राश्च विप्रभृत्याश्च यत्र चैव वसन्ति हि। स तु ग्राम इति प्रोक्तः शूद्राणां वास एव वा।" इति। धनिनः ऋद्धिमतः स्त्री च बालश्च ताभ्यां सहितः युक्तः तान् धनिनः गृहीत्वा अटव्यां कानने बन्धने कारागारे निधाय निक्षिप्य तेषां धनिनां सकलं धनं तावदर्थम् अपहरन् बलाद्गृह्णन्नित्यर्थः, उद्धृत्य गृहीत्वेत्यर्थः, वीतदयः वीता परिगता दया यस्य स तथोक्तः, निर्दय इत्यर्थः, व्यचरम् व्यवहरम्।

(७) कदेति। कदाचित् कस्मिंश्चित् समये एकस्मिन् कान्तारे गहने वने मदीयसहचरगणेन ममानुचरसमूहेन जिघांस्यमानं व्यापाद्यमानं भूसुरमेकं ब्राह्मणम् अवलोक्य संवीक्ष्य दयया स्नेहेन आयत्तं वशीकृतं चित्तं यस्य स तथोक्तः अब्रवम् अवदम् सहचरान् अहमिति, शेषः। ननु सम्बोधने। पापाः नृशंसाः "नृशंसो घातुकः क्रूरः पापः" इत्यमरः। न हन्तव्यः न विनाशितव्यः ब्राह्मणः द्विजः युष्मभिरिति शेषः। ते मत्सहचराः रोषेण क्रुधा अरुणानि लोहितानि नयनानि नेत्राणि येषां ते। बहुधा नानाप्रकारेण निरभर्त्सयन् तिरस्कुर्वन् तेषां सहचराणां भाषणपारुष्यं कठोरवचनानीत्यर्थः, असहिष्णुः सोढुमक्षमः अवनीसुरः ब्राह्मणः तस्य रक्षणाय तं रक्षितुं चिरमगौनेन प्रयुध्य युद्धं कृत्वा तैः सहचरैः अभिहतः ताड़ितः गतजीवितोऽभवं म्रियै।

(८) तत इति। ततः मरणानन्तरं प्रेतपुरीं यममन्दिरम् उपेत्य गत्वा तत्र यमालये देहधारिभिः कायापरिगृहीतृभिः पुरुषैः जीवैः परिवेष्टितं परितः

कर्म्मकरणे रुचिरुदेष्यति। पापिष्ठैरनुभूयमानमत्र यातनाविशेषं विलोक्य पुनरपि पूर्व्वशरीरमनेन गम्यताम्' इति। चित्रगुप्तोऽपि तत्र तत्र सन्तप्तेषु आयसस्तम्भेषु बध्यमानान्, अत्युष्णीकृते विततशरावे तैले निक्षिप्यमाणान्, लगुडैर्जर्ज्जरीकृतावयवान्, निशितटङ्कैः परितक्ष्यमाणानपि दर्शयित्वा पुण्यबुद्धिम् उपदिश्य मामसुञ्चत् (९)। तदैव पूर्व्वशरीरमहं प्राप्तो महाटवीमध्ये शीतलोपचारम् रचयित्वा महीसुरेण परीक्ष्यमाणः शिलायां शयितः क्षणमतिष्ठम्। तदनु विदितोदन्तो मदीयबन्धुगणः सहसा समागत्य मन्दिरमानीय माम्

---

सभामध्ये परिषदभ्यन्तरे रत्नैः माणिक्यैः खचितं प्रत्युप्तं यत् सिंहचिह्नितासनं तस्मिन् आसीनं स्थितं शमनं यमं विलोक्य संवीक्ष्य तस्मै यमाय दण्डप्रणामं धूल्यवलुण्ठ्य नमस्कारमित्यर्थः, अकरवमहमिति शेषः। सोऽपि यमराजोऽपि मामवेक्ष्य दृष्ट्वा चित्रगुप्तं नाम निजामात्यं स्वसचिवमाहूय आकार्य्य तं चित्रगुप्तमवोचत् अभाषे। सचिव इति चित्रगुप्तामन्त्रणम्। अमुष्य समीपतरस्य मातङ्गस्येत्यर्थः, एष मृत्युसमयः मृत्युकालः न भवतीति शेषः। निन्दितं गर्हितं चरितं यस्य स तादृशः। महीसुरनिमित्तं ब्राह्मणरक्षाय गतः त्यक्तः जीवितं जीवनकालं यस्य स तथोक्तः।

(९) इत इति। इतः प्रभृति अस्मादारभ्य विगलितं प्रच्युतं कल्मषं पापं यस्य तस्य "कल्मषं किल्बिषे क्लीवम्" इति मेदिनी। पुण्यं पवित्रं कर्म्म तस्य करणे सम्पादने रुचिः आसक्तिः उदेष्यति उत्पत्स्यते। अतिशयेन पापाः पापिष्ठाः तैः। अनुभूयमानं अनुमन्यमानं यातनाः तीव्राः वेदनाः यासां यातना विशेषमित्यर्थः। विलोक्य दृष्ट्वा पुनरपि भूयः पूर्व्वशरीरं पूर्व्वदेहम् अनेन मातङ्गेन गम्यतां प्राप्यताम्। तत्र तत्र सन्तप्तेषु तेषु तेषु क्लेशानुभूतेष्वित्यर्थः, अयसस्तम्भेषु आयसाश्च ते स्तम्भास्तेषु बध्यमानान् व्यपाद्यमानान् अत्युष्णीकृते अग्निसंयोगेन उत्तप्तीकृते इत्यर्थः, वितती विस्तीर्णो यः शरावः पात्रविशेषः, तस्मिन् गते तैले स्निग्धे निक्षिप्यमाणान् तादृशान्। लगुडैः दण्डैः जर्जरीकृताः प्रहारिताः अवयवाः देहाः येषां तान्। निशिताः तीक्ष्णाः टङ्काः पाषाणदारणास्त्रविशेषाः तैः "टङ्कः पाषाणदारणे" इत्यमरः। परितक्ष्यमाणान् ताड्यमानानपि दर्शयित्वा अवलोकयित्वा पुण्या सुकृता बुद्धिः ताम् उपदिश्य हितं कथयित्वेत्यर्थः, मां मातङ्गं अमुञ्चत् तत्याज।

अपक्रान्तव्रणमकरोत् (१०)। द्विजन्मा कृतज्ञो मह्यमक्ष शिक्षां विधाय विविधागमतन्त्रम् आख्याय कल्मषक्षयकारं सदाचारमुपदिश्य ज्ञानेक्षणगम्यमानस्य शशिखण्डशेखरस्य पूजाविधानम् अभिधाय पूजां मत्कृतामङ्गीकृत्य निरगात्(११)। तदारभ्याहं किरातकृतसंसर्गं बन्धुकुलमुत्सृज्य सकललोकैक गुरुम् इन्दुकलावतंसं चेतसि स्मरन् अस्मिन् कानने दूरी कृतकलङ्को वसामि। देव! भवतो विज्ञापनीयं रहस्यं किञ्चिदस्ति आगम्यताम्' इति। स च वयस्यगणादपनी रहसि पुनरेनमभाषत— राजन्! अतीते निशान्ते गौरी

(१०) तदेवेति। तत् तस्मात्, एव निश्चये। पूर्वशरीरं मरणाग्र देहं ... लब्धः महाटवीमध्ये गहनारण्ये शीतलः शैत्यम् उपचारः व्यवहारः तं, शिशिरोपचारमित्यर्थः, रचयित्वा अवलम्ब्य महीसुरेण विप्रेण परीक्ष्यमाणः निर्वाण शिलायां पाषाणे शयितः पाषाणे गात्रलग्नीकृत इत्यर्थः, क्षणं मुहूर्त्तमतिष्ठम् इति शेषः। "क्षणो व्यापारशून्ये स्यात् मुहूर्त्तोत्सवपर्व्वसु" इति रुद्रः। ततः तत:परम्। विदितः ज्ञातः उदन्तः वार्त्ता येन स तथोक्तः। "वार्त्ताप्रवृत्तिर्वृत्तान्त उदन्तः" इत्यमरः। मदीयः मम बन्धुगणः मित्रवर्गः सहसा अतर्कितेन समागत्य उपस्थितः मन्दिरमानीय गृहं नीत्वा अपक्रान्ताः अपाकृताः चिकित्सिता इत्यर्थः व्रणाः क्षतसमूहाः यस्य स तादृशः।

(११) द्विजन्मेति। द्विजन्मा ब्राह्मणः तथा च स्मृतिः—"जन्मना जायते शूद्रः संस्कारैर्द्विज उच्यते। मातुरग्रेऽभिजननं द्वितीयं मौञ्जीबन्धने॥" इति। कृतज्ञः कृतमत्कृतोपकारः इत्यर्थः, मह्यमिति क्रियायोगे चतुर्थी। अक्षराणां वर्णानां शिक्षा उपदेशः विधाय कृत्वा विविधाः बहुप्रकाराः आगमाः शास्त्राणि, तथा हि "सिद्धं सिद्धप्रमाणैस्तु हितं वात्र परत्र च। आगमशास्त्रमाप्तानाम्—" इति। तन्त्रं प्रधानम् आख्याय उक्त्वा कल्मषं पापं तस्य यः क्षयः विनाशः तस्य कारं निमित्तभूतम्। सदाचारं महद्भिरुपदर्शितपथम् उपदिश्य हितमुक्त्वेत्यर्थः, ज्ञानेक्षणं ज्ञानदृष्ट्या गम्यमानस्य ज्ञेयस्य, शशिनः चन्द्रस्य खण्डः कला सा शेखरोऽवतंसः यस्य तादृशस्य चन्द्रमौलेः शिवस्येत्यर्थः, पूजायाः विधानं विधिमभिधाय कथयित्वा पूजामर्चनां मम कृतामङ्गीकृत्य स्वीकृत्य गृहीत्वेत्यर्थः, निरगात् गतवान्।

पतिः स्वप्नसन्निहितो निद्रामुद्रितलोचनं विबोध्य प्रसन्नवदन-कान्तिः प्रश्रयावनतं माम् अवोचत् (१२)—'मातङ्ग ! दण्डकारण्यान्तरालगामिन्यास्तटिन्यास्तीरभूमौ सिद्धसाध्या-राध्यमानस्य स्फटिकलिङ्गस्य पश्चात् अद्रिपतिकन्या-पद-पङ्क्तिचिह्नितस्य अश्मनः सविधे विधेः आननमिव किमपि बिलं विद्यते (१३)। तत् प्रविश्य तत्र निहितम् ताम्रशासनं शासनं विधातुरिव समादाय विधिं तदुपदिष्टं दिष्टविजयमिव

---

(१२) तदेति। तदारभ्य ततः प्रभृति किरातैः शबरैः कृतः विहितः संसर्गः सम्बन्धः येन तथा, बन्धुकुलं मित्रवृन्दमुत्सृज्य त्यक्त्वा सकलानां लोकानामेकमनन्य-साधारणं मुख्यमित्यर्थः, गुरुं वरणीयम् इन्दुकलावतंसं चन्द्रमौलिं चेतसि चित्ते स्मरन् भावयन् अस्मिन् दृश्यमाने काननेऽरण्ये दूरीकृतः अपाकृतः कलङ्कोऽपवादो येन स तादृशः वसामि अहमिति शेषः। देवेति राजकुमारस्य सम्बुद्धिः। भवते इति क्रियायोगाच्चतुर्थी। विज्ञापनीयं निवेदितव्यं रहस्यं गुह्यं किञ्चित् कथमपीत्यर्थः, अस्ति वर्त्तते। आगम्यतां भवतेति शेषः। सः मातङ्गः वयस्यगणात् मित्रवृन्दात् अपनीय दूरं नीत्वा रहसि निर्जने पुनर्भूयः एनं वक्ष्यमाणं अभाषत अकथयत् कुमारमिति शेषः। राजन् हे कुमार, अतीते विगते निशान्ते निशायाः रात्र्याः अन्ते अवसाने गौरीपतिः गौर्याः अम्बिकायाः पतिः शिवः स्वप्ने संवेशे सन्निहितः सन्निकर्षं प्राप्तः निद्रया मुद्रिते निमिलिते लोचने नेत्रे यस्य तम्। विबोध्य जागरयित्वा प्रसन्ना सन्तुष्टा वदनकान्तिर्यस्य स तथोक्तः। प्रश्रयेण प्रणयेन अवनतं नम्रं "प्रश्रयप्रणयौ समौ" इत्यमरः। अवोचत् उवाच।

(१३) मातङ्ग इति। दण्डकनामारण्यानि तस्य अन्तरालं मध्यं तत्र गामिनी या तटिनी नदी तस्यास्तीरभूमिः तटं तस्मिन्। सिद्धन्ति सिद्धौ अनिमादि-गुणोपेताः सिद्धाः देवयोनिविशेषाः। साध्याः गणदेवताः तथाहि—"साध्या द्वादशविख्याता रुद्राश्चैकादश स्मृताः" इति। सिद्धाश्च साध्याश्च तैराराध्यमानः सेव्यमानस्तस्य, स्फटिकलिङ्गस्य सितमणिनिर्मितलिङ्गस्य विशिष्टाकृतेः शिवा-वयवस्य "स्फटिकस्सितरत्नं स्यात्" इति कमलाकरः। पश्चात् पृष्ठदेशे अद्रिपतिः हिमवान् तस्य कन्या पार्वती तस्याः पदपङ्क्तिभिः पादन्यासपरम्पराभिः चिह्नितस्य अश्मनः पाषाणस्य सविधे समीपे विधेः पितामहस्य आननं मुखमिव। बिलं गर्त्तं "बिलं छिद्रे गुहायाञ्च" इति विश्वः। विद्यते अस्ति।

विधाय पातालोकाधीश्वरेण भवता भवितव्यं भवत्साहाय्यकरो राजकुमारोऽद्य श्वो वा समागमिष्यति' इति । तदादेशानुगुणमेव भवदागमनमभूत् । साधनाभिलाषिणो मम तोषिणं रचय साहाय्यम्' इति (१४) । 'तथा' इति राजवाहनः सावमातङ्गेन नमितोत्तमाङ्गेन विहाय अर्द्धरात्रे निद्रापरतन्त्रं मित्रगणं वनान्तरम् अवाप । तदनु तदनुचराः कल्ये साकल्येन राजकुमारमनवलोकयन्तो विषण्णहृदयास्तेषु तेषु वनेषु सम्यगन्विष्यानवेक्षमाणा एतदन्वेषणमनीषया देशान्तरं चरिष्णवोऽतिसहिष्णवो निश्चितपुनःसङ्गमसङ्केतस्थानाः परस्परं वियुज्य ययुः (१५) ।

(१४) तदिति । तत् बिलं प्रविश्य गत्वा तत्र विले निचिप्तं स्थापितं वाव शासनं ताम्रपट्टलिखितं भूपशासनविशेष इत्यर्थः, विधातुः वेधस इव समादरं गृहीत्वा विधिमनुष्ठानं तदुपदिष्टं तेन ताम्रशासनेन उपदिष्टं कथितम् । दिष्टं विजयमिव दिष्टं दैवं तेन विजयः तमिव । "दैवं भाग्यं भागधेयं दिष्टम्" इति हैमः । विधाय कृत्वा पातालोकः अधोभुवनं तस्य अधीश्वरः नियन्ता अनुग्रहकर्त्ता तेन तथोक्तेन । भवतः साहाय्यकरः साहाय्यकारी राजकुमारः नृपनन्दनः अद्य अस्मिन्नहनि इदमः सप्तम्यर्थे निपातः । श्वः आगामिनि दिवसे समागमिष्यति आयास्यति । तदादेशमनुगुणमिव तस्य स्वप्नोक्तस्य शङ्करवाक्यस्य आदेशानुगुणमाज्ञानुरूपमेव । भवतः आगमनमुपस्थितिः अभूत् अघटत, साधनं सिद्धिः तस्य अभिलाषिणः काङ्क्षितस्य उपायप्राप्तिलालसस्येत्यर्थः, तोषिणः तदागमनहृष्टचेतसः रचय कुरु, साहाय्यं सहायतां, इति समाप्तौ ।

(१५) तथेतीति । तथा तेन प्रकारेण भवितेति शेषः । "तथा प्रष्टीत्ये वाक्ये साम्येऽभ्युपगमे च वै" इति स्वभूः । राजवाहनः राजकुमारः मातङ्गेन अवरवेशधारिणा ब्राह्मणेन साकं सह नमितं नम्रीकृतमुत्तमाङ्गं शिरो येन । विहाय त्यक्त्वा अर्द्धरात्रे निशीथे निद्रापरतन्त्रं निद्रावशं मित्रगणमात्मीयवर्गं वनान्तरमन्यद्वनमवाप प्राप्तवान् । तदनु ततः परं तस्य कुमारस्य अनुचराः अनुगामिनः सचिवादय इत्यर्थः, कल्ये प्रत्यूषे "व्युष्टं विभातं प्रत्यूषः कल्य-प्रत्यूषसी उषः कल्यम्" इति हैमः । साकल्येन सर्व्वतोभावेन । राजकुमारं राजपुत्रमनवलोकयन्तः नेक्षमाणाः विषण्णं खिन्नं हृदयं येषां ते, तेषु तेषु वनेषु तत्तत्प्रदेशेषु

लोकैकवीरेण कुमारेण रक्ष्यमाणः सन्तुष्टान्तरङ्गो मातङ्गोऽपि बिलं शशिशेखरकथिताभिज्ञानपरिज्ञातं निःशङ्कं प्रविश्य गृहीतताम्रशासनो रसातलं पथा तेनैवोपेत्य तत्र कस्यचित् पत्तनस्य निकटे केलिकाननकासारस्य विततसारसस्य समीपे नानाविधेन ईशशासनविधानोपपादितेन हविषा होमं विरच्य प्रत्यूहपरिहारिणि सविस्मयं विलोकयति राजवाहने समिदाज्यसमुज्ज्वलिते ज्वलने पुण्यगेहं देहं मन्त्रपूर्वकमाहुतीकृत्य तड़ित्समानकान्तिं दिव्यां तनुमलभत (१६)। तदनु मणि-

---

वनस्थलेष्वितरार्थः, सम्यक् यथायथमन्विष्य संगत्य अनवेक्ष्यमाणाः अनवलोकयन्तः एतदन्वेषणमितस्य राजपुत्रस्य अन्वेषणं गवेषणां मनीषया धिया देशान्तरमन्यं देशं चरिष्णवो यातुमनसः 'अलं कृञ्—' इतीष्णुच्। अतिसहिष्णवः अतितितिक्षवः, पुनः संगमः पुनः सङ्गमस्तस्य सङ्केतस्थानमिति पददीपिका। निश्चितं निर्णीतं पुनः-संगमसंकेतस्थानं यैस्ते तथोक्ताः। परस्परमन्योऽन्यं विमुच्य पृथक्भूय ययुः जग्मुः।

(१६) लोके इति। लोकेषु भुवनेषु एकवीरः प्रधानयोधः तेन "स्याल्लोको विष्टपं विश्वं भुवनं जगती जगत्" इति हैमः। कुमारेण राजवाहनेन रक्ष्यमाणः परिपालितः, रक्षधातोः कर्म्मणि शानच्। सन्तुष्टान्तरङ्गः प्रीतान्तःकरणः मातङ्गोऽपि बिलं गर्त्तम्, शशी इन्दुः शेखरे मलौ यस्य स तथोक्तः, तेन कथितम् अभिज्ञानं चिह्नं तस्य परिज्ञातमवगतिः तं, निःशङ्कं विगतभयं प्रविश्य यात्वा गृहीतमायत्तीकृतं ताम्रशासनं येन स तथोक्तः। रसातलं पातालं पथा वर्त्मना तेनैवोपेत्य तन्मार्गेणैवागत्य तत्र तस्मिन् प्रदेशे, पत्तनस्य नगरस्य निकटे समीपे केलिकाननकासारस्य उद्यानसरसः "पद्माकरस्तड़ागः स्यात् कासारः सरसी सरः" इति हैमः। विततः बहवः सारसाः पक्षिविशेषाः यत्र तस्य समीपे निकटे नाना बहुप्रकाराः विधा विधानं यस्य तेन, ईशः शम्भुः तस्य शासनं निर्देशः तस्य विधानं विधिः तस्य उपपादितः सम्पादितः तेन, हूयत इति हविः 'अर्चि-रुचिहुसृपिछादिछर्दिभ्य इस्' इति इस्। तेनाग्न्यादियाज्यद्रव्येन होमं यज्ञं विरच्य कृत्वा प्रत्यूहो विघ्नं तस्य परिहारिणि नाशिनि सविस्मयमाश्चर्य्येण सहितं विलोकयति सति राजवाहने कुमारे समिद्भिः काष्ठैः आज्यैः घृतैश्च समुज्ज्वलिते सम्यक उद्दीपिते ज्वलने अग्नौ, पुण्यस्य गेहमावासस्थानं देहं शरीरं मन्त्रपूर्व्वकं

मयमण्डनमण्डलमण्डिता सकललोक-ललनाकुल-ललामभूता कन्यका काचन विनीतानेकसखीजनानुगम्यमाना कलहंसगत्या शनैरागत्य अवनिसुरोत्तमाय मणिमेकमुज्ज्वलाकारमुपायनीकृत्य तेन 'का त्वम्' इति पृष्टा सोत्कण्ठा कलकण्ठस्वनेन मन्दं मन्दमुदञ्जलिरभाषत (१७)—'भूसुरोत्तम! अहम् असुरोत्तमनन्दिनी कालिन्दी नाम, मम पितास्य लोकस्य शासिता महानुभावो निजपराक्रमासहिष्णुना विष्णुना दूरीकृतामरे समरे यमनगरातिथिः अकारि (१८)। तद्वियोग-

---

समन्तम् आहुतीकृत्य हुत्वा वह्नौ प्रक्षिप्येत्यर्थः, तडित् विद्युत् तस्याः समाना तुल्या कान्तिः तां, दिव्यामुत्कृष्टां तनुं शरीरमलभत प्राप्तवान्।

(१७) तदन्विति। तस्य अनु पश्चात् मणिमयानां रत्नमयानां मण्डनानां भूषणानां मण्डलैः समूहैः मण्डिता अलङ्कृता, सकलेषु जनेषु यत् ललनाकुलं रमणीसमूहं तत्र ललामभूता प्रभाविशिष्टा रत्नभूतेत्यर्थः, "भूषा वाजिप्रभावेषु ललामं स्याल्ललाम च" इति रुद्रः। कन्यका कुमारी, विनीता नम्रा अनेकैः सखिजनाः सहचरीवर्गाः, अनु पश्चात् गम्यमाना याप्यमाना यया सा तादृशी, कलहंसस्य राजहंसस्य गतिरिव गतिर्यस्याः तया मन्थरगत्या इत्यर्थः, शनैरद्रुतमागत्य सम्मुखीभूय अवनीसुरोत्तमाय विप्रश्रेष्ठाय मणिमेकम् एकं रत्नम् उज्ज्वलाकारं प्रदीप्तम् उपायनीकृत्य उपहारं दत्त्वेत्यर्थः, तेन द्विजेन, पृष्टा जिज्ञासिता उत्कण्ठया सहिता कलं मधुराव्यक्तशब्दः कण्ठे यस्य स कलकण्ठः कोकिलः तस्य स्वनः शब्दः तेन, मन्दं यथातथा उदञ्जलिः प्रबद्धाञ्जलिः अभाषत अकथयत्।

(१८) भूसुरेति। भूसुरोत्तम हे ब्राह्मणवर्य, असुरोत्तमस्य दनुजश्रेष्ठस्य नन्दिनी पुत्री नाम्ना कालिन्दी मम पिता जनकः अस्य पातालपुरस्य लोकस्य जनस्य शासिता निग्रहानुग्रहकर्ता। महान् अतिशयः अनुभावः प्रभावो यस्य तादृशः। निजस्य स्वस्य पराक्रमेण वीर्येण असहिष्णुना अतिशयबलशालिनेत्यर्थः यद्वा निजपरस्य आत्मशत्रोः अक्रमं व्यतिक्रमं असहिष्णुः सहनासमर्थः तेन। एकपक्षकत्वान्निजवैमात्रिकत्वादसुरत्वादिति यावत्, शत्रु इति निजपरोपादानमिति भावः। विष्णुना नारायणेन दूरीकृताः पराजिताः अमराः देवाः यस्मात् तस्मिन् समरे युद्धे यमनगरस्य शमनपुरस्य अतिथिः आगन्तुकः अकारि कृतः हत इति भावः।

शोकसागरमग्नां मामवेक्ष्य कोऽपि कारुणिकः सिद्धताप-सोऽभाषत—'बाले ! कश्चिद्दिव्यदेहधारी मानवो नवो वल्लभस्तव भूत्वा सकलं रसातलं पालयिष्यति' इति। तदादेशं निशम्य घनशब्दोन्मुखी चातकी वर्षागमनम् इव तवालोकनकाङ्क्षिणी चिरमतिष्ठम् (१९)। मन्मनोरथफलायमानं भवदागमन-मवगम्य मद्राज्यावलम्बभूतामात्यानुमत्या मदनकृतसारथ्येन मनसा भवन्तम् आगच्छम् (२०)। लोकस्य अस्य राज्यलक्ष्मी-मङ्गीकृत्य मां तत्सपत्नीं करोतु भवान्' इति। मातङ्गोऽपि राजवाहनानुमत्या तां तरुणीं परिणीय दिव्याङ्गनालाभेन हृष्टतरो रसातलराज्यमुररीकृत्य परमानन्दमाससाद (२१)।

---

(१९) तदीति। तस्य पितुः वियोगः विच्छेदः तस्मादुद्भूतः उत्पन्नः यः शोकः दुःखं स एव सागरः तस्मिन् मग्ना तां तथोक्ताम्, मामवेक्ष्य दृष्ट्वा कोऽपि कश्चन-कारुणिकः दयालुः करुणाशीलमस्येति ठक्। तपश्चरतीति अन्; सिद्धः सम्पन्नः तापसः तपस्वी अभाषत उक्तवान् मामिति शेषः। बाले अयि षोडशि, तथा हि—"आषोडशाद्भवेद्बाला तरुणस्तत उच्यते" इति। कश्चित् कोऽपि दिव्यदेहधारी स्वर्गीयभावापन्न इत्यर्थः, मानवो मनुष्यः नवः नवीनः वल्लभो रमणः तव कालिन्द्याः भूत्वा सम्भूय सकलं साकल्यं रसातलं पातालं पालयिष्यति रक्षिष्यति। इति समाप्तौ। तस्य आदेशः आज्ञां निशम्य श्रुत्वा घनशब्दोन्मुखी घनः मेघः तस्य शब्दः रावः तेन उत् उन्नतं ऊर्ध्वीकृतमिति यावत् मुखं यया सा तथोक्ता चातकी शारङ्गी "शारङ्गश्चातके भृङ्गे" इति विश्वप्रकाशः। वर्षाणामागमनमुपस्थितिरिव तव भवतः आलोकनाकाङ्क्षिणी आलोकने दर्शने आकाङ्क्षा इच्छा वर्तते अस्याः इति इन्, स्त्रियां ङीप्। चिरं दीर्घदिनं अतिष्ठम् अपेक्षे।

(२०) मन्मनो इति। मन्मनोरथफलायमानं मम मनोरथः अभिलाषः तस्य फलायमानं फलमिव आचरति यत् भवतः आगमनमुपस्थितिमवगम्य ज्ञात्वा मम राज्यस्यालम्बभूतानाममात्यानामनुमत्या, मदनेन कामेन कृतं सारथ्यं यस्य तादृशेन मनसा चित्तेन भवन्तं त्वां आगच्छम् आयाम्।

(२१) लोकस्येति। लोकस्य अस्य पातालस्येत्यर्थः, राज्यलक्ष्मीं राज-श्रियम् अङ्गीकृत्य स्वीकृत्य मां कालिन्दीं, समानपतिर्यस्याः सा सपत्नी, तत् तस्याः

वञ्चयित्वा वयस्यगणं समागतो राजवाहनस्तदवलोकनकौतूहलेन भुवं गमिष्णुः कालिन्दीदत्तं क्षुत्पिपासादिक्लेशनाशनं मणिं साहाय्यकरणसन्तुष्टात् मातङ्गादवाप्य कञ्चनाध्वानमनुवर्त्तमानं तं विसृज्य बिलपथेन तेन निर्ययौ। तत्र च मित्रगणमनवलोक्य भुवं बभ्राम। भ्रमंश्च विशालोपशल्ये कमप्याक्रीड़मासाद्य तत्र विशिश्रमिषुः आन्दोलिकारूढ़रमणीसहितमाप्तजनपरिवृतमुद्याने समागतमेकं पुरुषमपश्यत् (२२)। सोऽपि परमानन्देन पल्लवितचेता विकसितवदनारविन्दः 'मम स्वामी सोमकुलावतंसो विशुद्धयशोनिधिः राजवाहन एषः। महाभाग्यतया अकाण्डे एवास्य पादमूलं

---

राजलक्ष्म्याः सपत्नीं करोतु विदधातु। राजवाहनस्य राजकुमारस्य अनुमत्या आज्ञया तामसुरनन्दिनीं तरुणीं युवतीं परिणीय विवाह्य 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वम्। दिव्यानि उत्कृष्टानि अङ्गानि यस्याः तस्याः लाभः तेन। अतिशयेन हृष्टः हृष्टतरः आनन्दित इत्यर्थः, रसातलराज्यं पातालदेशम् उररीकृत्य अङ्गीकृत्य "उररी चोररी चोरी विस्तारेऽङ्गीकृतौ त्रयम्" इत्यमरः। परमतिशयानन्दम् आह्लादम् आससाद प्राप्तवान्।

(२२) वञ्चेति। वञ्चयित्वा प्रतार्य वयस्यगणं सहचरवृन्दं समागतः समुपस्थितः राजवाहनः राजकुमारः तस्य अवलोकनाय कौतूहलं कौतुकः तेन, भुवं पृथ्वीं गमिष्णुः गन्तुमिच्छुः गमेर्बहुलकादिष्णुच्। कालिन्दी पातालगतमातङ्गरमणी तया दत्तमर्पितं क्षुत् क्षुधा पिपासा तृष्णा ते आदिक्लेशः तस्य नाशनं, मणिं रत्नं, साहाय्यं सहायता तस्य करणं तेन सन्तुष्टः परितोषः तस्मात्, मातङ्गात् तन्नाम्नो ब्राह्मणात् अवाप्य लब्ध्वा अध्वानं पन्थानं अनुवर्त्तमानं आगच्छन्तं तं मातङ्गं विसृज्य त्यक्त्वा बिलपथेन गर्त्तवर्त्मना निर्ययौ गतवान्। तत्र विन्ध्याटव्यां मित्रगणं मित्रसमूहम् अनवलोक्य अनवेक्ष्य भुवं धरित्रीं बभ्राम अाट। भ्रमन् चरन् विशालं महत् उपशल्यं ग्रामान्तः तस्मिन् "ग्रामान्त उपशल्यं स्यात्" इत्यमरः। आक्रीड़मुद्यानमासाद्य प्राप्य तत्र उद्याने विशिश्रमिषुः विश्रामितुमिच्छुः आन्दोलिकारूढ़ं दोलारूढ़ं रमणी स्त्री तया सहितं युक्तं आप्तजनेन आत्मीयेन परिवृतं परिवेष्टितं उद्याने उपवने समागतं समुपस्थितं एकं पुरुषं, पुर अग्रगमने उषन्, अपश्यत् अवलोकयत्।

गतवानस्मि (२३)। सम्प्रति मन्नयनोत्सवो जातः' इति ससम्भ्रममान्दोलिकाया अवतीर्य्य सरभसपदविन्यासविलासि-हर्षोत्कर्षचरितः त्रिचतुःपदानि उन्नतस्य चरणकमलयुगलं गलदुल्लसन्मल्लिकावलयेन मौलिना पस्पर्श (२४)। प्रमोदाश्रु-पूर्णो राजा पुलकिताङ्गं तं गाढ़मालिङ्ग्य 'अयि सौम्य सोमदत्त' इति व्याजहार (२५)। ततः कस्यापि पुन्नाग-भूरुहस्य प्रच्छायशीतले तले संविष्टेन मनुजनाथेन सप्रणय-

---

(२३) स इति। सोऽपि शिविकारोहणेनागतजनोऽपि परमानन्देन अति-शयाह्लादेन पल्लवितं विकसितं चेतः चित्तो यस्य स तथोक्तः, आप्यायितमना इत्यर्थः। विकसितं प्रफुल्लं वदनारविन्दं मुखकमलं यस्य स तथोक्तः। मम स्वामी प्रभुः सोमचन्द्रः तस्य कुलं वंशं अवतंसो भूषणं यः सः विशुद्धोऽतिशुद्धो यशोनिधिर्यस्य स तथोक्तः, एष समीपतरः, महाभाग्यतया अनुकूलादृष्टवत्तया अकाण्डे सहसा। एव अवधारणे। अस्य राजवाहनस्य पादमूलं चरणप्रान्तं गतवानस्मि समुप-स्थितोऽस्मि। अस्मीति असो लटि रूपम्। अथवा तिङन्तप्रतिरूपकमव्ययम्।

(२४) सम्प्रतीति। संप्रति इदानीं महान् अतिशयः नयनयोः नेत्रयोः उत्सवः आनन्दः जातः उत्पन्नः, अतिशयनयनानन्दकरव्यापार इत्यर्थः। इति उक्त्वा सत्वरम्। ससम्भ्रमं सत्वरं आन्दोलिकायाः शिविकायाः अवतीर्य्य तीर्त्वा सरभसेन ससम्भ्रमेण पदविन्यासेन विलासि प्रकाशमानं हर्षाणां उत्कर्षस्य चरितं भाव इत्यर्थः, तस्य तथोक्तः। त्रीणि त्रिसंख्यानि चत्वारि चतुःसंख्यकानि वा पदानि उन्नतस्य व्युत्क्रम्य यातस्य, चरणौ कमले इव इति 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति उपमितकर्मधारयः, तयोर्युगलं योग्यं गलत् च्युतत्-स्खलदिति यावत् उल्लसत् विकसत् मल्लिकानां पुष्पविशेषस्रजां वलयं वेष्टनं यस्य तादृशेन मौलिना शिरसा पस्पर्श 'स्पृशसंस्पर्शने' इति धातोः लिटिरूपम्।

(२५) प्रमोदेति। प्रमोदः हर्षः तज्जन्यमश्रु तेन पूर्णः राजा राजवाहनः पुलकितम् आनन्दातिशयेन हर्षिततनुरुहमङ्गं यस्य तम्। गाढ़मतिशयं आलिङ्ग्य संश्लिष्य अयि इति निपातः सम्भ्रमवाचकः। "अयि क्रोधे विषादे च सम्भ्रमे स्मरणेऽपि च" इति मेदिनी। सौम्यः मनोज्ञः हृदयानन्दक इत्यर्थः, तस्य सम्बुद्धिः। "सौम्योबुधे मनोज्ञे स्यात्" इति विश्वः। इति एवं व्याजहार उवाच।

सभाणि—'सखे! कालमेतावन्तं देशे कस्मिन्, प्रकारे केनाख्यायि भवता? सम्प्रति कुत्र गम्यते? तरुणी केयम्, एष परिजनः सम्पादितः कथं कथय' इति। सोऽपि मित्रसन्दर्शनव्यतिकरापगतचिन्ताज्वरातिशयो मुकुलितकरकमलः सविनयमात्मीयप्रचारप्रकारमवोचत्—(२६)।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते द्विजोपकृतिर्नाम द्वितीय उच्छ्वासः।

---

(२६) तत इति। ततः अनन्तरं कस्यापि कस्यचित् पुन्नागभूरुहस्य पुन्नागः केसर, तन्नामा भूरुही वृक्षः तस्य प्रच्छायशीतले प्रकृष्टा छाया ... त 'छायाबाहुल्ये' इति ह्रस्वः, तेन शीतलं यस्मिन्। तले देशे संविष्टेन संस्थितेन मनुजनाथेन मनुजानां नराणां नाथः अगतिकगतिः तेन राज्ञेत्यर्थः, सप्रणयं प्रेमयुक्तम् अभाणि अवाचि। सखे हे मित्र, तथा च "समः प्राणः सखा मतः" इति। एतत् परिमाणमस्येति वतुप्; तम्। 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया। कस्मिन् देशे जनपदे केन प्रकारेण किं कार्य्यव्यपदेशेनेति भावः। अस्थायि भवता स्थितमित्यर्थः, त्वयेति शेषः। गम्यतेऽत्र कुत्रेत्यधिकरणपदोपन्यासात् भावप्रयोगः। वस्तुतस्तु गमेः सकर्म्मकता एव वर्त्तते, तथा च "क्रियावच्छेदकं यत्र फलं ... विवक्षितम्" इत्यनुशासनात् धातुमात्रेणैव अकर्म्मकता सकर्म्मकता च भवेदिति। तरुणी युवती "...रुणी युवती समे" इत्यमरः। केयं पुरोवर्त्तिनी स्त्रीत्यर्थः, एषः दृश्यमानः परिजनः पोष्यवर्गः कथं केन प्रकारेण संपादितः संवेशितः, इति एतावत् समस्तमित्यर्थः, कथय वर्णय। सोऽपि सोमदत्तोऽपि मित्रस्य बन्धोः, सन्दर्शनं समवेक्षणं तस्य व्यतिकरेण व्यतिसङ्गेन सम्पर्केणेत्यर्थः, अपगतः निवारितः चिन्ताज्वरस्य भावनाविषमस्य अतिशयः प्राविख्यं यस्य तथाभूतः। मुकुलितम् अञ्जलीकृतं करकमलं करपद्मं येन स तथोक्तः। सविनयं विनयेन सह वर्त्तमानं यथा तथा, आत्मीयस्य स्वजनस्य प्रचारस्य भ्रमणस्य प्रकारं वृत्तान्तं अवोचत् अवर्णयत् आख्यादिति यावत्।

---

# अथ तृतीयोच्छ्वासः।

## सोमदत्तचरितम्।

'देव! भवच्चरणकमलसेवाभिलाषीभूतोऽहं भ्रमन् एकस्यां वनावनौ पिपासाकुलो लतापरिवृतं शीतलं नद-सलिलं पिबन् उज्ज्वलाकारं रत्नं तत्रैकमद्राक्षम् (१)। तत् आदाय गत्वा कञ्चन अध्वानम् अम्बरमणेः अत्युष्णतया गन्तुमक्षमो वनेऽस्मिन् एव किम् अपि देवतायतनं प्रविष्टो दीनाननं बहुतनयसमेतं स्थविरमहीसुरमेकम् अवलोक्य कुशलम् उदितदयोऽहम् अपृच्छम् (२)। कार्पण्यविवर्णवदनो

---

(१) देवेति देव इति राजवाहनस्य सम्बुद्धिः। भवतः चरणकमलयोः सेवा परिचर्य्या तस्यामभिलाषः आकाङ्क्षा स विद्यतेऽस्य तादृशः भूतोऽहम् भ्रमन् पर्य्यटन् वनावनौ वनस्य काननस्य अवनौ भूमौ, पातुमिच्छेति सन्—पिपासा, तया आकुलः पीड़ितः सन्, लताभिः परिवृतं व्याप्तम् अतएव शीतलं शैत्य' नदस्य पुंवाचकाक्रविम-खातावच्छिन्नजलप्रवाहस्य सलिलं जलं तथा च पाद्मे भूखण्डे "अष्टषष्ठी तु तीर्थानि नदाश्च दशकोट्यः" इति। पिबन् गलाधःकुर्व्वन्, उज्ज्वलाकारं दीप्तावयवं यस्य तत् एकं रत्नं मणि "रत्नं स्वजातिश्रेष्ठेऽपि मणावपि नपुंसकम्" इति मेदिनी। तत्र नदजले अद्राक्षम् अलोकिषि द्रष्टवानित्यर्थः।

(२) तदिति। तत् रत्नम् आदाय गृहीत्वा गत्वा यात्वा कञ्चन अध्वानं पन्थानम् अम्बरस्य आकाशस्य मणिः सूर्य्यः तस्य अत्युष्णतया अत्यन्ततापेनेत्यर्थः, गन्तुं यातुम् अक्षमः अशक्तः वनेऽस्मिन् पुरोवर्त्तिन्यरण्ये, एव अवधारणे; किमपि किञ्चन देवतायतनं देव-गृहं प्रविष्टः अन्तर्गतः, दीनं दैन्यव्याप्तमाननं यस्य, बहवः अनेके तनयाः पुत्राः तैः समेतः युक्तः तम्; विषयान्निवृत्य स्थिता वासनास्येति स्थाधातोः कर्त्तरि किरच्— स्थविरो वृद्धः, महीसुरो ब्राह्मणः तम्, अवलोक्य दृष्ट्वा उदितदयः उदिता सञ्जाता दया

महदाशापूर्णमानसोऽवोचत् अग्रजन्मा—'महाभाग ! सु
एतान् मातृहीनान् अनेकैः उपायैः रक्षन् इदानीम् अस्मि
कुदेशे भैक्ष्यं सम्पाद्य ददत् एतेभ्यो वसामि शिवालये अस्मि
इति (३)। 'भूदेव ! एतत्कटकाधिपतिः राजा क
देशस्य, किं नामधेयः ? किमत्र आगमनकारणम् अस्य' ? इ
पृष्टो अभाषत महीसुरः (४)—'सौम्य ! मत्तकालो ना
लाटेश्वरो देशस्य अस्य पालयितुः वीरकेतोः तनयां वामलोच
नाम तरुणीरत्नम् असमानलावण्यं श्रावं श्रावम् अवधूतदुहि
प्रार्थनस्य तस्य पाटलीं नाम नगरीमरौत्सीत् (५)। वीरके
अपि भीतो महत् उपायनम् इव तनयां मत्तका

---

यस्य सः, कुशलं मङ्गलमपृच्छम् जिज्ञासितवान्। तथा च मनुः "ब्राह्मणं कुशलं पृ
क्षत्रबन्धुमनामयम्। वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च ॥" इति।

(३) कार्पण्येति। कार्पण्यं कृपणस्य भावः, दीनत्वमित्यर्थः, तेन विवर्णं वि
वर्णं अस्वाभाविकपाण्डुर इत्यर्थः, वदनं यस्य स तथोक्तः। महति याऽऽशा
तया पूर्णं व्याप्तं मानसं यस्य। 'आन्महतः समानाधिकरणे' इत्यनुशासनात् शा
शेति पदन्यासश्चिन्त्यः। अग्रजन्मा ब्राह्मणः "द्विजात्यग्रजन्मभूदेववाडवाः" इ
अवोचत उक्तवान्। महाभाग इति सोमदत्तस्यामन्त्रणम्। सुतान् तनयान्
समीपतरान् मातृहीनान् जननीपरिशून्यान् अनेकैः बहुविधैः उपायैः साधनैः
पालयन् इदानीमधुना कुदेशे कुत्सितप्रदेशे भैक्ष्यं भिक्षाहृत्या, उपार्जितद्र
सम्पाद्य विहित्य एतेभ्यः पुत्रेभ्यः ददत् अर्पन् अहमिति शेषः। शिवालये शिव
वसामि तिष्ठामीत्यर्थः। इति समाप्ती।

(४) भूदेवेति। भुवः पृथिव्या देवः ब्राह्मणः तस्य सम्बोधनम्। एतस्य प्र
मानस्य कटकस्य निवेशितसैन्यस्य अधिपतिः प्रभुः, राजा नृपः, कस्य देशस्य प्र
किं नामधेयः ? नाम किं कथम्, अत्र अस्मिन् देशे आगमनकारणं हेतुः, इति
पृष्टः जिज्ञासितः मयेति शेषः। महीसुरः ब्राह्मणः अभाषत अवदत्।

(५) सौम्येति। सौम्य इति शिष्टजनसम्बोधनम्। नाम्ना मत्तकालः।
इति देशनाम, तस्य ईश्वरः निग्रहानुग्रहकर्ता देशस्यास्य एतस्य स्वकस्य प

अदात्। तरुणीलाभहृष्टचेता लाटपतिः 'परिणेया निजपुर इव' इति निश्चित्य गच्छन् निजदेशं प्रति, सम्प्रति मृगयादरेण अत्र वने सैन्यावासम् अकारयत् (६)। कन्यासारेण नियुक्तो मानपालो नाम वीरकेतुमन्त्री मानधनः चतुरङ्गबलसमन्वितः, अन्यत्र रचितशिबिरस्तं निजनाथावमानखिन्नमानसः अन्तर्बिभेद' इति (७)। विप्रोऽसौ बहुतनयो विद्वान् निर्धनः स्थविरश्च दानयोग्य इति तस्मै करुणापूर्णमना रत्नमदाम्। परमाह्लादविकसिताननोऽभिहितानेकाशीः क्वचित् अग्रजन्मा जगाम। अध्वश्रमखिन्नेन मया तत्र निरवेशि निद्रासुखम्। तदनु पश्चात्निगडितबाहुयुगलः स भूसुरः

---

शासितुः वीरकेतोः एतन्नाम्नः तनयां पुत्रीं नाम्ना वामलोचना ताम्; तरुणीषु युवतीषु रत्नं सारभूतं तदुक्तं "जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते।" इति। असमानमनुपमं लावण्यं सौन्दर्यं यस्य तत्। श्रावं श्रावं श्रुत्वा श्रुत्वा 'आभीक्ष्ण्ये णमुल्च्' इति णमुल्। अवधूता अगणिता दुहितुः प्रार्थना येन तस्य। तस्य राज्ञः पाटलीं नाम नगरीम् एतन्नाम जनपदम् अरौत्सीत् आविवरत् अवरोधितवानित्यर्थः।

(६) वीरेति। वीरेषु केतुः केतनः वीरश्रेष्ठ इत्यर्थः, नाम्ना स इति। अपि समुच्चये। भीतः त्रस्तः महत् प्रचुरमुपायनम् उपढौकनमिव उपहारमिवेति यावत्, "उपायनमुपग्राह्यमुपहारः" इत्यमरः। तनयामात्मजां मत्तकालाय लाटदेशाधिपतये अदात्, दाधातोः लुङि रूपम्, अर्पितवानित्यर्थः, तरुणी युवती तस्या लाभः तेन हृष्टः आनन्दितः चेतः चित्तो यस्य स तथाभूतः, लाटपतिः लाटेश्वरः परिणेया विवाह्या निजपुर इव स्वभवनमिव इति एवं निश्चित्य स्थिरीकृत्य गच्छन् चलन् सन् निजदेशं स्वप्रदेशं प्रतियोगेनात्र द्वितीया। संप्रति अधुना मृगयादरेण मृगयानुरोधेन अत्र वने अस्मिन्नटव्यां सैन्यावासं शिबिरम् अकारयत् कारितवान्।

(७) कन्येति। कन्यासारेण कन्याया आसारेण अपसारणार्थमित्यर्थः, लाटेश्वरादानयनार्थमिति यावत्, किञ्च, कन्यैव सारो धनं तेन। कन्यासारणे इति वा पाठः। नियुक्तः आज्ञप्तः मानपालो नाम नाम्ना तदिति, मन्त्री सचिवः मानधनं मान एव धनं यस्य स तादृशः। चतुरङ्गानि हस्त्यश्वरथपदातिरूपाणि तेषां बलानि तैः सम-

कशाघातचिह्नितगात्रः अनेकनैस्त्रिंशिकानुयातः, अभ्येत्य
असौ दस्युः इति अदर्शयत् (८)। परित्यक्तभूसुरा राज-
रत्नावाप्तिप्रकारं मदुक्तम् अनाकर्ण्य भयरहितं मां
नियम्य रज्जुभिः आनीय कारागारम् 'एते तव सखायः'
निगड़ितान् कांश्चित् निर्दिष्टवन्तो मामपि निगड़ितचर-
युगलम् अकार्षुः (९)। किं कर्त्तव्यतामूढ़ेन निराशस्ते-

---

न्वितः युक्तः, अन्यत्र लाटेश्वरशिबिरात् अन्यस्मिन् स्थाने इत्यर्थः, रचितं निर्म्मितं
येन स तथाभूतः। तं मत्तकालम्। निजस्य आत्मनः नाथः प्रभुः तस्य
पराभवं तेन खिन्नः दन्धग्रस्तः मानसो मनो यस्य स तथाभूतः। अन्तर्विभेद
तत्परो बभूवेत्यर्थः।

(८) विप्र इति। असौ विप्रः स ब्राह्मणः बहवः अनेके तनयाः पुत्राः
तथोक्तः। विद्वान् ज्ञानवान् निर्धनः निःस्वः धनशून्य इत्यर्थः, स्थविरः वृद्धः
योग्यः दानार्ह इति हेतोः तस्मै ब्राह्मणाय करुणया दयया पूर्णं व्याप्तं मनो
तथाभूतोऽहम् रत्नं मणिम् "रत्नं वसु मणिः" इति हैमः। अदाम् इदाञ् दाने
धातोः लुङः अमि रूपम्। परमाह्लादेन अतिशयहर्षेण विकसितमुत्फुल्लमाननं
यस्य स तथोक्तः। अभिहिता उक्ता अनेका बह्वो आशिषः येन स तथोक्तः।
चक्षुरगोचरे देशे इत्यर्थः, अग्रजन्मा ब्राह्मणः जगाम ययौ। अध्वनि पथि
जन्यः यः श्रमः आयासः तेन खिन्नः क्लिष्टः तेन। तत्र शिवालये निरवशि
स्वप्नमित्यर्थः, अहं निद्रावशोऽभवमिति भावः। तदनु ततःपरं पश्चात् पृष्ठदेशे
ड़ितं संबद्धं बाहुयुगलं भुजद्वयं यस्य स तथोक्तः। भूसुरः ब्राह्मणः। कशैः सौवा-
स्यान्तादच्—कशा अश्वताड़नचाबुक इति ख्याता। "अश्वादिस्ताड़नी कशा" इत्य-
तथा आघातः तेन चिह्नितम् अङ्कितं गात्रं शरीरं यस्य स तथोक्तः। अनेकनैस्त्रिंशि-
कानुयातः अनेकैः बहुभिः नैस्त्रिंशकैः असिधारिभिः अनुयातः परिवृतः
प्राप्य असौ पुरोवर्त्ती अयं दस्युश्चौर इति अदर्शयत् अवलोकयन् दर्शयामासेति

(९) परीति। परित्यक्तभूसुराः परित्यक्तः विमुक्तः भूसुरः ब्राह्मणः यैः ते तथोक्ताः
राजभटाः राज्ञो भटाः योद्धारः, रत्नस्य मणेः अवाप्तेः प्राप्तेः प्रकारं भेदः मया
वर्णितम् अनाकर्ण्य अश्रुत्वा भयरहितं विवर्जितत्रासं मां गाढ़ं दृढ़ं नियम्य बद्धा
बन्धनसाधनद्रव्यैः आनीय संगृह्य कारागारं चारकं "चारः कारागुप्ती" इति
एते प्रत्यचीभूताः सखायः सहचराः इति एवम् उक्तेति शेषः। निगड़ितान्

अवेन अवोचि मया—'ननु पुरुषाः! वीर्य्यपरुषाः! निमित्तेन केन निर्विशथ कारावासदुःखं दुस्तरम्? यूयं वयस्या इति निर्दिष्टम् एतैः, किमिदम्' इति। तथाविधं मामवेक्ष्य भूसुरात् मया श्रुतं लाटपतिवृत्तान्तं व्याख्याय चौरवीराः पुनरवोचन्—'महाभाग! वीरकेतुमन्त्रिणो मानपालस्य किङ्करा वयं तदाज्ञया लाटेश्वरमारणाय रात्रौ सुरङ्गद्वारेण तदागारं प्रविश्य तत्र राजाभावेन विषण्णा बहुधनम् अपहृत्य महाटवीं प्राविशाम (१०)।'

---

सङ्कुलं तेन बद्धानित्यर्थः कांश्चित् कानपीत्यर्थः. निर्दिष्टवन्तः निर्देशितान्, मामपि न केवलं तानिति भावः। निगडितचरणयुगलः निगडितं संबद्धं चरणयुगलं यस्य तं तथोक्तम् अकार्षुः व्यधुः कृतवन्त इत्यर्थः, राजपुरुषा इति शेषः।

(१०) किमिति। किं कर्त्तव्यतायां तद्विषये मूढः अज्ञः तेन, किं कर्त्तव्यमित्यजानतेति भावः। निराशक्लेशानुभवेन निराशः अप्रतीकारः क्लेशानुभवः यस्य स सञ्जातः तेन। कारावासक्लेशात् प्रतीकारमपश्यतेत्यर्थः, अवोचि अभाषि। ननु सम्बोधने, पुरुषाः इत्यामन्त्रणं पदम्। वीर्य्यपरुषाः वीर्य्येण तेजसा परुषाः कठिनाः तीव्रवीर्य्यवन्त इत्यर्थः, निमित्तेन कारणेन केन निर्विशथ भुङ्क्थ कारावासस्य बन्धनगृहस्य दुःखं क्लेशं दुस्तरं दुःखेन त्यक्तुमशक्यम्। वयस्याः सखायः इति एवं निर्दिष्टं कथितं किमभिप्रायकम् एतेषां वचनमिति। एतैः पूर्वावर्त्तिभिः। तथाविधं तादृशं माम् अवेक्ष्य दृष्ट्वा भूसुरात् ब्राह्मणात् मया श्रुतम् आकर्णितम्, लाटपतिवृत्तान्तं लाटाधिपस्य वृत्तान्तः संवादः व्याख्याय विवृत्य चौरवीराः चौरायते वीराः वन्दिपुरुषा इत्यर्थः, पुनः भूयः अवोचन्, वचधातोः लुङि रूपम्। 'महाभाग दयाद्युत्कृष्टगुणशालिन्, वीरकेतुमन्त्रिणः वीरकेतोः तन्नाम्नः भूपस्य मन्त्री सचिवः तस्य, मानपालस्य तन्नामधेयस्य किङ्कराः भृत्याः तदाज्ञया तस्य निर्देशेन लाटेश्वरमारणाय लाटभूपतेर्वधाय रात्रौ रजन्यां सुरङ्गद्वारेण विलमार्गेण तदागारं तस्य लाटेश्वरस्य आगारं गृहं प्रविश्य गत्वा तत्र तस्मिन् राजागारे इत्यर्थः, राजाभावेन राज्ञोऽभावः अनुपस्थितिः तेन, विषण्णाः खिन्नाः बहुधनं प्रचुरार्थम् अपहृत्य चोरयित्वा महाटवीं निबिड़काननं प्राविशाम अगच्छाम, गतवन्त इत्यर्थः।

'अपरेद्युः च पादान्वेषिणो राजानुचरा बहवोऽभ्येत्य गृहीत-धनचयान् अस्मान् परितः परिवृत्य दृढतरं बध्वा निकटमानीय समस्तवस्तुशोधनवेलायाम् एकस्य अनर्घ्यरत्नस्य अभावे अपहृतधनस्य माणिक्यादानाय अस्मान् किल अशृङ्खलयन् इति। श्रुतरत्नरत्नावलोकनस्थानोऽहम् 'इदं तदेव माणिक्यम्' इति निश्चित्य भूदेवदाननिमित्तां दुरवस्थाम् आत्मनो जन्म नामधेयं युष्मदन्वेषणपर्यटनप्रकारं चाऽभाष्य समयोचितैः संलापैः मैत्रीमकार्षम् (११)। ततोऽर्द्धरात्रे तेषां मम च शृङ्खलबन्धनं निर्भिद्य तैः अनुगम्यमानो निद्रितस्य द्वाःस्थगणस्य आयुधजालमादाय पुररक्षकान् पुरतोऽभिमुखागतान् पटु-पराक्रमलीलया अभिद्राव्य मानपालशिबिरं प्राविशम्।

---

(११) अपरेद्युरिति। अपरेद्युः अन्यस्मिन्नहनि पादान्वेषिणः पादानि पादचिह्नानि अन्विष्यन्तीति पादान्वेषिणः राजानुचराः राज्ञः किङ्कराः बहवः अनेके अभ्येत्य संप्राप्य गृहीतः धनचयः धनसमूहः येस्तान्, परितः समन्तात् परिवृत्य वेष्टयित्वा दृढतरमतिशयं बद्धा नियम्य निकटं समीपमानीय संगृह्य समस्तवस्तुशोधनवेलायां समस्तानां वस्तूनां हृतद्रव्याणां शोधनं सत्यार्हविवेचनं प्रत्यर्पणमिति वा तस्य वेला समयः तस्याम्। अनर्घ्यमसमूल्यं रत्नं मणिः तस्य महामूल्यस्येति भावः। अभावेन अविद्यमानतया अपहृतधनाय मामकानां विनाशाय, अत्र निमित्तार्थे चतुर्थी। माणिक्यादानाय माणिक्यस्य लुप्तस्यानर्घरत्नविशेषस्य आदानाय ग्रहणार्थमस्मान् मामकान् किल वार्तायां, अशृङ्खलयन् शृङ्खलबद्धानकुर्वन्नित्यर्थः, इति समाप्तौ। श्रुतरत्नस्य श्रेष्ठरत्नस्येत्यर्थः, अवलोकनस्य स्थानं येन स तथोक्तः। अहम् इदं प्रत्यक्षीभूतं तत् पूर्वं कथितमित्यर्थः, एव अवधारणे, माणिक्यं रत्नम् इति एवं निश्चित्य स्थिरीकृत्य भूदेवस्य ब्राह्मणस्य दानं तस्य निमित्तां कारणीभूतां दुरवस्थां दैन्यदशाम् आत्मनः स्वस्य जन्म उत्पत्तिः नामधेयं नाम, युष्मदन्वेषणपर्यटनप्रकारं युष्माकमन्वेषणं तस्मै पर्यटनं भ्रमणं तस्य प्रकारं भेदम् आभाष्य वर्णयित्वा समयस्य उचितः युक्तः तैः संलापः उक्ति-प्रत्युक्तिभावेन विरोधरहितस्य अन्योऽन्यभाषणं संलापः तैः। मैत्रीं मित्रस्य भावः कर्म वेति ङीप् अकार्षम् कृधातो लुङि रूपम्।

मानपालो निजकिङ्करेभ्यो मम कुलाभिमानवृत्तान्तं तत्कालीनं विक्रमं च निशम्य मामार्चयत्। परेद्युः मत्तकालेन प्रेषिताः केचन पुरुषाः मानपालम् उपेत्य 'मन्त्रिन्! मदीयराजमन्दिरं सुरङ्गया बहुधनम् अपहृत्य चौरवीरा भवदीयं कटकं प्राविशन्, तान् अर्पय नो चेन्महाननर्थः सम्भविष्यति' इति क्रूरतरं वाक्यमब्रुवन्, तदाकर्ण्य रोषारुणितनेत्रो मन्त्री, 'लाटपतिः कः? तेन सख्यो का? पुनरस्य वराकस्य सेवया किं लभ्यम्' इति तान् निरभर्त्सयत् (१२)। ते च मानपालेनोक्तं विप्रलापं मत्तकालाय तथा एव अकथयन्। कुपितोऽपि लाटपति-

---

(१२) तत इति। ततः अनन्तरम् अर्द्धरात्रे निशीथे तेषां बन्दिनां न केवलं तेषां मम च शृङ्खलबन्धनं संयमनं निर्भिद्य त्रुटित्वा तैः मत्सहचरैः अनु पश्चात् गच्छन्तः यायमानः निद्रितस्य सुप्तस्य द्वाःस्थगणस्य द्वारि तिष्ठन्तीति द्वाःस्थाः, तेषां गणः तस्य। आयुधजालम् आयुध्यतेऽनेनेति आ युध् धातोः कः—आयुधमस्त्रं, तस्य जालं समूहम् आदाय गृहीत्वा पुररक्षकान् पुरस्य कटकस्य रक्षा सर्वेभ्यः पारंरक्षणं तस्मिन् नियुक्ताः पुरुषाः तान्। पुरतः अग्रतः अभिमुखगतान् सम्मुखोपस्थितान्, पटुः निपुणः पराक्रमः विक्रमः तस्य लीला इच्छा तया अभिद्राव्य संत्रास्य मानपालशिबिरं मानपालस्य कटकं प्राविशम् अहमिति शेषः। मानपालः वीरकेतोर्मन्त्री निज किङ्करेभ्यः स्वपरिजनेभ्यः मम कुलाभिमानवृत्तान्तं कुलस्य वंशस्य अभिमानम् आभि-जात्यं तस्य वृत्तान्तः तं तथोक्तम्। तत्कालीनं पलायनसमयजं विक्रमं शौर्यं निशम्य श्रुत्वा आर्चयत् अपूजयत। परेद्युः परस्मिन्नहनीति 'पूर्वांद्यरेद्युस्' इति एद्युस्। मत्तकालेन लाटेश्वरेण प्रेषिताः प्रहिताः केचन पुरुषाः नराः मानपालं वीरकेतोर्मन्त्रिणम् उपेत्य आगत्य, मन्त्रिन् इति मानपालामन्त्रणम्। मन्त्रज्ञातकर्त्तव्यः निश्चयकर्त्ता एव मन्त्री, तल्लक्षणमाह कविकल्पलतायाम्—"मन्त्री भक्तः शुचिः शूरोऽनुरक्तो बुद्धिमान् क्षमी। आन्वीक्षिक्यादिकुशलः परिच्छेदी सुदेशजः॥" इति। मदीयराजमन्दिरे मम प्रासादे सुरङ्गया बिलपथेन बहुधनं प्रचुरवित्तमपहृत्य चोरयित्वा चौरवीराः तस्करयोद्धारः भवदीयं तावकं कटकं शिविरं प्राविशन् समुपागच्छन्। तान् चौरपुरुषान् अर्पय प्रयच्छ। नो नहि चेत् यदि न अर्पय तर्हीत्यर्थः "नाहं नो, अ न मा माङ्स प्रतिषेधे" इति विकाण्डशेषः। महान् अतिशयोऽनर्थः अनिष्टः

दोर्वीर्य्यगर्वेण अल्पसैनिकसमेतो योद्धुम् अभ्यगात्। पूर्वकृतरणनिश्चयो मानी मानपालः सन्नद्धयोधो योद्धुकामो नि:शङ्कं निरगात्। अहमपि सबहुमानं मन्त्रिदत्तातिबहुतुरङ्गमोपेतं चतुरसारथिं रथं च दृढ़तरं कवचं मदनुरूपं च विविधबाणपूर्णं तूणीरद्वयं रणसमुचितानि आयुधानि गृहीत्वा युद्धसन्नद्धो मदीयबलविश्वासेन रिपूद्धरणोद्युक्तं मन्त्रिणमन्वगाम्। परस्परमत्सरेण तुमुलसङ्गरकरम् उभयसैन्यमतिक्रम्य समुल्लसद्भुजाटोपेन बाणवर्षं तदङ्गे विमुञ्चन् अरातीन् प्राहरम्। ततोऽतिरयतुरङ्गमं मद्रथं तन्निकटं नीत्वा शीघ्रलङ्घनोपेततदीयरथोऽहम् अरातिः शिरःकर्त्तनम् अकार्षम्। (१२)। तस्मिन् निपतिते तदावशिष्टसैनिकेषु पलायितेषु नानाविधहयगजादिवस्तुजातम् आदाय परमानन्दसन्तोषो मन्त्री मम अनेकसंविधां सम्भावनाम् अकार्षीत्। मानपाल

---

सम्भविष्यति वटयिष्यति इति एतादृशं क्रूरतरं कठोरं वाक्यं वचः अब्रुवन् अकथयन्। तत् तादृशं वाक्यमाकर्ण्य श्रुत्वा रोषेण क्रोधेन अरुणिते रक्ते नेत्रे यस्य स तथोक्तः। मन्त्री सचिवः। लाटपतिः लाटेश्वरः कः ? तं न जाने इति भावः। तेन लाटपतिना सहेति शेषः। मैत्री मित्रता का ? मैत्रीकरणनार्हमिति भावः। पुनर्भूयः अस्य लाटपतेः वराकस्य हीनस्य सेवया परिचर्य्यया किं लभ्यं फलमित्यर्थः, इति उक्तानुरूपं तान् मत्तकालप्रेषितपुरुषान् निरभर्त्सयत् तिरश्चकार।

(१२) त इति। ते पुरुषाः मानपालेन मन्त्रिणा उक्तं भणितं विप्रलाप विरुद्धवचनं "विप्रलापो विरुद्धोक्तिः" इति हैमः। मत्तकालाय भूपतये, अत्र क्रियायोगे चतुर्थी। तथैव कथितानुरूपमेव अकथयन् अवचन्। कुपितोऽपि क्रुद्धोऽपि लाटपतिः मत्तकालः दोर्वीर्य्यं बाहुबलं तयोः गर्वः अहङ्कारः तेन। अल्पाः अल्पसंख्यकाः सैनिकाः योद्धारः तैः समेतः युक्तः योद्धुं संग्रामाय अभ्यगात् समयात्। पूर्वमेव प्रागेव कृतं विहितं रणस्य संग्रामस्य निश्चयं येन स तथोक्तः। मानी अभिमानी "दर्पोऽभिमानो ममता मानः" इति हैमः। मानपालः मन्त्री सन्नद्धयोधः

प्रेषितात् तदनुचरात् एनम् अखिलमुदन्तम् आकर्ण्य सन्तुष्टमना राजा अभ्युद्गतो मदीयपराक्रमे विस्मयमानः समहोत्सवम् अमात्यबान्धवानुमत्या शुभदिने निजतनयां मह्यम् अदात्। ततो यौवराज्याभिषिक्तोऽहमनुदिनम् आराधितमहीपालचित्तो वामलोचनया अनया सह नानाविधं सौख्यमनुभवन भवद्विरहवेदनाशल्यसुलभवैकल्यहृदयः सिद्धादेशेन सुहृज्जनावलोकनफलं प्रदेशं महाकालनिवासिनः परमेश्वरस्य आराधनाय अद्य पत्नीसमेतः समागतोऽस्मि। भक्तवत्सलस्य

---

सन्नद्धाः वर्म्मिताः योधाः सैनिकाः यस्य सः। "सन्नद्धो व्यूढकङ्कटो दंशितो वर्म्मितः" इति हैमः। योद्धुकामः योद्धुं योद्धाय कामना सङ्कल्पः यस्य स तथोक्तः। 'तुमः काममनसोः' इति श्रीपतिसूत्रेण मकारस्य लोपः। निःशङ्कं सङ्कारहितं यथा तथा निरगात् अव्राजीत्। सबहुमानम् अतिशयितं मन्त्रिणा सचिवेन दत्ताः अर्पिताः अतिबहुलाः प्रचुराः, तुरेण वेगेन गच्छन्तीति तुरङ्गमाः अश्वाः तैः उपेतं युक्तम्। चतुरो दक्षः सारथिः सूतः यस्य तम्। "सूतः चत्ता च सारथिः" इत्यमरः। रथं स्यन्दनं दृढतरं दुर्भेद्यं कवचं वर्म्म मदनुरूपं मत्व्यवहारानुरूपमित्यर्थः, चापं धनुः, विविधैः बहुजातीयैः बाणैः इषुभिः पूर्णं तूणीरद्वयं इषुधियुगलं रणसमुचितानि युद्धोपयुक्तानि आयुधानि अस्त्राणि गृहीत्वा आदाय युद्धसन्नद्धः युद्धसज्जः मदीयबलविश्वासेन मम पराक्रमस्य प्रत्ययेन रिपूद्धरणोद्युक्तं रिपूणां शत्रूणां समुद्धरणमुच्छेदः तस्मिन् उद्युक्तं समुद्यतं मन्त्रिणं मानधनम् अन्वगात् अभिव्राजीत्। परम्परमतसैरेण अन्योऽन्यविद्वेषेण तुमुलसङ्गरकरं महाऽहवकरम् उभयस्यैन्यं वादिप्रतिवादिनो योद्धारमतिक्रम्य लङ्घयित्वा समुल्लसता वृद्धिं गच्छता भुजाटोपेन बहुबलेन बाणवर्षं बाणानां शराणां वर्षः वर्षणं तम्। तदङ्गे तस्य शत्रोरङ्गे शरीरे विमुञ्चन् त्यजन् अरातीन् शत्रून प्राहरम् अताडयम्। ततः ततःपरम् अतिरयतुरङ्गमम् अतिशयितो रयो वेगो यस्य, सोऽतिरयः, तादृशस्तुरङ्गमो यस्य, एवं विधं मदीयं मम स्यन्दनं तन्निकटं तस्य शत्रोः निकटं समीपं नीत्वा प्रापयित्वा शीघ्रं क्षिप्रं यत् लङ्घनमुल्लम्फनं तेन उपेतः युक्तः तदीयः तत्सम्बन्धी रथो येन तथाभूतः, उल्लम्फनेन झटिति तद्रथस्य इति तात्पर्य्यम्। अरातेः शत्रोः शिरः कर्त्तनं छेदनम् अकार्षम् कृतवान्।

गौरीपतेः कारुण्येन भवत्पदारविन्दसन्दर्शनानन्दसन्दोहो मया लब्ध' इति (१४)।

तन्निशम्य अभिनन्दितपराक्रमो राजवाहनः तन्निरपराधदण्डे दैवमुपालभ्य तस्मै क्रमेण आत्मचरितं कथयामास। तस्मिन्नवसरे पुरतः पुष्पोद्भवं विलोक्य ससम्भ्रमं निजनिटिलतटस्पृष्टचरणाङ्गुलिम् उदञ्जलिमसुं गाढमालिङ्ग्य आनन्दबाष्पसङ्कुलसम्फुल्ललोचनः 'सौम्य, सोमदत्त ! अयं स पुष्पोद्भवः' इति तस्मै तं दर्शयामास। तौ च चिरविरहदुःखं विसृज्य अन्योऽन्यालिङ्गनसुखम् अनुभूताम्। ततः तस्यैव पुन्नागस्य [महीरुहस्य] छायायाम् उपविश्य राजा सादरहासम् अभाषत—

(१४) तस्मिन्निति। तस्मिन् तत्र निपतिते स्खलिते तदा तर्हि अवशिष्टसैनिकेषु युद्धावशिष्टसेनासु पलायितेषु प्रस्थितेषु नानाविधाः बहुप्रकाराः हयगजादि हस्त्यश्वादि वस्तुजातं वस्तुसमूहम् आदाय गृहीत्वा परमेण अतिशयेन आनन्देन सन्ततः पूर्णः इत्यर्थः, मन्त्री मानपालः, अनेकविधामनेकप्रकारां सम्भावनां सम्माननाम् अकार्षीत् कृतवान्। मानपालेन प्रेषितः प्रेरितः तस्मात् तदनुचरात् तस्य मानपालस्य अनुचरः किङ्करः तस्मात्, एनम् इदमः अन्वादेशः तथाच महाभाष्यम् "अन्वादेशश्च कथितानुकथनमात्रम्" इति। अखिलमुदन्तं सर्ववृत्तान्तम् आकर्ण्य श्रुत्वा सन्तुष्टमनाः सन्तुष्टं मनो यस्य स तथोक्तः। राजा वीरकेतुः अभ्युद्गतः सम्मानार्थं प्रत्युद्यातः मदीयपराक्रमे मम वीर्ये विस्मयमानः आश्चर्यान्वितः समहोत्सवं महोत्सवेन सहितम् अमात्यः सचिवः बान्धवः सुहृत् तयोरनुमतिः यथा तथा शुभेदिने शुभेऽहनि निजतनयां दुहितरं मह्यमिति दानयोगे चतुर्थी। अदात् अर्पयामास। ततः अनन्तरं, युवा चासौ राजा चेति युवराजः तस्य भावः तस्मिन्, अहं अभिषिक्तः स्थितः, अनुदिनं प्रतिदिनं दिनं दिनमनु इत्यव्ययीभावः। आराधितं सन्तोषितं महीपालेन राज्ञा चित्तं यस्य स तथोक्तः। अनया वामलोचनया सुन्दर्या सह सार्द्धं नानाविधं बहुप्रकारं सौख्यं सुखम् अनुभवन् सन्, भवतो विरहविच्छेदेन या वेदना व्यथा सा एव शल्यं मर्म्मनिर्भेद्यमस्त्रं तेन सुलभं वैकल्यं कातर्यं येन तादृशं हृदयं यस्य स तादृशः। सिद्धादेशेन सिद्धस्य अनिमाद्यष्टैश्वर्य्यशालिनः तपःप्रभावसम्पन्नस्येत्यर्थः, आदेशेन आज्ञया सुहृज्जनस्य तवेति भावः, चात्र

'वयस्य! भूसुरकार्य्यं करिष्णुः अहं मित्रगणो विदितार्थः सर्वथा अन्तरायं करिष्यति' इति निद्रितान् भवतः परित्यज्य निरगाम्। तदनु प्रबुद्धो वयस्यवर्गः किमिति निश्चित्य

---

धनमेव दर्शनमेव फलं यस्य तथाभूतं प्रदेशं स्थानं महाकालनिवासिनः महाकालेत्याख्यानके स्थले निवसतीति निवासी तस्य, परमेश्वरस्य शिवस्य "शिवो वै परमेश्वरः" इति हलायुधः। आराधनाय आराद्धुं 'तुमर्थाच्च भाववाचिनः' इति चतुर्थी। अद्य अस्मिन्नहनि पत्नीसमेतः वधूयुक्तः समागतः समुपस्थितः अस्मि अहमिति शेषः। भक्तेषु सेवकेषु वत्सलः स्नेहयुक्तः तस्य, गौरीपतेः शिवस्य कारुण्येन, करुणायाः भावः इति ष्यञः, तेन। भवतः पादमेव अरविन्दं रक्तकमलं तस्य सन्दर्शनं सम्यगवलोकनं तेन आनन्दः तस्य सन्दोहः राशिः "सन्दोहः समुदायो राशिः" इति हैमः। मया लब्धः प्राप्तः, इति समाप्तौ।

(१५) तन्निशम्येति। तत् वचः निशम्य श्रुत्वा अभिनन्दितः स्तुतः पराक्रमः येन स तथोक्तः। राजवाहनः तन्नामधेयः तन्निरपराधदण्डे तस्य निरपराधः अपराधशून्यः तस्मिन् यो दण्डः कारावासादिरूपं तस्मिन्। दैवं भाग्यमुपालभ्य तिरस्कृत्य तस्मै सोमदत्ताय क्रमेण परम्परितरूपेण आत्मचरितं निजचरितं कथयामास वर्णनं चकार। तस्मिन्नवसरे तर्हि पुरतः अग्रतः पुष्पोद्भवं तन्नामानं विलोक्य दृष्ट्वा ससम्भ्रमं सत्वरं निजस्य स्वस्य निटिलं ललाटं तेन स्पृष्टाः चरणाङ्गुलयः राजपुत्रस्येति तात्पर्य्यम्, येन तथाभूतं चरणतलपतितमित्यर्थः। उदञ्जलिं बद्धाञ्जलिममुम् एनमित्यर्थः, गाढमालिङ्ग्य अविश्रयमाश्लिष्य आनन्दजनितः बाष्पः नेत्राम्बु तेन सङ्कुले पूर्णे सम्फुल्ले लोचने नेत्रे यस्य सं तथोक्तः। सौम्य इति शिष्टजनसम्बोधनम्। तस्मै इति क्रियायोगे चतुर्थी। तं पुष्पोद्भवं दर्शयामास अवलोकयामास अदर्शयदिति यावत्। तौ राजवाहनसोमदत्तौ चिरविरहदुःखं बहुदिनजविच्छेदक्लेशं विसृज्य त्यक्त्वा अन्योऽन्ययोः परस्परयोः आलिङ्गनेन आश्लिषणेन जन्यं सुखं यत् तत्। अन्वभूताम् अनु-भुवः लुङि रूपम्। अनुपूर्व्वकभुवः सकर्म्मको वर्त्तते। तथा च "अनुपूर्वश्च भूधातुर्धर्मे यः सकर्मकः।" इति। ततः अनन्तरं तस्य पुन्नागस्य सुरपर्णिकायाः वृक्षविशेषस्येत्यर्थः। "पुन्नागः सुरपर्णिका" इति हैमः। छायायामनातपे उपविश्य स्थित्वेत्यर्थः, राजा राजवाहनः सादरहासं सादरेण सह हासः हसनं यस्यां क्रियायाम्। "हासस्तु हसनं हसः" इति हैमः। अभाषत अवोचत्। वयस्य सखे, भूसुरकार्य्यं भूसुरस्य ब्राह्मणस्य कार्य्यं

मदन्वेषणाय कुत्र गतवान् ? भवान् एकाकी कुत्र गतः' ? इति। सोऽपि ललाटतटचुम्बदञ्जलिपुटः सविनयं समालपत्—(१५)।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते सोमदत्तचरितं नाम तृतीय उच्छ्वासः।

---

कर्म, करिष्णः कर्त्तुमिच्छुरह, यद्यप्यालं निरापूर्वकादेव कृञः इष्णुचो विधानं तथापि बाहुलकादेवात्र इष्णुच् ज्ञेयः। मित्रगणः मित्रसमूहः विदितार्थः विदितो ज्ञातोऽर्थः येन स तथोक्तः। सर्वथा सर्वप्रकारेण, अन्तरायं विघ्नं करिष्यति घटयिष्यतीत्यर्थः। इति हेतोः निद्रितान् सुप्तान् भवतः तवेत्यर्थः, परित्यज्य त्यक्त्वा निरगाम्, निरगमम्। तदनु ततःपरं प्रबुद्धः जागरितैः वयस्यगणैः सहचरसमूहः किमिति कथं निश्चित्य स्थिरीकृत्य मदन्वेषणाय मम अन्वेषणं तस्मै, तुमर्थाच्चेति चतुर्थी। कुत्र कस्मिन् गतवान् यातः। भवान् त्वं एकाकी सहायशून्यः कुत्र क्व गतः यातः। इति एवमुक्तः स पुष्पोद्भवः ललाटस्य भालस्य तटं प्रान्तं चुम्बत् स्पृशत् अञ्जलिपुटं युक्तकरमिति यावत्, यस्य स तथोक्तः, मस्तो बद्धाञ्जलिरित्यर्थः। सविनयं विनयपूर्वकं समालपत् समाभाषत कथितुमारेभे इत्यर्थः।

---

# अथ चतुर्थोच्छ्वासः।

## पुष्पोद्भवचरितम्।

देव! महीसुरोपकाराय एव देवो गतवानिति निश्चित्यापि देवेन गन्तव्यदेशं निर्णेतुम् अशक्नुवानो मित्रगणः परस्परं वियुज्य दिक्षु देवमन्वेष्टुम् अगच्छत्। अहमपि देवस्य अन्वेषणाय महीमटन् कदाचित् अम्बरमध्यगतस्य अम्बरमणेः किरणमसहिष्णुः एकस्य गिरितटमहीरुहस्य प्रच्छायशीतले तले क्षणमुपाविशम्। मम पुरोभागे दिनमध्यसमये सङ्कुचितसर्वावयवां कूर्माकृतिं मानुषच्छायां निरीक्ष्य उन्मुखो गगनतलात् महारयेण पतन्तं पुरुषं कञ्चिदन्तराल एव दयोपनतहृदयोऽहम् अवलम्ब्य शनैः अवनीतले निक्षिप्य दूरापातवीतसंज्ञं तं शिशिरोपचारेण विबोध्य शोकातिरेकेण उद्गतबाष्पलोचनं तं भृगुपतनकारणम् अपृच्छम् (१)। सोऽपि कररुहैः अश्रुकणानपनयन् अभाषत—'सौम्य! मगधाधिनाथामात्यस्य पद्मोद्भवस्य आत्मसम्भवो

---

(१) देवेति। देव इति राजवाहनस्य सम्बुद्धिः। "राजा भट्टारको देवः" इत्यमरः। महीसुरस्य ब्राह्मणस्य उपकारः उपकृतिः तस्मै। एव अवधारणे। देवः भवान् गतवान् यातः, इति एवं निश्चित्यापि स्थिरीकृत्यापि, देवेन भवता गन्तव्यदेशं यातव्यप्रदेशं निर्णेतुं स्थिरीकर्तुम् अशक्नुवानः असमर्थः मित्रगणः सुहृत्समूहः परस्परमन्योऽन्यं वियुज्य पृथग्भूय दिक्षु समन्तात् देवमन्वेष्टुं भवदनुसन्धानाय अगच्छत् अयात् गतवानिति यावत्। अहमपि देवस्य भवतः अन्वेषणाय अनुसन्धानाय महीं भुवमटन् भ्रमन् कदाचित् कस्मिंश्चित् समये अम्बरस्य आकाशस्य मध्यः तस्मिन् गतः प्राप्तः तस्य अम्बरमणेः सूर्यस्य किरणं मयूखमसहिष्णुः सहितुमसमर्थः, एकस्य अनिर्दिष्टस्येत्यर्थः, गिरेः पर्वतस्य तटं चैव तदवस्थितो महीरुहः वृक्षः तस्य

रत्नोद्भवो नामाहं वाणिज्यरूपेण कालयवनद्वीपम् उपेत्य कामपि वणिक्कन्यकां परिणीय तया सह प्रत्यागच्छन् अम्बुधौ तीरस्य अनतिदूर एव प्रवहणस्य भग्नतया सर्वेषु निमग्नेषु कथं कथमपि दैवानुकूल्येन तीरभूमिम् अभिगम्य निजाङ्गना-वियोगदुःखार्णवे प्लवमानः कस्यापि सिद्धतापसस्य आदेशा-दरेण षोडशहायनानि कथञ्चित् नीत्वा दुरवस्थापारमनवेक्ष-माणो गिरिपतनम् अकार्षम् इति (२)।

---

प्रच्छायशीतले प्रकृष्टा च्छाया तया शीतलं शैत्यं तस्मिन् तले देशे चणं विश्रम परिमितकालम् उपाविशम् उपातिष्ठमित्यर्थः। पुरोभागे अग्रतः दिनमध्यसमये दिनस्य मध्यसमये मध्यभागे मध्याह्ने इत्यर्थः, शङ्कुचिताः अप्रसारिताः सर्वाः अवयवाः यस्याः सा। तादृशीम्, अत एव कूर्माकृतिं कमठाकाराम् मानुषच्छायां मानव-प्रतिबिम्बं "छाया स्यादातपाभावे प्रतिबिम्बार्कयोरपि" इति मेदिनी। निरीक्ष्य इत उन्मुखः ऊर्द्ध्वमुखः गगनतलात् आकाशमध्यात् महारयेण महावेगेन पतन्तम् अधोगच्छन्तं नरं कञ्चित् कमपीत्यर्थः, अन्तराल एव मध्य एव दयोपनतहृदयो दयया करुणया उपनतं द्रवीभूतं हृदयं मनो यस्य सः। अवलम्ब्य गृहीत्वा शनैः अवनीतले धरण्यां निक्षिप्य पातयित्वा दूरात् विप्रकृष्टात् आपातः आपतनं तेन वीता विगता विनष्टा इत्यर्थः, संज्ञा चेतना यस्य तादृशम्। तं पुरुषं शिशिरोपचारेण शीतलप्रक्रियया विबोध्य प्रकृतिमापाद्य शोकातिरेकेण शोकातिशय्येन उद्गतबाष्प-लोचनम् उद्गतं बहिरागतं बाष्पं नेत्रजलं याभ्यां तादृशी लोचने यस्य तादृशम्। भृगुपतनकारणं भृगुः प्रपातः तस्मात् पतनं तस्य कारणं हेतुः तत्। "प्रपातस्तु तटो भृगुः" इत्यमरः। अपृच्छम् जिज्ञासाचक्रे।

(२) सोऽपीति। सोऽपि पतितजनोऽपि करकृतैः हस्तैरित्यर्थः, अश्रुकणान् नयनजलानि अपनयन् अपसारयन् अभाषत अब्रूत। सौम्य, प्रियदर्शन, मगधाधिपतेः मगधदेशीयानामधिनाथः अधिनायकः तस्य अमात्यः मन्त्री तस्य पद्मोद्भवस्य तस्यात्मसंभवः आत्मसम्भवः आत्मनः सम्भवः पुत्र इत्यर्थः, तथाच श्रुतिः "आत्मा वै जायते पुत्रः" इति। अथवा आत्मनः सम्भवः उत्पन्नः जातः इति यावत्। रत्नोद्भवनामा रत्नोद्भव इति। वाणिज्यरूपेण व्यवसायरूपेण, दाभ्यां सता आगमोऽभि

तस्मिन्नेव अवसरे किमपि नारीकूजितम् अश्रावि। "न खलु समुचितमिदं यत् सिद्धादिष्टे पति-तनयमिलने विरहमसहिष्णुः वैश्वानरं विशसि" इति। तन्निशम्य मनोविदितजनकभावं तमवादिषम्—'तात! भवते विज्ञापनीयानि बहूनि सन्ति। भवतु, पश्चात् अखिलम् आख्यातव्यम्, अधुना नारीकूजितमनुपेक्षणीयं मया, क्षणमात्रम् अत्रभवता स्थीयताम्' इति। तदनु सोऽहं त्वरया किञ्चित् अन्तरमगमम् (२)। तत्र पुरतो भयङ्करज्वालाकुलहुतभुगवगाहमानसाहसिकां मुकु-

---

'द्व्यन्तरुपसर्गेभ्योऽप ईः' इति ईः। कालयवनेन तन्नामधेयेन अधिकृतमायत्तीकृतं द्वीपम् अन्तरीपम् उपेत्य गत्वा वणिक्कन्यकां वणिजो दुहितां परिणीय उद्वाह्य तया कन्यया सह साकं प्रत्यागच्छन् प्रत्यायन् अम्बुधौ समुद्रे तीरस्य तटभूमेः अनतिदूरे निकटे, एव अवधारणे, प्रवहणस्य वहित्रस्य भग्नतया त्रुटितेषु सर्वेषु सकलेषु निमग्नेषु निर्भग्नेषु कथं कथमपि अत्यन्तायासेन दैवानुकूल्येन अनुकूलभाग्यवशेन तीरभूमिं तटमभिगम्य यावत् निजस्य आत्मनः अङ्गना स्त्री तस्याः वियोगः विच्छेदः तेन यत् दुःखं क्लेशः तदेव अर्णवः समुद्रः तस्मिन्, प्लवमानः तरन् स्त्रीवियोगजमसीमदुःखम् अनुभवन्नित्यर्थः। अस्यापि सिद्धतापसस्य तपश्चरतीति—अण्, सिद्धः प्राप्तफलः तापसः तपस्वी तस्य आदेशः नियोगः तस्य आदरः यत्नः तेन। षोडशहायनानि षड्भिरधिका दश 'तदस्मिन्नधिकमिति दशान्ताड्डः' इति डः। षोडशानि षोडश संख्यकानि हायनानि वत्सरान् 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया। कथञ्चित् केनापि प्रकारेणेत्यर्थः, नीत्वा अतिवाह्य दुरवस्थापारम् दुः-दुष्टा अवस्था दशा तस्याः पारम् अवधिः तम्। अनवेक्षमाणः द्रष्टुमसमर्थः सन् गिरिपतनं गिरेः पर्वतात् पतनम् अधःस्खलनम् अकार्षम्, व्यधिषि कृतवानित्यर्थः।

(३) तस्मिन्निति। तस्मिन्नेव अवसरे तदानीं नारीकूजितं रमणीकण्ठरवमत्र [illegible]। अश्रावि आकर्णि श्रुतमित्यर्थः। न खल्वित्यनुनये। समुचितं युक्तम्। यत् यस्मात् सिद्धादिष्टे सिद्धेन सिद्धपुरुषेण मुनिनेत्यर्थः, आदिष्टे कथिते च ग्रन्थादिनेति तात्पर्यम्। पति-तनयमिलने पतिः भर्त्ता तनयः पुत्रः तयोः मेलनं तस्मिन्, विरहं विच्छेदम् असहिष्णुः सहनाक्षमः वैश्वानरं वह्निं विशसि गच्छसि

लिताञ्जलिपुटां वनितां काञ्चित् अवलोक्य ससम्भ्रमम् अनला-
दपनीय कूजन्त्या वृद्धया सह मत्पितुरभ्यर्णम् अभिगमय्य
स्थिराम् अवोचम्—'वृद्धे ! भवत्यौ कुत्रत्ये कान्तारे निमि-
त्तेन केन दुरवस्था अनुभूयते कथ्यताम्' इति। सा सगद्गद-
मवादीत्—'पुत्र ! कालयवनद्वीपे कालगुप्तनाम्नो वणिजः
कस्यचित् एषा सुता सुवृत्ता नाम, रत्नाद्भवेन निजकान्तेन
आगच्छन्ती, जलधौ मग्ने प्रवहणे, निजधात्र्या मया सह
फलकम् एकम् अवलम्ब्य दैवयोगेन कूलमुपेता आसन्नप्रसव-
समया कस्याञ्चिदटव्याम् आत्मजमसूत (४)। मम तु मन्द-
भाग्यतया बाले वनमातङ्गेन गृहीते, मद्द्वितीया परिभ्रमन्ती

---

इति वाक्यसमाप्तौ। तत् तादृशं वाक्यं निशम्य श्रुत्वा मनसा हृदयेन विदितः प्राप्तः
जनकभावः पितृभावो यस्मिन् तम्। स एव मे जनक इति मन्यमानः इति तात्पर्यम्।
अवादिषम् अवोचम्। तात, जनक, "तातस्तु जनकः पिता" इत्यमरः। 'भवते'
तुभ्यम् अत्र क्रियायोगे चतुर्थी। विज्ञापनीयानि विज्ञापयितुं योग्यानि बहूनि प्रचुराणि
सन्ति वर्तन्ते। भवतु तदेवास्त्वित्यर्थः। पश्चात् अवशेषे अखिलं सर्वम् आख्यातव्यं
कथितव्यम्। अधुना संप्रति नारीकूजितं रमणीरावः अनुपेक्षणीयं दुस्त्याज्यम्।
क्षणमात्रमल्पक्षणमत्रभवता पूज्येन स्थीयतां, ममागमनपर्यन्तमपेक्ष्यतामित्यर्थः। तदा
तत्पश्चात् सोऽहं गतजनोऽहं त्वरया अगौणेन शीघ्रमित्यर्थः, 'प्रकृत्यादिभ्य उप-
संख्यानम्' इति तृतीया। "सम्भ्रमे तु त्वरा त्वरिः" इति वाचस्पतिः। किञ्चि-
न्मनागन्तरं परम् अगमम् अयासिषम्।

(४) तवेति। तत्र गन्तव्ये स्थाने पुरतः अग्रे, भयं त्रासं करोतीति भयङ्करः
तथ; तम् च—भयङ्करः त्रासोत्पादकः ज्वालाकुलः शिखापूर्णः यः हुतभुक् हु-
तम्प्रेष गच्छितं घृतादि भुङ्क्ते इति भुजः क्विप्—हुतभुक् वह्निः तांप्रवगाहमा-
प्रविशन्ती अतएव साहसिका तां तथोक्ताम्। मुकुलितं बद्धमित्यर्थः, अञ्जलिपु-
टयुग्मं यया तां तथोक्ताम्। वनितां स्त्रीं काञ्चित कामपीत्यर्थः, अवलोक्य दृष्ट्वा
ससम्भ्रमं सत्वरम् अनलात् वह्नेः अपनीय उन्मुच्य कूजन्त्या विलपन्त्या वृद्धया वर्षीयस्या
सह सार्धं मत्पितुः मम जनकस्य अभ्यर्णं समीपम् अभिगमय्य प्रापयित्वा स्थविर-

'सोऽहमवर्षानन्तरं भर्तृपुत्रसङ्गमो भविष्यति' इति सिद्धवाक्य-विश्वासात् एकस्मिन् पुण्याश्रमे तावन्तं समयं नीत्वा शोकम् अपारं सोढुम् अक्षमा, समुज्ज्वलिते देवखाताग्नौ शरीरम् आहुतीकर्तुम् उद्युक्ता आसीत्' इति। तदाकर्ण्य निजजननीं ज्ञात्वा तामहं दण्डवत् प्रणम्य, तस्यै मद्वृत्तान्तम् अखिलम् आख्याय, धात्रीभाषणफुल्लवदनं विस्मयविकसिताक्षं जनकम् अदर्शयम्(५)। पितरौ तौ साभिज्ञानम् अन्योऽन्यं ज्ञात्वा मुदितान्तरात्मानौ विनीतं माम् अमन्दाश्रुवर्षेण अभिषिच्य, गाढमाश्लिष्य, शिरसि उपाघ्राय, कस्याश्चित् महीरुहच्छायायाम् उपाविशताम्। 'कथं निवसति महीवल्लभो राजहंसः' इति जनकेन

---

वृद्धाम् अवोचम् अकथयम्। वृद्धे, स्थविरे, भवती वनप्रविष्टकामा स्त्री भवती चेत्यर्थः। कुवत्ये कुत्रोत्पन्ने कुतः आगते वा, कान्तारे अरण्ये केन निमित्तेन हेतुना दुरवस्था दुर्-दुष्टा अवस्था दशा सव्यसनितेत्यर्थः, अनुभूयते, स्वीक्रियते इत्यर्थः, कथ्यतां तदिति शेषः। सा वृद्धा सगद्गदं गद्गदः हर्षशोकादिनास्पष्टध्वनिः तेन सहितं यथा तथा अवादीत् अवोचत्। पुत्र इति सम्बोधने स्नेहातिशय्यमेव हेतुः। कालयवनद्वीपे तदाख्ये स्थाने कालगुप्तनाम्नः नाम्ना कालगुप्तः तस्य वणिजः श्रेष्ठिनः एषा पुरोवर्त्तिनी सुता दुहिता सुवृत्तानाम सु-शोभनं वृत्तं चरित्रं शौचादिकं वा यस्याः सा तथोक्ता। "गुरुपूजा घृणा शौचं सत्यमिन्द्रियनिग्रहः। प्रवर्त्तनं हितानाञ्च तत् सर्व्वं वृत्तमुच्यते॥" इत्युक्तः, सा सुवृत्ता सर्व्वगुणसम्पन्ना इति नाम्ना परिस्फुटम्। रत्नोद्भवेन तत्संज्ञकेन वणिजा निजकान्तेन आत्मभर्त्रा सह आगच्छन्ती आयान्ती जलधौ समुद्रे मग्ने निमज्जिते प्रवहणे अर्णवयाने निजधात्र्या आत्मोपमात्रा मया सह साऽहम् एकं फलकं काष्ठादिपट्टम् अवलम्ब्य आश्रित्य दैवयोगेन भाग्यवशेन कूलं तटभूमिम् उपेता प्राप्ता आसन्नप्रसवसमया आसन्नः समीपवर्त्ती प्रसवस्य जनेः समयः कालः यस्याः तथा कस्याञ्चिदटव्यामपरिज्ञाते वने आत्मजं सुतम् असूत अजनयत् सूतवतीति यावत्।

(५) सखेति। मन्दभाग्यतया मन्दं निर्भाग्यं यस्याः तया "स्वैरास्पष्टमूर्खेषु मन्दोऽभाग्ये षु च त्रिषु" इति रभसः। बाले अर्भके वनमातङ्गेन आरण्यकवारणेन गृहीते आदत्ते सति मद्द्वितीया अहमेव द्वितीया सहायभूता यस्याः सा। परिभ्रमन्ती

पृष्टोऽहं तस्य राज्यच्युतिं, त्वदीयजननं, सकलकुमारावाप्तिं, तव दिग्विजयारम्भं, भवतो मातङ्गानुयानम्, अस्माकं युष्मदन्वेषणकारणं सकलमभ्यधाम् (६)। ततः तौ कस्यचिदाश्रमे मुनेः अस्थापयम्। ततो देवस्य अन्वेषणपरायणोऽहम् अखिलकार्य्यनिमित्तं वित्तं निश्चित्य, भवदनुग्रहात् लब्धस्य साधकस्य साहाय्यकरणदक्षं शिष्यगणं निष्पाद्य, विन्ध्यवनमध्ये पुरातनपट्टनस्थानानि उपेत्य विविधनिधिसूचकानां महीरुहाणामधो निचिप्तान् वसुपूर्णान् कलसान् सिद्धाञ्जनेन ज्ञात्वा, रक्षिषु परितः स्थितेषु खननसाधनैः उत्पाट्य, दीनारान् असङ्ख्यान् राशीकृत्य, तत्कालागतम् अनतिदूरे निवेशितं वणिक्कटकं

---

पर्य्यटन्तौ, षोडशवर्षानन्तरं षोडशवर्षाभ्यन्तरे इत्यर्थः, भर्त्तृपुत्रसङ्गमः भर्त्ता च पुत्रः तयोः सङ्गमः मेलनं भविष्यति घटिष्यति। इति एवं प्रकारं सिद्धवाक्यविश्वासात् सिद्धस्य वाक्यसिद्धिमतः सन्न्यासिन इत्यर्थः,वाक्यं वचः तस्मिन् विश्वासः प्रत्ययः तस्मात् एकस्मिन् अनिर्द्दिष्टे इत्यर्थः, पुण्याश्रमे पवित्रनिकेतने तावन्तं समयं षोडशाब्दान् नीत्वा अतिवाह्य शोकं व्यसनम् अपारम् असीमं सोढुं मर्षितुम् अक्षमा असमर्था सती यावत्, समुज्ज्वलिते समिद्धे वैश्वानरे अग्नौ शरीरं देहम् आहुतीकर्त्तुम् अर्पयितुम् उद्युक्ता उद्यता आसीत् अभूत्। इति वाक्यसमाप्तौ। तत् तादृशं वाक्यमाकर्ण्य श्रुत्वा सिंहघोषजननीं खगर्भधारिणीं ज्ञात्वा बुद्धा तां स्त्रीं नन्वातरमित्यर्थः, दण्डवत् भूमौ लुठित्वा प्रणम्य नमस्कृत्वा तस्मै प्राक्परिचितमज्जनकाय मदुदन्तं मम वृत्तान्तम् अखिलं सर्व्वम् आख्याय कीर्त्तयित्वा धावोभावप्रफुल्लवदनं धावाः उपमातुः भावपम् कौतुकं तस्मादुत्फुल्लमानन्दितं वदनं यस्य स तथोक्तः। जनकं पितरम् अदर्शयम् अवलोकयम्।

(६) पितराविति। पितरौ पिता च माता चेति 'पिता मात्रा' इत्यनेन सिद्धं वक्ष्यिष्यते। तावित्यत्र सा च स चेति विग्रहे 'त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानि' इत्यनेन पुमवशेषः। साभिज्ञानमन्योऽन्यं ज्ञात्वा परस्परं प्रत्यभिज्ञादर्शनलक्षणानि दृष्ट्वा दृष्ट्वेत्यर्थः, मुदितान्तरात्मानौ मुदितः परितुष्टः अन्तरात्मा ययोः तौ, विनीतं विनयान्वितं माममन्दाश्रुवर्षेण अमन्दमदुष्टम् अश्रु नेत्राम्बु, तस्य वर्षः विक्षेप इत्यर्थः, तेन। आनन्दाश्रुवर्षेणेत्यपि पाठः। अभिषिच्य आर्द्रीकृत्य

कश्चिदभ्येत्य, तत्र बलिनो बलीवर्दान् गोणीश्च नीत्वा अन्यद्द्रव्यमिषेण वस्तु तन्नोखीसञ्चितं तैः जघ्नसानं शनैः कटकमनैयम्(७)। तदधिकारिणा चन्द्रपालेन केनचित् वणिक्सुतेन विरचितसौहृदोऽहममुना एव साकम् उज्जयिनीम् उपाविशम्। मत्पितरौ अपि तां पुरीम् अभिगमय्य सकलगुणनिलयेन बन्धुपालनाम्ना चन्द्रपालजनकेन नीयमानो मालवनाथदर्शनं विधाय तदनुमत्या गूढवसतिमकरवम्। ततः काननभूमिषु भवन्तम् अन्वेष्टुम् उद्युक्तं मां परममित्रं बन्धुपालो निशम्य अवदत्—'सकलं धरणीतलम् अपारमन्वेष्टुम् अक्षमो भवान् मनोग्लानिं विहाय तूष्णीं तिष्ठतु। भवन्नायकावलोकनकारणं शुभशकुनं निरीक्ष्य कथयिष्यामि' इति। तत्पिताऽऽख्याश्वासितहृदयोऽहम् अनुदिनं तदुपकण्ठवर्ती कदाचित् इन्दुमुखीं नवयौवनावलीढावयवां नयनचन्द्रिकां बालचन्द्रिकां नाम तरुणीरत्नं

---

गाढमतिशयम् आश्लिष्य आलिङ्ग्य शिरसि मौलौ उपाघ्राय गन्धं गृहीत्वेत्यर्थः, कस्याञ्चित् कस्यामपि महीरुहच्छायायां महीरुहः वृक्षः तस्य छाया अनातपः तस्याम्। उपाविशतां समासाताम्। महीवल्लभः राजा राजहंसः कथं केन प्रकारेण कीदृगवस्थयेति भावः, निवसति आस्ते इत्यर्थः, इति एवं जनकेन पित्रा अहं पृष्टः जिज्ञासितः, तस्य राज्ञः राजवाहनस्य राज्यच्युतिं राष्ट्रभ्रंशनं त्वदीयस्य भवतः जननम् उत्पत्तिं सकलकुमारावाप्तिं सकलानां कुमाराणाम् उपहारवर्मादीनाम् अवाप्तिं प्राप्तम्; तव भवतः दिग्विजयारम्भः दिशां जयः तस्य आरम्भः उद्यमः तम्। भवतः तव मातङ्गानुयानं मातङ्गनाम्नः ब्राह्मणस्य अनु सह गमनम् अस्माकं मामकानां युष्मदन्वेषणकारणं युष्माकमन्वेषणस्य कारणं हेतुः तत्। सकलमानुपूर्व्विकामित्यर्थः, अश्रावम् अवर्णयम्।

(७) तत इति। ततः अनन्तरम्, तौ मातापितरौ कस्यचित् कस्यापि सम्यगानीतः इत्यर्थः, मुनेः तपस्विनः आश्रमे ऋषिनिवासनिकेतने अस्थापयम् अरचिषम्। ततः ततःपरम्, देवस्य भवतः अन्वेषणपरायणोऽहं अन्वेषणम् अनुसन्धानं परं केवलमात्रम् अयनं गमनं यस्य स तथा भूतः। अखिलानि समस्तानि कार्याणि

वणिङ्मन्दिरलक्ष्मीं मूर्तामिव अवलोक्य तदीयलावण्यावधू-
धीरभावो लतान्तबाणबाणलक्ष्यताम् अयासिषम् (८)। चकि-
बालकुरङ्गलोचना साऽपि कुसुमसायकसायकायमानेन कटा-

---

तेषां निमित्तं साधनभूतमित्यर्थः, वित्तं द्रव्यं निश्चित्य स्थिरीकृत्य भवत्-
प्रसादात् भवतः तव अनुग्रहः प्रसादः तस्मात्; लब्धस्य प्राप्तस्य साधकस्य तपस्वि-
त्यर्थः, साहाय्यकरणदक्षं साहाय्यं सहायता करणं कृत्यं तत्र दक्षः कुशलः
तथोक्तम्। शिष्यगणं शिष्यसमूहं निष्पाद्य नियोज्य पितॄभांडपरिग्रहणे इत्यादि
विन्ध्यवनमध्ये विन्ध्यारण्ये पुरातनपट्टनस्थानानि पुरातनानि प्राचीनानि पट्टनानि न-
राणि तेषां स्थानानि "पट्टनं स्यादधिष्ठानं नगरं पुटभेदनम्" इति वोपालित
उपेत्य प्राप्य विविधनिधिसूचकानां विविधानां नानाप्रकाराणां निधीनां धनोनिहि-
वस्तुविशेषाणां सूचकाः द्योतकाः तेषाम्। महीरुहाणां वृक्षाणाम् अधः मूलात्
निखिलान् परित्यक्तान् वसुपूर्णान् धनपरिपूरितान् कलशान् घटविशेषान् सिद्धाञ्-
सिद्धादिष्टेन अर्पितेन अञ्जनेन नेत्रदत्तकज्जलविशेषेणेत्यर्थः, ज्ञात्वा बुद्ध्वा रक्षिषु
केषु पतितः समन्तात् स्थितेषु वर्तमानेषु खननसाधनैः खननयोग्य रत्नाङ्क-
खनित्रादिभिरित्यर्थः, उत्पाट्य उत्तोल्य दीनारान् सुवर्णानि "गुञ्जपञ्चाद्यमपि दीना-
सुवर्णाभरणेऽपि च" इति रत्नकोषः। असंख्यान् संख्यातीतान् राशीकृत्य एकत्री-
तत्कालागतं तत्कालोपस्थितम् अनतिदूरे अतिनिकटे निवासितं समारोपि-
वणिक्कटकं वणिगावासं कञ्चित् कियद्दूरमित्यर्थः, अभ्येत्य यात्वा तत्र कटके व-
बलवतः बलीवर्दान् वृषभान् गोणीः धान्यादिवहनार्थाधारविशेषान् "थलि" "छाल"
इति यस्य देशभेदे प्रसिद्धिः। क्रीत्वा मूल्यादिना गृहीत्वा अन्यद्रव्यमिषेण अन्यद्रव्य-
देशेन वसु धनं तद्गोणीसञ्चितं सा गोणी तस्यां सञ्चितं पूरितं तैः वृषभैः उज्ज-
नीयमानं शनैरद्य तं कटकं वासस्थानम् अनयम् प्रापयम्।

(८) तदधीति। तस्य कटकस्य अधिकारी अधिपतिः तेन तथोक्तेन, नाम्ना च-
पालः तेन, केनचित् वणिक्पुत्रेण केनापि श्रेष्ठिसुतेन विरचितसौहृदोऽहं विर-
कृतं सम्पादितमित्यर्थः, सौहृदं मैत्री येन स तथोक्तः। अमुना चन्द्रपालेनैव सार्धं
उज्जयिनीं विशालानगरीम् उपाविशम् अविशम् अकार्षम्। उज्जयिनी नाम वर्ष-
सौधसमुज्ज्वला निखिलगुणोपचितमहिमा राज्ञो विक्रमादित्य राजधानी।
पितरौ मम मातापितरौ; अथच समुच्चये; तां पुरीमुज्जयिनीमित्यर्थः, अभिग-

वीक्षणेन ताम् अवस्थाम् निरीक्ष्य, मन्दमारुतान्दोलिता लता इव अकम्पत। मनसा अभिमुखैः सशङ्कुञ्चितैः रागलज्जान्तरालवर्त्तिभिः साङ्ग [ वर्त्तिभिः ] भङ्गिभिः ईक्षणविशेषैः निज-

---

प्रापयित्वा सकलगुणनिलयेन सकलानां गुणानां निलयः स्थानं तेन। बन्धुपालनाम्ना बन्धुपालाभिधेयेन चन्द्रपालजनकेन चन्द्रपालपित्रा नीयमानः उह्यमानः नीञ् प्रापणे इति धातोः कर्मणि शानच्। मालवनाथः मालवेश्वरः तस्य दर्शनं विधाय कृत्वा तदनुमत्या तस्य राज्ञः अनुमतिः आज्ञा तया, गूढवसतिं गूढा गोप्या वसतिः वासः ताम्, अकरवम् व्यदधि अहमिति शेषः। ततः अनन्तरं काननभूमिषु अरण्यप्रदेशेषु भवन्तं त्वाम् अन्वेष्टुं मृगयितुम् उद्युक्तम् उद्यमयुक्तं मां परममित्रं प्रधानसुहृदं बन्धुपालः चन्द्रपालस्य जनकः निशम्य आकर्ण्य उद्युक्तं मां वीक्ष्येत्यर्थः, अवदत् अकथयत्। सकलं सर्व्वं धरणीतलं भूपृष्ठम् अपारम् असीमम् अन्वेष्टुम् मृगयितुम् अक्षमः अशक्तः, मनोग्लानिं मनसः चित्तस्य ग्लानिः बलदीनता तां तथोक्ताम्। "ग्लानिस्तु बलदीनता" इति हैमः। विहाय त्यक्त्वा तूष्णीं मौनं तिष्ठतु भवेद्भवान् दिग्भूम्यां धरणीतलं पर्यटितेनालमिति तात्पर्य्यम्। भवतः तव नायकस्य नेतुः राजवाहनस्येत्यर्थः, अवलोकने दर्शने कारणं बीजभूतं शुभशकुनं शुभफललक्षणं निरीक्ष्य इहा कथयिष्यामि वदिष्यामि। तस्य बन्धुपालस्य लपितं भाषितं तदेव अमृतं पीयूषं तेन आश्वासितं हृदयं मनो यस्य स तथोक्तः। अनुदिनं प्रत्यहं तदुपकण्ठवर्त्ती तस्य वासस्थानस्य उपकण्ठवर्त्ती समीपवर्त्ती कदाचित् एकस्मिन् समये इन्दुमुखीं चन्द्रवदनां चन्द्रवदाह्लादजनयित्रीमिति भावः। नवयौवनावलीढावयवां नवयौवनेन उद्गततारुण्येन अवलीढाः व्याप्ताः अवयवाः अङ्गानि यस्याः तां तथोक्ताम्। नयनचन्द्रिकां नेत्रकौमुदीं नयनयोः ज्योत्स्नास्वरूपामित्यर्थः, बालचन्द्रिकां तन्नामधेयां, नवोदिता कौमुदी यथा मनो ह्लादयति तथेति नामतात्पर्य्यार्थः। तरुणीरत्नं युवतीषु सारभूतं वणिङ्मन्दिरलक्ष्मीं वणिजः मन्दिरं गृहं तस्य लक्ष्मीः श्रीः तां तथोक्ताम्। मूर्त्तामिव मूर्त्तिमतीमिव विग्रहरूपामित्यर्थः, अवलोक्य सन्दृश्य तस्याः बालचन्द्रिकायाः लावण्येन सौन्दर्य्येण अवधूतः चालितः धीरभावः धैर्य्यं यस्य स तथाभूतः। लताङ्गाः बाणाः यस्य सः लताङ्गबाणः कन्दर्पः तस्य बाणाः तेषां लक्ष्यतां शरव्यताम् अयासिषम् अगमम्। कामस्य पञ्चबाणानाह भरतः—"क्षोभोऽनोन्मादनौ च शोषणस्तापनस्तथा। सम्मोहनेति कामस्य पञ्च बाणाः प्रकीर्त्तिताः॥" इति।

मनोवृत्तिम् अकथयत्। चतुरगूढचेष्टाभिः अस्याः मनोऽनुरा[गं] सम्यक् ज्ञात्वा सुखसङ्गमोपायम् अचिन्तयम् (८)। अन्य[दा] बन्धुपालः शकुनैः भवद्गतिं प्रेक्षिष्यमाणः, पुरोपान्तविहा[र] वनं मया सह उपेत्य, कस्मिंश्चित् महीरुहे शकुन्तवचनानि शृण्वन् अतिष्ठत्। अहम् उत्कलिकाविनोदपरायणो वना[न्त]

(८) चकितेति। चकितः त्रासितः बालकुरङ्गः मृगपोतः तस्य लोचने [इव] लोचने यस्याः सा तथोक्ता। सापि बालचन्द्रिकापि कुसुमसायकायमानेन कुसु[मानि] सायकाः बाणाः यस्य स कुसुमसायकः कामः तस्य सायक इवाचरतीति क्यङ्, [त]तः शानच्, सायकायमानः तेन। कटाक्षवीक्षणेन अटम् असकृत् अपि पर्या[प्तं] कटाक्षं तेन वीक्षणं दर्शनं तेन, चेष्टाविशेषेणापाङ्गदर्शनेनेत्यर्थः। असकृत् मुहुः "मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत् समाः" इत्यमरः। निरीक्ष्य सन्दृश्य मन्द[मा]रुतेन वातेन आन्दोलिता चालिता लता वल्ली इव अकम्पत व्यधुनोत। [स]ञ्चितैः अभिमुखैः सम्मुखैः समाकुञ्चितैः सं सम्यक्प्रकारेण आकुञ्चितं वक्रीभूतं तथोक्तैः। रागश्च लज्जा च तयोरन्तराले मध्ये वर्तन्ते ताभिः। तथाह उज्ज्वल[मणौ]—"सुखमप्यधिकं चित्ते सुखत्वे नैव रज्यते। यत्तु वै प्रणयोत्कर्षात् स [राग] इति कीर्त्यते॥" इति। साङ्गभङ्गिभिः अङ्गानां भङ्ग्यः तैः सह वर्तमानाः ताभि[ः] "व्याजच्छलनिभे भङ्गिः" इति रभसः। ईक्षणविशेषैः सचञ्चलदृष्टिभिः निज[मनो]वृत्तिम् आत्माभिलाषम् अकथयत् अब्रवीत्। चतुरः दक्षः गूढः गोप्यः ताभ्यां या [चेष्टाः] ताभिः। अस्याः तरुण्याः मनोऽनुरागं मनसः अनुरागः प्रीतिः तं तथोक्तम्। [सम्यक्] साकल्येन ज्ञात्वा अवगम्य सुखसङ्गमोपायं सुखेन संगमः मेलनं तस्य उपायः [उपा]यम् तथोक्तम्। अचिन्तयम् अभावयम्। तथा च सङ्गमधिकृत्याह व्यासः—"[द]र्शनं विविक्तेषु परस्परसमाश्रयम्। केशाकेशिग्रहश्चैव सम्यक् संग्रहणं स्मृतम्॥" [अ]न्यदा एकस्मिन्काले बन्धुपालः नाम्ना स वणिक् शकुनैः निमित्तैः भवद्गतिं [भवतः] गतिः दशा ताम्। "गतिः स्त्री मार्गदशयोः" इति मेदिनी। प्रेक्षिष्यमाणः [अव]लोकयन्, पुरोपान्तविहारवनं पुरस्य नगरस्य उपान्ते समीपे विहारवनं क्रीडो[द्यानं] मया सह मत्सहायभावेनेत्यर्थः, उपेत्य अभिगम्य, महीरुहे तरौ शकुन्तव[चनानि] शकुन्ताः पक्षिणः तेषां वचनानि कूजितानि, वचनशब्देनात्र अप्रयुक्तत्वं [...]

परिभ्रमन्, सरोवरतीरे चिन्ताक्रान्तचित्तां दीनवदनां मन्मनोरथैकभूमिं बालचन्द्रिकां व्यलोकयम् (१०) । तस्याः ससंभ्रमप्रेमलज्जाकौतुकमनोरमं लीलाविलोकनसुखम् अनुभवन् सुदत्या वदनारविन्दे विषण्णभावं मदनकदनखेदानुभूतं ज्ञात्वा तन्निमित्तं ज्ञास्यन् लीलया तदुपकण्ठम् उपेत्य अवोचिषम्— 'सुमुखि ! तव मुखारविन्दस्य दैन्यकारणं कथय' इति । सा

---

क्षपयन् आकर्णयन् अतिष्ठन् अवर्त्ततेत्यर्थः । उत्कलिका उत्कण्ठा तस्याः विनोदः अपनयनं परम् अतिशयम् अयनम् आश्रयः यस्य सः तथोक्तः । दयिताविरहे दीनकण्ठा पर्यवसानमयीति भावः । वनान्ते वनैकदेशे इत्यर्थः, परिभ्रमन् पर्यटन् सरोवरतीरे सरस्तटे चिन्ताक्रान्तचित्तां चिन्तया आक्रान्तं पर्याकुलं चित्तं यस्याः सा तथोक्ताम् । दीनवदनां दीनं दैन्यभावापन्नं वदनं यस्याः तां तथोक्ताम् । मम मनोरथः अभिलाषः तस्य एकं मुख्यं भूमिः स्थानं या सा तां तथोक्ताम् । व्यलोकयम् अपश्यम् ।

(१०) तस्या इति । तस्याः बालचन्द्रिकायाः, सम्भ्रमः संवेगः प्रेम स्नेहः लज्जा व्रीडा ताभिः सह वर्त्तमानं कौतुकम् अभिलाषः तेन मनोरमं मनोज्ञम् । "समौ संवेगसम्भ्रमौ । प्रेमा ना प्रियता हार्दं प्रेम स्नेहः" इति चामरः । लीला शृङ्गारभावचेष्टा "लीला केलौ विलासे च शृङ्गारभावचेष्टायाम्" इति मेदिनी । तल्लक्षणमाह दर्पणे—'अङ्गैर्वेशैरलङ्कारैः प्रेमभिर्वचनैरपि । प्रीतिप्रयोजितैर्लीलां प्रियस्यानुकृतिं विदुः ॥' इति । तया सह विलोकनं पर्यवेक्षणं तेन यत् सुखं तत् तथोक्तम् । अनुभवन् ज्ञानविषयीकुर्वन् सुदत्याः शोभना दन्ताः यस्याः सा सुदती तस्याः 'वयसि दन्तस्य दतृ' इति दत्रादेशः । 'उगितश्च' इति ङीप् । वदनारविन्दे वदनकमले विषण्णभावं दीनभावं मदनकदनखेदानुभूतम्, मदनस्य कामस्य कदनं पीडनं तस्मात् खेदः अवसन्नता तेन अनुभूतः ज्ञातः तं तथोक्तम् । "खेदः स्यादवसन्नता" इति जटाधरः । तन्निमित्तं तस्य निमित्तं कारणं ज्ञात्वा बुद्ध्वा ज्ञास्यन् जानन् लीलया सखेलं तदुपकण्ठम् तस्याः उपकण्ठं समीपम् उपेत्य अभिगम्य अवोचिषम् अभणम् । सु, सुन्दरं मुखं यस्याः सा सुमुखी तस्याः सम्बोधनम् । मुखारविन्दस्य मुखकमलस्य दैन्यकारणं विषण्णहेतुं कथय विवृणु इति प्रश्नसमाप्तौ । सा बालचन्द्रिका रहस्यसञ्जातविस्रम्भतया रहस्यस्य विषये सञ्जातः उत्पन्नः विस्रम्भः प्रणयः तत्तया "विस्रम्भः

रहस्यसञ्जातविस्रम्भतया विहाय लज्जाभये शनैः अभाषत(११)। सौम्य ! मानसारो मालवाधीशो वार्द्धकस्य प्रबलतया निजनन्दनं दर्पसारम् उज्जयिन्याम् अभ्यषिञ्चत्। स कुमारः सप्तसागरपर्य्यन्तं महीमण्डलं पालयिष्यन् निजपैतृष्वसेयौ उद्दण्डकर्माणौ चण्डवर्मदारुवर्माणौ, धरणीभरणे नियुज्य तपश्चरणाय राजराजगिरिम् अभ्यगात्। राज्यं सर्वम् असपत्नं शासति चण्डवर्मणि दारुवर्मा मातुलाग्रजन्मनोः शासनम् अतिक्रम्य पारदार्य्यपरद्रव्यापहरणादि दुष्कर्म्म कुर्वाणो, मन्मथ-समानस्य भवतो लावण्यायत्तचित्तां माम् एकदा विलोक्य,

---

क्षिविकलहे प्रणये च" इति मेदिनी। विहाय त्यक्त्वा लज्जाभये लज्जा च भयञ्च ते। शनैरद्रुतम् अभाषत् अब्रूत।

(११) सौम्येति। सौम्य, हे प्रिय इत्यामन्त्रणम्। "कमनीयं सौम्यं च मधुरं प्रियम्" इति हैमः। मानसारः नाम्ना स भूपतिः मालवाधीशः मालवराजः वार्द्धकस्य वृद्धस्य जरायाः भावः ष्यञि वाः। प्रबलतया प्राचुर्य्येण निजनन्दनम् आत्मजं दर्पसारं तन्नामधेयम् उज्जयिन्याम् अवन्त्याम् अभ्यषिञ्चत् चिक्षतान्। सः कुमारः दर्पसारः सप्तसागरपर्य्यन्तं सप्तानां सागराणां पर्य्यन्तः अवधिः शेषः सीमेति यावत् तं तथोक्तम्। "लवणेक्षुसुरासर्पिर्दधिदुग्धजलार्णवाः" इति सप्त समुद्राः। महीमण्डलं भूभागं पालयिष्यन् शासत्, निजपैतृष्वसेयौ निजस्य आत्मनः पितुः स्वसायाः भगिन्याः पुत्रौ 'ढाक्लोपः' इति ढक्। 'मातृ पितृभ्यां स्वसा' इति सस्य षत्वम्। उद्दण्डकर्म्माणौ उद्दण्डं भीषणं कर्म्म ययोः तौ। चण्डवर्म्मा दारुवर्म्मा चेति नामनी। धरणीभरणे पृथिव्याः पोषणे नियुज्य सन्निवेश्य तपश्चरणाय तपश्चरितुं राजराजः कुबेरः तस्य गिरिः कैलासः तम् अभ्यगात् अभ्यगमत्। 'राज्यं' राष्ट्रम् सर्वं समस्तम् असपत्नमराति-रहितमकण्टकमित्यर्थः, चण्डवर्म्मणि शासति पालयति सति, दारुवर्म्मा चण्डवर्म्मणो भ्राता मातुलाग्रजन्मनः मातुलः, अग्रजन्मा ज्यायान् भ्राता तयोः तथोक्तयोः। शासनं निदेशम् अतिक्रम्य उल्लङ्घ्य पारदार्य्यं परदाराभिगमनं परस्य द्रव्यं वस्तु तस्य अपहरणं चौर्य्यं तानि आदिर्येषां तत्। दुर् दुष्टं कर्म्म कार्य्यं तत् कुर्वाणः आचरन्नित्यर्थः।

कन्याकूपणदोषं दूरीकृत्य बलात्कारेण रन्तुम् उद्युङ्क्ते, तच्चिन्तया दैन्यमगच्छम्' इति (१२)। तस्या मनोगतं मयि रागोद्रेकं मन्मनोरथसिद्ध्यन्तरायं च निशम्य, बाष्पपूर्णलोचनाम् आश्वास्य, दारुवर्मणो मारणोपायं च विचार्य, वल्लभाम् अवोचम्—'तरुणि! भवदभिलाषिणं दुष्टहृदयमेनं निहन्तुं, मृदुरुपायः कश्चित् मया चिन्त्यते। यक्षः कश्चित् अधिष्ठाय बालचन्द्रिकां निवसति। तदाकारसम्पदाशाशृङ्खलितहृदयो यः सम्बन्धयोग्यः साहसिको रतिमन्दिरे तं यक्षं निर्जित्य तया एकसखीसमेतया मृगाक्ष्या संलापामृतसुखम् अनुभूय कुशली निर्गमिष्यति, तेन चक्रवाकसंशयाकारपयोधरा विवाहनीया' इति सिद्धेन एकेन अवादि इति पुरजनस्य पुरतो भवदीयैः सत्यवाक्यैः जनैः असकृत् कथनीयम् (१३)। तदनु दारुवर्मा, वाक्यानि श्रुत्वा विधास्यति श्रावं श्रीवं तूष्णीं यदि

---

मन्मथशासनस्य मनो मथ्नातीति मन्मथः कामः तस्य समानः तुल्यः तस्य तथोक्तस्य, भवतः तव लावण्येन सौन्दर्येण आयत्तम् अधिकृतं चित्तं यस्याः तां तथोक्ताम्। एकदा एकस्मिन् काले विलोक्य संवीक्ष्य कन्यादूषणदोषं कन्यायाः कुमार्याः दूषणम् अक्षयदोषजननं तेन जातः दोषः तं तथोक्तम्। पुरुषसन्निधिरेव कुमार्याः दोषमुद्घोषयतीत्याशयः। दूरीकृत्य अपहाय बलात्कारेण प्रसभेन "स्त्रीयन्तु प्रसभं हठः" इति वोपालितः। रन्तुं क्रीडितुम् उद्युङ्क्ते 'सुराद्यन्तोपसर्गादिति वक्तव्यम्' इत्यात्मनेपदम्। तच्चिन्तया तस्य चिन्तया दैन्यं वैक्लव्यम् अगच्छम्, इति वाक्यसमाप्तौ।

(१३) तस्या इति। तस्याः बालचन्द्रिकायाः मनोगतं मानसं मयि पुष्पोद्भवे रागोद्रेकं प्रीत्यतिशयं, मम मनोरथः मन्मनोरथः तस्य सिद्धिः तस्याः अन्तरायं विघ्नं तं तथोक्तम्। निशम्य श्रुत्वा बाष्पपूर्णलोचनां बाष्पैः नयनाम्बुभिः पूर्णे लोचने नेत्रे यस्याः तां तथोक्ताम्। आश्वास्य आशावाक्यैः सन्तोष्येत्यर्थः, दारुवर्मणः बालचन्द्रिकाभिगमनमिच्छतः मारणोपायं वधसाधनीभूतमुपायमित्यर्थः, विचार्य स्थिरीकृत्येत्यर्थः, वल्लभां दयिताम् अवोचम् अकथयम्। तरुणि, इति बालचन्द्रिकायाः आमन्त्रणम्, भवदभिलाषिणं भवतीं त्वाम् अभिलषति यः तं तथोक्तम्।

भिया ग्लास्यति, तर्हि वरम्, यदि वा दौर्जन्येन त्वया सङ्गमम् अङ्गीकरिष्यति तदा तु भवदीयैः इत्थं वाच्यः, 'सौम्य! दर्पसारवसुधाधिपामात्यस्य भवतः, अस्मन्निवासे साहसकरणम् अनुचितम्। पौरजनसाक्षिकं भवन्मन्दिरम् आनीतया अनया तोयजाक्ष्या सह क्रीडन् आयुष्मान् यदि भविष्यसि तदा परिणीय तरुणीं मनोरथान् निर्विश' इति। सोऽपि एतत् अङ्गीकरिष्यति। त्वं सखीवेषधारिणा मया सह तस्य मन्दिरं गच्छ, अहम् एकान्तनिकेतने मुष्टिजानुपादाघातैः तं रभसा निहत्य पुनरपि वयस्यामिषेण भवतीमनु निःशङ्कं निर्गमिष्यामि' इति (१४) तदेनमुपायम् अङ्गीकृत्य विगतसाध्वसलज्जाऽभवत्। जनकजननीसहोदराणां पुरत आवयोः

---

दुष्टहृदयं क्रूरकर्माणम् एनं दारुवर्माणं निहन्तुं यथाग्र्ययदुरुपायः रुदुः पेशलः उपायः यस्याः यस्य सः। कश्चित् कोऽपि चिन्त्यते निर्णीयते। कश्चित् कोऽपि यक्षः देवयोनिविशेषः बालचन्द्रिकां त्वामित्यर्थः, अधिकाय आश्रित्य अधिकृत्येत्यर्थः, निवसति वासं करोति वसति इत्यर्थः। 'अधिशीङ्स्थासां कर्म' इत्याधारबालचन्द्रिकायां कर्मत्वम्। तस्याः भावादरतत्व मन्यद संवृत्तिः तस्यां या आशा भोगाभिलाषः तया प्रज्वलितं निबद्धं हृदयं मनो यस्य सः तथोक्तः। यः जनः सम्बन्धयोग्यः सम्बन्धः संसर्गः तस्य योग्यः अतः। साहसिकः साहसं कर्तुमुद्युक्तः रतिमन्दिरे संकेतगृहे तं कथितं यक्षनाविष्टमिसमित्यर्थः। निर्जित्य पराभूय तया एकसखीसमेतया एकया सख्या सहितं मिलितं तया। मृगाक्ष्या चञ्चलनयनयेत्यर्थः, संलापः अन्योऽन्यप्रीतिभाषणं स एव अमृतं तेन यत् सुखं तत् तथोक्तम्। अनुभूय संभाव्य कृपांशो विघ्नविरहितः निर्गमिष्यति यक्षिणागति। तेन हेतुनेत्यर्थः, चक्रवाकौ तदाकारे संशयः सन्देहः येन तादृशः आकारः, ययोः तथा भूतौ पयोधरौ कुचौ यस्याः सा तथोक्ता। विवाहनीया विवाह्या इति एवं सिद्धेन सिद्धपुरुषेण अवादि अभाणि। इति उक्तेन प्रकारेणेत्यर्थः। पुरजनस्य नगरवासिनः पुरतः भवदीयैः तावकीयैः सत्यवाक्यैः यथार्थकथनैः असकृत् वारं वारं कथनीयं व्याहर्तव्यम्।

(१४) तदन्विति। तदनु ततः परम्। दारुवर्मा नाम्ना सः, वाक्यानि तदोक्ता-

प्रेमातिशयम् आख्याय सर्वथा अस्मत्परिणयकारणे तान् अनुनयेः। तेऽपि वंशसम्पन्नावण्याढ्याय यूने मह्यं, त्वां दास्यन्ति एव, दारुवर्मणो मारणोपायं तेभ्यः कथयित्वा तेषाम् उत्तरमाख्येयं मह्यम्' इति। साऽपि किञ्चिदुत्फुल्लसरसिजानना माम् अब्रवीत्—'सुभग! क्रूरकर्माणं दारुवर्माणं भवान् एव हन्तुमर्हति। तस्मिन् हते सर्वथा युष्मन्मनोरथः फलिष्यति। एवं क्रियताम्। भवदुक्तं सर्वम् अहमपि तथा

---

नीत्यर्थः। इत्थं एवं विधा प्रकारो येषां तानि तथोक्तानि, कथितानुरूपाणीत्यर्थः, श्रावं श्रावं श्रुत्वा श्रुत्वा, णमुल्। लोकमुखेनेति शेषः। यदि यद्यपि भिया भयेन तूष्णीं मौनं स्थास्यति अभिवर्त्तिष्यते, तर्हि तदा वरं श्लाघनीयम्। यदि वा किं चेत्यर्थः, दौर्जन्य न खलत्वेन त्वया भवत्या सङ्गं संसर्गम् अङ्गीकरिष्यति स्वीकरिष्यति, तदा तस्मिन् काले स दारुवर्मा भवदीयैः त्वदीयैः इत्थं वचनभीषणवचनानुरूपं माध्यः वधनीयः। सौम्य प्रियदर्शन, वसुधां पृथ्वीं पाति रक्षतीति वसुधाधिपो राजा, दर्पसारवसुधाधिपस्य अमात्यः मन्त्री तस्य तथोक्तस्य, भवतिः तव अद्भिन्नायासे भव भवने साहसकरणं साहसानुष्ठानम अनुचितम् अनुपयुक्तम्। पुरोभवः पौरः नागरिको जनः लोकसमूहः तस्य साधार्' तव भव इति शिक्ष्। तथाहि मनुः "सम्यग्दर्शनात् साधंर श्रवणाच्चैव सिद्ध्यति।" इति। भवत्याः मन्दिरं गृहं तत् तथोक्तम्। आनीतया संगृहीतयेत्यर्थः। अनया वाक्चन्द्रिकया तोयजं पद्मं तदेव अक्षिणी यस्याः तया तथोक्तया सह सार्द्धं क्रीड़न् रमन्। आयुः प्रशस्तिरस्यास्तीति आयुष्मान् यदि यद्यपि भविष्यसि त्वमिति शेषः। तदा तर्हि जाते इत्यर्थः। तरुणीं यूनीं परिणीय नियम्य मनोरथान् स्वाभीष्टान् निर्विश उपभुङ्क्ष्व त्वमिति शेषः। इति वाक्य समाप्ती। सोऽपि दारुवर्मापि एतन् ममोपदेशानुरूपम् अङ्गीकरिष्यसि स्वीकरिष्यतीत्यर्थः, त्वं भवती सखीवेशधारिणा वयस्यावेशरोपितेन मया पुष्पोद्भवेन सह तस्य दारुवर्मणः मन्दिरं गृहं गच्छ याहि। एकान्त निकेतने निभृते अहं पुष्पोद्भवः, मुष्टिः रत्नपाणिः, मूर्द्ध मस्तकम् अङ्गभागः, पादं चरणं, तेषाम् आघाताः तैः तथोक्तैः। तं दारुवर्माणं रभसा वेगेन निहत्य व्यापाद्य पुनरपि भूयः वयस्यामिषेण सखीजनच्छलेन भवतीं त्वाम् अनु पश्चात् निःशङ्कं भयरहितं निर्गमिष्यामि बहिर्यास्यामि। इति वाक्यसमाप्ती।

करिष्ये' इति माम् असकृत् विवृत्तवदना विलोकयन्ती, मन्दं मन्दम् अगारम् अगात् (१५)। अहमपि बन्धुपालम् उपेत्य शकुनज्ञात् तस्मात् 'त्रिंशद्दिवसानन्तरम् एव भवत्सङ्गः सम्भविष्यति' इति अशृणवम्। तदनु मदनुगम्यमानो बन्धुपालो निजावासं प्रविश्य, मामपि निलयाय विससर्ज। मन्मायोपायवागुरापाशलग्नेन दारुवर्मणा रतिमन्दिरे रन्तुं समाहूता बालचन्द्रिका, तं गमिष्यतीति दूतिकां मत्सन्निकटम् अभिप्रेषितवती। अहमपि मणिनूपुरमेखलाकङ्कणकटकताडङ्कहारक्षौमकज्जलं वनितायोग्यं मण्डनजातं निपुणतया तत्तत्

---

(१५) तदेनमिति। तत् ततः एनं कथितानुरूपं, उपायं स्वार्थसाधनम् अङ्गीकृत्य स्वीकृत्य साध्वसं भयं, लज्जा व्रीडा, विगते दूरं गते साध्वसलज्जे यस्याः सा तथोक्ता। "दरस्त्रासौ भयं भीतिरातङ्को भीश्च साध्वसम्" इति वाचस्पतिः। समाने उदरे भव इति सहोदरः, जनकश्च जननी च सहोदरश्चेति द्वन्द्वः, तेषां जनकादीनाम्। पुरतः अग्रे आवयोः तव मम चेत्यर्थः, प्रेमातिशयम् अतिशयस्नेहानुबन्धम् आख्याय कीर्तयित्वा सर्वथा सर्वेण प्रकारेण आवयोः परिणयः विवाहः तस्य कारणं हेतुः तस्मात्। तान् गुरुजनान् अनुनयैः अनुरोध्येथाः त्वमिति शेषः। तेऽपि तव गुरुजनाः वंशं, वंशं कुलं, सम्पत् ऋद्धिः, लावण्यं सौन्दर्यं तैः आढ्यः सम्पन्नः तस्मै तथोक्ताय। यद्वा वंशसम्पच्च लावण्यञ्च ताभ्यामिति योजना। यूने तरुणाय तस्मै पुष्पोद्भवाय त्वां भवतीं दास्यन्ति अर्पयिष्यन्ति। एव अवधारणे। दारुवर्मणः तदर्थिनः तस्य लम्पटस्येत्यर्थः, मारणोपायं वधसाधनं तेभ्यः तत्र जनकादिभ्यः क्रियायोगेनाव चतुर्थी। कथयित्वा आख्याय तेषां जनकादीनाम् उत्तरं प्रत्युक्तिम् आकर्णेयं वर्णनीयम्, मह्यमित्यपि क्रियायोगे चतुर्थी। सापि स्नाता बालचन्द्रिकापीत्यर्थः, किञ्चित् ईषत् उत्फुल्लं विकसितं सरसिजं पद्मम् इव आननं मुखं यस्याः सा तथोक्ता। मद्वचनेन बालचन्द्रिका किञ्चिदाश्वस्ततया तस्याः दुर्मनायमानत्वमपि तीरोभवतीति भावः। मां पुष्पोद्भवम् अब्रवीत्। सुभगः प्रियदर्शनः तस्य सम्बोधनम्। "चक्षुष्यः सुभगः" इति चिन्तामणिः। क्रूरकर्माणं पापाचारिणं दारुवर्माणं मत्प्रणयार्थिनं भवान् एव त्वमेवेत्यर्थः, हन्तुमर्हति वधाय शक्तो भवति। तस्मिन् दारुवर्मणि हते विनष्टे सर्वथा सर्व-

स्थानेषु निक्षिप्य मय्यगङ्गीकृतमनोरथेषो वल्लभया सह, तदागारद्वारोपान्तम् अगच्छम्। ताःस्वकथितास्मदागमनेन सादरं विहिताभ्युद्गतिना तेन द्वारोपान्तनिवारिताशेषपरिवारेण मदन्विता बालचन्द्रिका सङ्केतागारमनीयत। नगरव्याकुलां यक्षकथां परीक्षन् नागरिकजनोऽपि कुतूहलेन दारुवर्मणः प्रतीहारभूमिम् अगमत् (१६)। विवेकशून्यमतिरसौ रागातिरेकेण रत्नखचितहेमपर्यङ्के, हंसतूलगर्भशयनम् आनीय

---

प्रकारेण युष्मन्मनोरथः युष्माकं मनोरथः अभिलाषः 'अस्मदो द्वयश्च' इत्यनेन बहुवचनम्। फलिष्यति सफलीभविष्यतीत्यर्थः। एवं कथितानुरूपं क्रियतां विधीयतां भवतेति शेषः। भवदुक्तं भवता कथितम् उपदेशानुरूपम् अहमपि तथा तद्वदित्यर्थः। इति एवं मामुक्तेति शेषः। असकृत् वारं वारं विहसद्वदना पराहतभुग्नौ विलोकयन्ती पश्यन्ती सती मन्दं मन्दं शनैः शनैः अगारं भवनम् अगात् अयात् गतवतीत्यर्थः।

(१६) अहमपीति। बन्धुपालमुपेत्य बन्धुपालवणिजः समीपं गत्वेत्यर्थः। शकुनज्ञात् शकुनशास्त्रार्थवेदिनः, तस्मात् तस्मादारभ्य त्रिंशद्दिवसानन्तरम् एव त्रिंशद्दिनानन्तरम् एकत्रिंशदहनीत्यर्थः। भवत्सङ्गः भवता सह मेलनमित्यर्थः। संभविष्यति घटिष्यति, इति एवम् अश्रणवम् आकर्णयम्। तदनु तत्पश्चात् मदनु मम पृष्ठतः गम्यमानः यत् बन्धुपालः नाम्ना स वणिक् निशायाम् स्वभवनं प्रविश्य गत्वा तामपि पुष्पोद्भवमपि निलयाय भवनं गन्तुमित्यर्थः। 'तुमर्थाच्च भाववचनात्' इति तुमर्थे चतुर्थी। विससर्ज तत्याज। माया कपटता, उपायः साधनम्, वागुरा बन्धनरज्जुः, पाशः पश्वादिबन्धनजालम्; वागुरा च पाशश्च इति द्वन्द्वः तम मायैव उपायः स एव वागुरापाशौ तयोः लग्नः युक्तः तेन। "वागुरा मृगबन्धनी" इत्यमरः "पाशः पश्वादिबन्धनम्" इति विश्वः। दारुवर्मणा तन्नामधेयेन रतिमन्दिरे कामागारे सङ्केतगृहे इत्यर्थः। रन्तुं क्रीडितुं समाहूता आमन्त्रिता बालचन्द्रिका मम प्रणयार्थिनी। तं दारुवर्माणं गमिष्यति यास्यति इति हेतोः, दूतिकां सञ्चारिकां सन्निकटं समान्तिकम् अभिप्रेषितवती प्रेरितवती। निजन्तत्वात् द्विकर्मकत्वम्। मणिना मुक्तादिना निर्मितः नूपुरः मञ्जीरः मेखला काञ्ची कटिभूषणम्, कङ्कणं हस्तभूषणम्, कटकं वलयम्, ताडङ्कः कर्णभूषणम्. "ताडङ्कस्तु ताडपत्रं कुण्डलं कर्णवेष्टकः" इति चिन्तामणिः। हारः स्रक् कण्ठभूषणम्, क्षौमं दुकूलं पट्टवस्त्रमित्यर्थः, कज्जलम् अञ्जनम् नेत्रभूषणम्,

तरुणीं, तस्मै मह्यं 'तमिस्रासम्यगनवलोकितपुंभावाय मनोरमस्त्रीवेषाय च, दामोदरमणिमयभूषणानि सूक्ष्माणि चित्रवस्त्राणि, कस्तूरिकामिलितं हरिचन्दनं, कर्पूरसहितं ताम्बूलं, सुरभीणि कुसुमानि, इत्यादि ललितं वस्तुजातं समर्प्य मुहूर्त्तद्वयमात्रं हासवचनैः संलपन् अतिष्ठत् (१७) ततो रागान्धतया सुमुख्यालिङ्गने [कुचग्रहणे] मतिं व्यधत्त।

---

वनितायाः स्त्रियः योग्यम् उपयुक्तमित्यर्थः मण्डनजातं भूषणसमूहं निपुणतया नैपुण्येन तत्र तत्र स्थानेषु यथायोग्यप्रदेशेषु निक्षिप्य समर्प्य इत्यर्थः, सम्यक् सम्यक्प्रकारेण अङ्गीकृतः स्वीकृतः मनोज्ञः मनोहरः वेशः भूषा येन स तथोक्तः। वल्लभया प्रियया बालचन्द्रिकयेत्यर्थः, सह साकं तत् तस्य आगारस्य गृहस्य द्वारं निर्गमनपथं तस्य उपान्तः समीपं तं तथोक्तम्। अगच्छम् अगमम्। द्वारि तिष्ठतीति स्थः; द्वाःस्थेन द्वारपालेन कथितम् आवयोरागमनं यस्मै तेन तथोक्तेन। सादरम् आदरातिशयेन विहिताभ्युत्थानेन कृतप्रत्युद्गमनेन तेन दारुवर्मणा द्वारस्य निर्गमनपथस्य उपान्ते निकटे निवारितः निषिद्धः अशेषपरिवारः पोष्यवर्गः येन तथोक्तेन। मदन्विता मया सह युक्तेत्यर्थः, सङ्केतागारं रतिगृहम् अनीयत अप्राप्यत। 'नियहादेः प्रधानकर्म' इत्युक्तत्वात् सङ्केतागारस्य प्रधाने कर्मणि द्वितीयेति। नगरव्याकुलां नगरेषु जनपदेषु व्याकुलां प्रचारितां यक्षकथां बालचन्द्रिकायक्षाविष्टामित्यर्थः, परीक्षन् इति चिन्त्यम्; परीक्षमाणः इत्येव साधुप्रयोगः। तादृक्प्रयोगे बहुकृतमित्यनेन स्वीकर्त्तव्यमिति। नवरी भव इति शिक्। नागरिको जनः नगरवासिन इत्यर्थः, कुतूहलेन कौतुकेन, प्रतीहारभूमिं द्वारदेशम् अगमत अयात्।

(१७) विवेकेति। विवेकेन दिक्प्रकारित्वेन शून्या रहिता मतिर्यस्य स तथोक्तः। असौ दारुवर्मा रागः अनुरागः तस्य अतिरेकेण आधिक्येन, रत्नेन मौक्तिकादिना खचितः चित्रितः हेमपर्यङ्कः स्वर्णखट्वा तस्मिन्, हंसतूलः हंसस्य कोमलपक्षः इत्यर्थः, गर्भे यस्य तत् शयनं शय्याम् आनीय उपवेश्य तरुणीं यूनीं बालचन्द्रिकामित्यर्थः, तस्मै युवत्यै मह्यं पुरुषोचिताय तमिस्रया तामस्या दर्शयामिन्या हेतुना सम्यक् स्पष्टम् अनवलोकितम् अलक्षितः पुंभावः पौरुष्यं पुरुषत्वमित्यर्थः, यस्य तादृशाय। वेषेति

रोषारुणितोऽहमेनं पर्यङ्कतलात् निःशङ्कं निपात्य मुष्टिजानुपादाघातैः प्राहरम्। नियुद्धरभसविफलम् अलङ्कारं पूर्ववत् मेलयित्वा, भयकम्पितां नताङ्गीम् उपलालयन्, मन्दिराङ्गनम् उपेतः साध्वसकम्पित इव उच्चैः अकूजम् (१८)। 'हा! बालचन्द्रिकाधिष्ठितेन घोराकारेण यक्षेण दारुवर्मा

---

व्याप्नोति घञ् वेषः पचादित्वादच्। स्त्रियः वेषः स्त्रीवेषः मनोरमः मनोज्ञः स्त्रीवेषः यस्य तादृशाय। चामीकरं स्वर्णं मणिः चन्द्रकान्तादिः तयोः विकारः इति मयट्, तानि मणिमयानि भूषणानि। सूक्ष्माणि सूत्रनिर्म्मितानीत्यर्थः "अल्पे स्तोके क्षुद्र सूक्ष्मं श्लक्ष्णकृशं क्षामं तनु" इति शब्दरत्नावली। चित्राणि रमणीयानि वस्त्राणि। कस्तुरिकया मृगमदेन मिश्रितं युक्तं "मृगनाभि मृगमदो मृगकस्तूरिकाण्डजाः" इति रुद्रः। हरिचन्दनं कुङ्कुमं "गोशीर्षं कुङ्कुमे देवदारोऽस्त्री हरिचन्दनम्" इति वैजयन्ती। कर्पूरः घनसारः तेन सहितः तं तथोक्तम्। "घनसारस्तु कर्पूरचन्द्रभस्महिमाह्वयः" इति विश्वाख्य शेषः। ताम्बूलं पर्णं, सुरभीणि सुगन्धीनि कुसुमानि पुष्पाणि। ललितं मनोहरं वस्तुजातं द्रव्यसमूहं समर्प्य दत्त्वेत्यर्थः, मुहूर्त्तो द्वादशक्षणावधिः समयः तस्य वयमात्रम् अल्पार्थे मात्रप्रत्ययः। हासवचनैः हास्ययुक्तवाक्यैः संलपन् अन्योऽन्यं व्याहरन्नित्यर्थः, अतिष्ठत् अभ्यवर्त्तत।

(१८) तत इति। ततः पश्चात् रागान्धतया रागातिशय्येन दृष्टिहीनतयेत्यर्थः, सुमुख्याः सुन्दर्यां बालचन्द्रिकाया आलिङ्गनम् आश्लेषम् उपगूहनमिति यावत्, तस्मिन् तथोक्ते मतिं चित्तम् व्यधत्त अकरोत्। अहं पश्चात् रोषेण क्रोधेन अरुणितः रक्तीभूतः एनं दारुवर्म्माणं पर्यङ्कतलात् खट्वास्थानात् निःशङ्कः शङ्कापरिहीनः सन् निपात्य भूमौ पातयित्वा मुष्टिश्च जानुनी च पादौ च तेषाम् आघाताः तैः। प्राहरम् व्यनाशयम्। नियुद्धे बाहुयुद्धे यो रभसः वेगः तेन विफलं विपर्य्यस्तम् "रभसो वेगहर्षयोः" इति मेदिनी। अलङ्कारं भूषणं पूर्ववत् यथापूर्वमित्यर्थः, मेलयित्वा यथास्थानं सन्निवेश्य इत्यर्थः। भयकम्पितां भयव्याकुलां, नतानि नम्राणि अङ्गानि यस्याः तां तथोक्ताम्। उपलालयन् सान्त्वयन् मन्दिराङ्गनं मन्दिरस्य गृहस्य अङ्गनं चत्वरभूमिम् उपेतः समागतः साध्वसकम्पितः साध्वसं भयं तेन कम्पितः वेपमान इव उच्चैः तारस्वरेण अकूजम् व्याहरम्। अत्राऽपि अप्रयुक्तादि दोषः।

निहन्यते सहसा, समागच्छत, पश्यत इमम्' इति। तदाकर्ण्य मिलिताः जनाः समुद्यद्बाष्पाः हाहानिनादेन दिशो बधिरयन्तो 'बालचन्द्रिकाम् अधिष्ठितं यक्षं बलवन्तं शृण्वन् अपि दारुवर्मा, मदान्धः तामेव अयाचत, तदसौ स्वकीयेन कर्मणा निहतः किं तस्य विलापेन' इति मिथो लपन्तः प्राविशन्। कोलाहले तस्मिन् चटुललोचनया सह, नैपुण्येन सहसा निर्गतो निजावासमगाम्। ततो गतेषु कतिपयदिनेषु, पौरजनसमक्षं सिद्धादेशप्रकारेण विवाह्य, ताम् इन्दुमुखीं, पूर्वसङ्कल्पितान् सुरतविशेषान्, यथेष्टम् अन्वभवम्। बन्धुपाल-शकुननिर्दिष्टे दिवसेऽस्मिन् निर्गत्य पुरात् बहिर्वर्त्तमानो, नेत्रोत्सवकारि भवदवलोकनसुखम् अनुभवामि' इति (१८)

---

(१८) इति। हा विषादे "हा विषादे च शोके च" इति मेदिनी। बालचन्द्रिकाधिष्ठितेन बालचन्द्रिकायत्तीकृतेनेत्यर्थः, घोराकारेण भीषणविग्रहवता यक्षेण भूतेन "पुः पिशाचा भूता यक्षाः" इति हेमः। दारुवर्म्मा बालचन्द्रिकाप्रणयार्थी निहन्यते व्यापाद्यते। सहसा अतर्कितेन शीघ्रमित्यर्थः, समागच्छत समेत पश्यत समीक्षध्वम् इमं दारुवर्म्माणं यूयमिति शेषः। तत्र तादृशं वचः आकर्ण्य श्रुत्वा मिलिताः एकत्रीभूताः जनाः लोकाः समुद्यद्बाष्पाः समुद्यन्ति निर्गच्छन्तीत्यर्थः, बाष्पाणि येषां ते। हाहानिनादेन हाहा इति शब्देन दिशः ककुभः बधिरयन्तः बधिराः कुर्वन्तः उच्चैराक्रोशयन्त इत्यर्थः, बालचन्द्रिकामधिष्ठितं बालचन्द्रिकाश्रितं बलवन्तं महान्तं यक्षं पिशाचं शृण्वन्नपि जानन्नपीत्यर्थः, दारुवर्म्मा मदान्धः मदेन गर्वेण अन्धः दृष्टिहीनः तां यक्षाभिसृतां बालचन्द्रिकाम् अयाचत अप्रार्थयत, तत् तस्मादतएवेत्यर्थः, असौ समीपतरः दारुवर्म्मा स्वकीयेन निजकीयेन कर्मणा अदृष्टवशेन निहतः विनष्टः, तस्य दारुवर्म्मणः विलापेन परिदेवनेन किम् व्यर्थमित्यर्थः, इति इत्यादिरूपं मिथो विलपन्तः एकत्रीभूताः आक्रोशन्तः प्राविशन् प्रागच्छन्। कोलं संघातमाह्वयतीत्यच् कोलाहलः, तस्मिन् कोलाहले तादृशि कलकले चटुललोचनया चटुले चञ्चले लोचने यस्याः तया, सह साकं नैपुण्येन निपुणतया सहसा झटिति निर्गतः बहिर्यातः निजावासं स्वभवनम् अगाम् अगमम्। ततः अनन्तरं

एवं मित्रवृत्तान्तं निशम्य अम्लानमानसो राजवाहनः, स्वस्य च, सोमदत्तस्य च, वृत्तान्तमस्मै निवेद्य, सोमदत्तं महाकालेश्वराराधनानन्तरं 'भवद्वल्लभां सपरिवारां निजकटकं प्रापय्यागच्छ' इति नियुज्य, पुष्पोद्भवेन सेव्यमानो, भूस्वर्गायमाणम् अवन्तिकापुरं विवेश। तत्र 'अयं मम स्वामिकुमारः' इति बन्धुपालादये बन्धुजनाय कथयित्वा, तेन राजवाहनाय बहुविधां सपर्यां कारयन् सकलकलाकुशलो महीसुरवर इति पुरि प्रकटयन् पुष्पोद्भवोऽमुष्य राज्ञो मज्जनभोजनादिकम् अनुदिनं स्वमन्दिरे कारयामास (२०)।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते पुष्पोद्भवचरितं नाम चतुर्थ उच्छ्वासः।

---

कतिपयदिनेषु गतेषु सत्सु पौरजनसमक्षं पौरजनानां पुरवासिनां समक्षं प्रत्यक्षम् अक्ष्णः परमिति 'प्रतिपरसमनुभ्योऽक्ष्णः,' इत्यव्ययीभावः। सिद्धादेशप्रकारेण सिद्धस्य सिद्धपुरुषस्य आदेशः आज्ञा तस्य प्रकारः तेन। विवाह्य परिणीय तामिन्दुमुखीं चन्द्रवदनां बालचन्द्रिकामित्यर्थः, पूर्वसङ्कल्पितान् प्रागीप्सितान् सुरतविशेषान् सुरतं निधुवनं तस्य विशेषः तान्। यथेष्टम् इष्टमनतिक्रम्य यथा तथा अन्वभवम् अनुभवमकरवमित्यर्थः, बन्धुपालस्य शकुनं शकुनज्ञानं शुभाशुभसूचकनिमित्तं वामस्पन्दनकाकादिदर्शनजनितमित्यर्थः, तेन निर्दिष्टः तस्मिन् तथोक्ते। अस्मिन् दिवसे अद्याहनि पुरस्त् भवनात् निर्गत्य समागम्येत्यर्थः, बहिर्वर्त्तमानः बहिःस्थ इत्यर्थः, नेत्रोत्सवकारि नेत्रयोः उत्सवः आनन्दजनकव्यापारः तं करोतीति णिन्। भवतः अवलोकनेन यत् सुखं तत्; अनुभवामि ज्ञानविषयीकरोमीत्यर्थः, इति समाप्तौ।

(२०) एवमिति। एवं पूर्वोक्तरूपं मित्रवृत्तान्तं सुहृद्वार्त्तां निशम्य अवगम्य अम्लानमानसः अम्लानं ग्लानिरहितं मानसं मनः यस्य स तथोक्तः। राजवाहनः राजपुत्रः स्वस्य आत्मनः, सोमदत्तस्य तत्संज्ञकस्येत्यर्थः, वृत्तान्तम् उदन्तम् अस्मै पुष्पोद्भवाय निवेद्य विज्ञाप्य सोमदत्तं तन्नामधेयं सुहृदं नियोज्येति क्रियायाः कर्मपदम्। महाकालेश्वरः शिवः तस्य आराधनम् अर्चनादि तस्य अनन्तरं पश्चं भवद्वल्लभां तव प्रियां सपरिवारां सपरिजनां निजकटकं स्वावासस्थानं प्रापय्य गमयित्वा आगच्छ एहि

# अथ पञ्चमोच्छ्वासः।

अथ मीनकेतनसेनानायकेन मलयगिरिमहीरुहनिरन्तरावासिभुजङ्गमभुक्तावशिष्टेन एव सूक्ष्मतरेण धृतहरिचन्दनपरिमलभरेण इव मन्दगतिना दक्षिणानिलेन वियोगिहृदयस्थं मन्मथानलम् उज्ज्वलयन्, सहकारकिसलयमकरन्दास्वादनरक्तकण्ठानां मधुकरकलकण्ठानां काकलीकलकलेन दिक्चक्रं वाचालयन्, मानिनीमानसोत्कलिकाम् उपनयन् माकन्दसिन्धुवाररक्ताशोककिंशुकतिलकेषु कलिकाम् उपपादयन् मदनमहोत्सवाय रसिकमनांसि समुल्लासयन्, वसन्तसमयः समाजगाम (१)। तस्मिन् अतिरमणीये काले

---

त्वमिति शेषः। इति उक्त्वानुरूपं नियुज्य कार्य्यभारमर्पयित्वेत्यर्थः, पुष्पोद्भवेन सहायेन सेव्यमानः भजमानः राजवाहन इत्यर्थः, भूम्नगीयमानं भुवि पृथिव्यां स्वर्ग इव आचरत् तत्। अवन्तिकापुरम् उज्जयिनीं विवेश प्रविष्टवान्। तत्र उज्जयिन्याम् अयं समीपतरः स्वामिकुमारः प्रभुपुत्रः इति बन्धुपालादये बन्धुपाल आदिर्येषां तस्मै तथाक्ताय। बन्धुजनाय बन्धुमुख्याय इत्यर्थः, कथयित्वा उक्त्वा तेन बन्धुजनेन राजवाहनाय मत्स्वामिकुमाराय बहुविधां नानाप्रकारां सपर्य्यां सत्कारं कारयन् विदधत् सकला समग्रा कला वात्स्यायनोक्तचतुःषष्टिप्रकारा तस्यां कुशलः कृतिः। महीसुरः ब्राह्मणः तेषु वरः श्रेष्ठः इति एवं पुरि नगर्य्यां प्रकटयन् प्रथयन् पुष्पोद्भवः तन्नामधेयः अमुष्य राज्ञः राजवाहनस्य मज्जनभोजनादिकं मज्जनं स्नानं भोजनञ्च ते आदिर्येषां तत् तथोक्तम्। राजोचितस्नानाहारादिकमिति भावः। अनुदिनं दिवसे दिवसे स्वमन्दिरे स्वभवने कारयामास कारितवान्।

(१) अथेति। अथारम्भद्योतकः। मीनः मत्स्यः केतनः ध्वजो यस्य स मीनकेतनः कामः तस्य सेनानायकः नेता अग्रवीर इत्यर्थः, तेन दक्षिणवायोरुद्दीपकत्वेन नायक इत्युक्तिः। मलयगिरेः दक्षिणाचलस्य महीरुहेषु वृक्षेषु निरन्तरमन्तरेण विना

अवन्तिसुन्दरी नाम मानसारनन्दिनी प्रियवयस्यया बालचन्द्रिकया सह नगरोपान्तरम्योद्याने विहारोत्कण्ठया पौरसुन्दरीसमवायसमन्विता 'कस्यचित् चूतपोतकस्य छायाशीतले सैकततले गन्धकुसुमहरिद्राक्षतचीनाम्बरादिना नानाविधेन परिमलद्रव्यनिकरेण मनोभवम् अर्चयन्ती रेमे। तत्र रतिप्रतिकृतिम् अवन्तिसुन्दरीं द्रष्टुकामः काम इव वसन्तसहायः पुष्पोद्भवसमन्वितो राजवाहनः तदुपवनं प्रविश्य, तत्र तत्र मलयमारुतान्दोलितशाखानिरन्तरसमुद्भिन्नकिसलयकुसुमफलसमुल्लासितेषु रसालतरुषु, कोकिलकीरालिमधुकराणाम् आलापान् श्रावं श्रावं किञ्चित् विकसदिन्दीवरकह्लारकैरवराजीवराजिकेलिलोलकलहंससारसकारण्डवचक्रवाकचक्र-

---

श्वासिभिः स्थितैः भुजङ्गमैः सर्पैः भुक्तावशिष्टेन भक्षितशेषेण। सर्पाः वायुभोजिनः इति जनप्रसिद्धिः। एव अवधारणे। सूक्ष्मतरेण अतिसूक्ष्मेण अल्पेनेत्यर्थः। धृतः गृहीतः हरिचन्दनानां मन्दारद्रुमपुष्पाणां चन्दनविशेषाणां वा "हरिचन्दने तैलपर्णिकगोशीर्षे" इति चिन्तामणिः। परिमलभरः सौरभातिशयो येन तथोक्तेन। मन्दगतिना मन्दगमनेन दक्षिणानिलेन दक्षिणवायुना वियोगिनः विरहिणः हृदयस्थं हृदयगतं तं तथोक्तम्। मन्मथानलं कामाग्निम् उज्ज्वलयन् उद्दीपयन्, माकन्दाः अतिसौरभाम्रपादपाः तेषां किसलयः पल्लवः तस्य मकरन्दः पुष्परसः तस्य च आस्वादनेन रक्तः रागयुक्तः कण्ठो येषां तादृशानाम्। मधुकराः भ्रमराः कलकण्ठाः कोकिलाः तेषां तथोक्तानाम्। काकलीनां मधुरास्फुटध्वनीनां कलकलः कोलाहलः तेन। "काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे" इत्यमरः। दिक्चक्रं दिङ्मण्डलं वाचालयन् मुखरीकुर्वन् मानीनां मानयुक्तानां मानसेषु हृदयेषु उत्कलिकाम् उत्कण्ठाम् उपजनयन् जनयन्, माकन्दः सहकारः "माकन्दः सहकारे स्यात्" इति मेदिनी। सिन्धुवारः वृक्षविशेषः, निसिन्दा इति वङ्गीयाः। अशोकः स्वनामप्रसिद्धः, किंशुकः पलाशः, तिलकः तिलकतरुः तेषु तथोक्तेषु। कलिकां कोरकम् उपपादयन् जनयन्, मदनमहोत्सवाय कामोद्दीपनाय रसिकमनांसि कामिजनानां हृदयानि समुल्लासयन् उत्साहयन् वसन्तसमयः ऋतुमुख्यः समाजगाम समुपाययौ।

बालकलरवव्याकुलविमलशीतलसलिललसितानि सरांसि दृष्ट्वा दर्शम् अमन्दलीलया ललनासमीपम् अवाप (२)। बालचन्द्रिकया 'निःशङ्कमित आगम्यताम्' इति हस्तसंज्ञया समाहूतो निजतेजोनिर्जितपुरुहूतो राजवाहनः कृशोदर्या अवन्तिसुन्दर्या अन्तिकं समाजगाम। या वसन्तसहायेन समुत्सुकतया रतेः केलिशालभञ्जिकाविधित्सया कञ्चन नारीविशेषं विरच्य आत्मनः क्रीडाकासारसाराविन्दसौन्दर्येण पादद्वयम्, उद्यानवनदीर्घिकामत्तमरालिकागमनरीत्या लीलालसगतिविलासं, तूणीरलावण्येन जङ्घे, लीलामन्दिरद्वारकदलीलालित्येन मनोज्ञमूरुयुगं, जैत्ररथचातुर्येण घनं जघनं, किञ्चिद्विकसल्लीलावतंसकह्लारकोरककोटरानुवृत्त्या गङ्गावर्तसनाभिं नाभिं, सौधारोहणपरिपाट्या वलित्रयं, मौर्वीमधुकरपङ्क्तिनीलिमलीलया रोमावलिं, पूर्णसुवर्णकलसशोभया कुचद्वन्द्वं, लतामण्डपसौकुमार्येण बाहू, जयशङ्खाभिख्यया कण्ठं, कामिकर्णपूरसहकारपल्लवरागेण प्रतिबिम्बोकृतबिम्बं रदनच्छदं, बाणायमानपुष्पलावण्येन शुचिस्मितम्, अग्रदूतिकाकलकण्ठिका कलालापमाधुर्येण वचनजातं, सकलसैनिकनायकमलयमारुतसौरभ्येण निश्वासपवनं, जयध्वजमीनदर्पेण

---

(१) तस्मिन्निति। तस्मिन् तदा अतिरमणीये अतिमनोज्ञे काले समये अवन्तिसुन्दरी अवन्तिषु देशविशेषेषु सुन्दरी रामा। नाम्ना अवन्तिसुन्दरीत्यर्थः। मानसारस्य मालवेश्वरस्य नन्दिनी पुत्री प्रियवयस्यया प्रियसख्या बालचन्द्रिकया तदाख्यया सह सार्धं नगरोपान्तरम्योद्याने नगरस्य उपान्ते एकदेशे रम्ये मनोज्ञम उद्यानम् आक्रीड़ं तस्मिन्। विहारोत्कण्ठया विहारार्थं या उत्कण्ठा उत्कलिका उद्वेग इति यावत् तया। पौरसुन्दरीणाम अन्तःपुरस्थस्त्रीणां समवायः संहतिः तेन समन्विता युक्ता। कस्यचित् कस्यापि चूतपोतकस्य, अल्पार्थे कः, बालाम्रतरोः छायाशीतले प्रच्छाये, सैकततले सिकतामयप्रदेशे, गन्धः चन्दनादिः कुसुमं पुष्पं वा गन्धकुसुमं

लोचनयुगलं, चापयष्टिश्रिया भ्रूलते, प्रथमसुहृदः सुधाकरस्य अपनीतकलङ्कया कान्त्या वदनं, लीलामयूरबर्हभङ्ग्या केशपाशञ्च विधाय समस्तमकरन्दकस्तूरिकासम्भितेन लसजरसेन प्रक्षाल्य कर्पूरपरागेण संमृज्य निर्मिता इव रराज (२)।

---

सौगन्धिकं पुष्पं, हरिद्रा ओषधिविशेषः, अक्षतं आतपतण्डुलः लाजाः, वा चीनाम्बरं चीनदेशोद्भवं वस्त्रं, सूक्ष्मवस्त्रमिति यावत्, एतानि आदीनियस्य तेन। नाना बहु प्रकाराः विधा यस्य तेन। परिमलानि सौरभाणि द्रव्याणि तेषां निकरः समूहः तेन। मनोभवं कामम् अर्चयन्ती पूजयन्ती रेमे चिक्रीड़ मोदितवतीत्यर्थः। तत्र उद्याने रतिप्रतिकृतिं कामस्त्रीप्रतिमाम् अवन्तिसुन्दरीं मानसारपुत्रीं द्रष्टुकामः द्रष्टुं कामः यस्य स तथोक्तः। 'तुमः काममनसोः' इति श्रीपतिसूत्रेण मकारस्य लोपः। कामः कन्दर्पः वसन्तसहायः वसन्तः सहचरः इव पुष्पोद्भवसमन्वितः युक्तः राजवाहनः, कामो यथा वसन्तसहायेन प्रतिभाति तथा पुष्पोद्भवसहायेन राजवाहन इति भावः। तत् नगरोपान्तवर्त्तिनम् उपवनं कृत्रिमवनं प्रविश्य गत्वा तत्र तत्र तेषु तेषु किसलयाः पल्लवाः कुसुमानि पुष्पाणि फलानि इति द्वन्द्वः, मन्दमारुतेन दक्षिणानिलेन आन्दोलिताः चालिताः शाखाः ताभिः निरन्तरम् अवच्छिन्नं मसृणितानि विकसितानि किसलयकुसुमफलानि तैः उल्लासितानि प्रफुल्लानि तेषु तथोक्तेषु। रसालतरुषु चूतवृक्षेषु, कोकिलाः पिकाः, कीराः शुकाः, तेषाम् आलयः पङ्क्तयः, मधुकराः भ्रमराः तेषां तथोक्तानाम् आलापान् रवान् श्रावं श्रावं श्रुत्वा श्रुत्वा किञ्चिदीषत् विकसन्ति इन्दीवराणि नीलोत्पलानि कह्लाराणि सौगन्धिकानि 'सुँदि' इति येषां वङ्गभाषायां प्रसिद्धिः। कैरवाणि कुमुदानि राजीवानि पद्मानि इति द्वन्द्वः, तेषां राजयः समूहाः तेषु या केलिः क्रीड़ा तया लोलाः चञ्चलाः ये कलहंसाः 'बालिहाँस' इति प्रसिद्धाः ; सारसाः पक्षिविशेषाः कारण्डवाः 'खञ्जहाँस' इति नाम्ना ख्याताः चक्रवाकाश्च तेषां चक्रवालं मण्डलं तस्य कलरवैः व्याकुलं व्याप्तं विमलं स्वच्छं शीतलञ्च यत् सलिलं जलं तेन ललितानि मनोहराणि सरांसि सरोवराणि दर्शं दर्शं दृष्ट्वा दृष्ट्वा अमन्दलीलया दीर्घसुखचेष्टया ललनासमीपं कामिन्याः अन्तिकम् अवाप लेभे प्राप्तवानिति यावत्।

(२) बालेति। बालचन्द्रिकया कस्तूरी, निःशङ्कं मृगाङ्कितम् इतः अधिकन् स्थाने आगम्यताम् ईयतां भवतीति शेषः। इति एवं हस्तसंज्ञया करसङ्केतेन समाहूतः आमन्त्रितः निजतेजसा आत्मानुभावेन निःशेषं जितः पुरुहूतः पुरन्दरो येन स

सा मूर्त्तिमतीव लक्ष्मीः मालवेशकन्यकाऽऽस्ते। सैवाराध्यमान-सङ्कल्पितवरप्रदानाय आविर्भूतं मूर्त्तिमन्तं मन्मथमिव तम् आलोक्य मन्दमारुतान्दोलिता लता इव मदनावेशवती चकम्पे। तदनु क्रीडाविश्रम्भात् निवृत्ता लज्जया कानि कानि अपि भावान्तराणि व्यधत्त। ललनाजनं सृजता विधात्रा नूनमेषा घुणाक्षरन्यायेन निर्मिता। नो चेत् अब्जभूः एवं विध-

---

तथोक्तः। क्षामम् उदरं यस्याः तथोक्तायाः, अवन्तिसुन्दर्य्याः राजदुहितुः अन्तिकं समीपं समाजगाम समाययौ गतवानिति यावत्। या अवन्तिसुन्दरी यस्मात्कारणेन कन्दर्प-संमुत्सुकतया समुत्कण्ठिततया रतिपरिहीनतया क्षणमपि स्थातुमशक्नुवतीति भावः। केलियोग्यभञ्जिका क्रीडापुत्तलिका तस्याः विधित्सया विधानेच्छया। कञ्चन कमपि नारीविशेषम् अपूर्व्वरमणीमूर्त्तिमित्यर्थः, विरच्य निर्म्माय आत्मनः स्वस्य क्रीडाकासारः केलिसरः तस्मिन् सारार्थं श्रेष्ठानाम् अरविन्दानां रक्तपद्मानां सौन्दर्यं कमनीयत्वं तेन। "कासारः सरसी सरः" इत्यमरः। पादद्वयं चरणयुग्मम्। उद्यानवने उपवने या दीर्घिका वापी तस्यां या मत्ता हृष्टा मराळिका राजहंसी तस्याः या गमन-रीतिः तया तथोक्तया, मन्थरगामिन्येत्यर्थः। लीलया शृङ्गारभावचेष्टया वा अलसा मन्दा मन्थरा इत्यर्थः, गतिः तस्याः विलासं भावयुक्तं तत् तथोक्तम्। तूणीरः तूणः "तूणोपासङ्गतूणीरः" इत्यमरमाला। तस्य लावण्येन सौन्दर्य्येण अङ्के प्रसृते, गुल्फोर्द्ध्वजान्वधोभागः अङ्केति। लीलामन्दिरं केलिगृहं तस्य द्वारि या कदली रम्भा तस्याः लालित्येन सौन्दर्य्येण मनोज्ञं मनोहरम् ऊरुयुगं जानूपरिभागम्। जैत्री जयसाधनं यो रथः तस्य चातुर्य्येण नैपुण्येन घनं सान्द्रं जघनं श्रोणी। किञ्चित् ईषत् विकसत् फुल्लत् लीलावतंसकह्लारं लीलाकर्णभूषणकह्लारं तस्य कोरकः कलिका तस्य कोटरं निष्कुहः तस्य अनुहत्या अनुकरणेन। "निष्कुहः कोटरं वा ना" इत्यमरः। गङ्गायाः यः आवर्त्तः जलभ्रमः तस्य सनाभिः सहोदरः समान इत्यर्थः, तादृशं नाभिमुदारावर्त्तः। "स्यादावर्त्तोऽम्भसां भ्रमः" इत्यमरः। सौधेषु हर्म्येषु यत् आरोहणं सोपानं तस्य परिपाट्या रचनाक्रमेण, वलित्रयं वलीनामुदरस्थानां त्रयम्, उदरस्थितत्रयीरेखामित्यर्थः। नीलवर्णा ज्या, या मधुकराणां पङ्क्तिः तस्याः नीलिमा नीलत्वं तस्य लीलया विलासेन रोमावलिं रोमपङ्क्तिम्। पूर्ण-

निर्माणनिपुणो यदि स्यात्, तर्हि तत्समानलावण्याम् अन्यां तरुणीं किं न करोति ? इति सविस्मयानुरागं विलोकयतः तस्य सम्मुखं स्थातुं लज्जिता सा किञ्चित् सखीजनान्तरिता-ङ्गाभवत्। तत्र वदनाभिमुखैः किञ्चिदाकुञ्चितैः अञ्चितभ्रूलतैः अपाङ्गवीक्षितैः आत्मनः कुरङ्गस्य आनाययमानलावण्यं राज-

---

योग्येनेति भेदः, सुवर्णकलशौ तयोः या शोभा तया कुचद्वन्द्वं पयोधरयुगलम्। अनङ्गस्य मन्दिरद्वारस्थमङ्गलसूचकौ कलशाविति भावः। लतायाः मण्डपः जन-विश्रामगृहं तस्य सौकुमार्यं सुन्दरत्वं तेन बाहू भुजौ। जयशंखस्य अभिख्यया शोभया कण्ठं कण्ठदेशम्। कामिनः विलासिनः कर्णपूरः अवतंसः सहकारपल्लवः चूत-किसलयः तस्य रागः रक्तः तेन प्रतिबिम्बीकृतम् अनुकृतं बिम्बं तदाख्यं फलं येन तादृशं रदनच्छदम् ओष्ठम्। "ओष्ठाधरौ तु रदनच्छदौ" इत्यमरः। बाणायमानं बाणः इषुः तद्वत् आचरत् यत् पुष्पं तस्य लावण्येन सौन्दर्येण शुचि शुभ्रं स्मितं मन्दहासं मृदु इति यावत्। अग्रदूतिका प्रधानदूती या कलकण्ठिका कोकिला तस्याः कलः मधुराव्यक्तः यः आलापः तस्य माधुर्येण वचनजातं वाक्यसमूहम्। सकलानां सैनिकानां योद्धानां नायकः नेता मलयमारुतः दक्षिणानिलः तस्य सौर-भ्येण गन्धेन निश्वासपवनं निश्वासवायुम्। जयध्वजः विजयचिह्नं ध्वजं केतनमेव मीनः तस्य दर्पेण गर्वेण लोचनयुगलं नेत्रद्वयम्। चापरूपा मधुराकारिता या यष्टिः तस्याः श्रिया कान्त्या भ्रूलते भ्रूयुग्मे। प्रथमः मुख्यः सुहृत् मित्रं तस्य सुधा-करस्य चन्द्रस्य अपनीतः दूरीकृतः कलङ्कः लाञ्छनं यया तया कान्त्या शोभया वदनम् आस्यम्। चन्द्रचन्दनरोलम्बादीनां शृङ्गारोद्दीपकत्वात् ते कामस्य सुहृदः, तत्र चन्द्रस्य प्रथमाभिहितत्वात् स एव प्रथमसुहृदित्युक्तम्। लीलामयूरस्य नृत्यपरायणस्य शिखिनः बर्हं पिच्छं तस्य भङ्ग्या रचनया केशपाशं चिकुरकलापं विधाय कृत्वा समस्ताभिः सकलाभिः मकरन्दाः पुष्परसाः कस्तूरिकाः मृगमदाश्च ताभिः सम्मिलितेन युक्तेन मलयजरसेन चन्दनद्रवेण प्रक्षाल्य संशोध्य कर्पूरपरागेण कर्पूर-रजसा संसृज्य संमिश्रितेत्यर्थः, निर्मितेव रचितेव रराज दिदीपे शोभितवतीत्यर्थः। अनात्मनः क्रीडाकागार इत्यादि लीलामयूरबर्हभङ्ग्या केशपाशमित्यन्तं वैयधिकरण्येन रूपकम्। अपनीतकलङ्कया कान्त्या वदनमित्यत्र तु अधिकारूढवैशिष्ट्यम्।

वाहनं विलोकयन्ती अतिष्ठत् (४)। सोऽपि तस्याः तदा उत्पादितभावरसानां सामग्र्या लब्धबलस्य इव विषमशरस्य शरव्यायमाणमानसो बभूव। सा मनसि इत्थम् अचिन्तयत्—'अनन्यसाधारणसौन्दर्य्येण अनेन कस्यां पुरि भाग्यवतीनां तरुणीनां लोचनोत्सवः क्रियते। पुत्ररत्नेन अमुना पुरन्ध्रीणां

---

(४) सेति। सा अवन्तिसुन्दरी मूर्त्तिमतीव विग्रहवत्येव लक्ष्मीः श्रीः मालवेश-कन्यका मालवाधिपतेः दुहिता आस्ते वर्त्तते। सैव अवन्तिसुन्दरी आराध्यमानं सेव्य-मानं सङ्कल्पितः मनसि चिन्तितः यो वरः अभीष्टः तस्य प्रदानाय प्रदातुम् आवि-र्भूतमुपस्थितं मूर्त्तिमन्तं विग्रहवन्तं मन्मथमिव काममिव तं राजवाहनम् अवलोक्य पर्य्यवेक्ष्य मन्दमारुतेन मृदुवायुना आन्दोलिता चालिता लता वल्लरी इव मदनस्य कामस्य आवेशः संरम्भः तद्वती चकम्पे दुधुवे वेपथुमतीत्यर्थः। तदनु तदनन्तरं क्रीडायाः विलासस्य विश्रम्भः विश्वासः तस्मात्। निवृत्ता निराकृता लज्जा यया तथोक्तया कानि कानि अपि अनिर्वचनीयान्यपीत्यर्थः, भावान्तराणि अन्यभावानि स्वभाववैप-रीत्यावस्थानीत्यर्थः, व्यधत्त आविष्कृतवती। ललनाजनं कामिनीकुलं सृजता निर्म्मात्रा विधात्रा वेधसा नूनं निश्चितं "नूनन्तु निश्चिते तर्के" इति मेदिनी। एषा समी-पतरा अवन्तिसुन्दरी घुणाक्षरन्यायेन घुणः काष्ठवेधकारी कीटविशेषः स काष्ठं भिन्दन् कदाचित् अक्षराकारं काष्ठखण्डम् आविष्करोति स एव घुणाक्षरन्यायः। तेन 'अनवरतप्रमदाजननिर्म्माणपटो र्व्वेधसो हस्तात् दैववशेन ईदृशी नारी निर्गलि-तेति भावः। नो चेत् यद्येवं न स्यात् तर्हीत्यर्थः, अब्जभूः स्रष्टा एवंविधाः एतादृशं निर्म्माणं यस्य तस्मिन् निपुणः दक्षः। यदि यद्यपि एवंविधः निर्म्माणः पटुरेव स्यादित्यर्थः, तर्हि तदा तत्समानलावण्यां तस्याः समानं तुल्यं लावण्यं सौन्दर्य्यं यस्याः तां तथोक्ताम्। अन्याम् अपरां तरुणीं यूनीं किं कथं न करोति विदधाति। विकथेन सह अनुरागं यथा तथा विलोकयतः पश्यतः तस्य राजवाहनस्य समक्षं प्रत्यक्षं सा अवन्तिसुन्दरी किञ्चिदसाकूल्यं सखीजनेषु वयस्यासु अन्तरितं मध्यं गतं गात्रं शरीरं यस्याः सा तथोक्ता। तन्नयनाभिमुखैः तस्य राजवाहनस्य नयने नेत्रे तयोरभिमुखं सम्मुखं तैः तथोक्तैः। किञ्चिदल्पम् आकुञ्चितैः वक्रीकृतैः अञ्चितभ्रू कुञ्चितभ्रूः तस्याः तत्त्वं स्वरूपं तैः तथोक्तैः। आत्मनः स्वस्य कुरङ्गस्य मृगस्य आनाय-मानलावण्यम् आनायः जालं स इव आचरतीति क्यङ्, ततः शानच्, तादृशं लावण्यं

ग्यवतीनां सीमन्तिनीनां का नाम सीमन्तमौक्तिकीक्रियते। का अस्य देवी, किमत्र आगमनकारणम् अस्य। कामो माम् अपहसितनिजलावण्यम् एनं विलोकयन्तीम् असूयया इव अतिमात्रं मथ्नन् निजनाम सान्वयं करोति। किं करोमि, कथमयं ज्ञातव्यः' इति (५)। ततो बालचन्द्रिका तयोः इतरेतररागप्रवृत्तिं भावविवेकैः ज्ञात्वा कान्तासमाज-

---

सौन्दर्यं यस्य तत् तथोक्तम्। जालपतितः कुरङ्गो यथा जालं नातिक्रमितुं शक्नोति तथा साऽपि राजवाहनमिति भावः। विलोकयन्ती पश्यन्ती अतिष्ठत् अध्यवर्ततेत्यर्थः। ललनेत्यादिवाक्यकदम्बके घुणाक्षरन्यायेन निर्माणासम्बन्धेऽपि तत्सम्बन्धोक्तेरति-शयोक्तिः। आत्मनः कुरङ्गस्येति उपमा स्पष्टा, आनायमानीत्युपमानुसाराद् द्वयोरुपमयो-रङ्गाङ्गिभावेन सङ्करः।

(५) स इति। सोऽपि राजवाहनः तस्याः अवन्तिसुन्दर्याः तदा तस्मिन् समये उत्पादितानां प्रकाशितानां भावानां विकारविशेषाणां यथाह दर्पणे—"निर्विकारात्मके चित्ते भावः प्रथमविक्रिया" इति। रसानां शृङ्गाराभिलाषाणां सामग्र्या कारणेन लब्धं प्राप्तं बलं येन तस्य। विषमाः भयानकाः तीव्रा इत्यर्थः, शराः बाणाः यस्य मदनस्येत्यर्थः। शरव्यं लक्ष्यं तदिवाचरतीति क्यङि शानच्, तादृशं मानसं मनः यस्य स तथोक्तः। बभूव आसीत्, अत्र क्रियोत्प्रेक्षा, क्यङ्गतोपमयोरङ्गाङ्गिभावेन सङ्करः। सा अवन्तिसुन्दरी मनसि चित्ते इत्थं वक्ष्यमाणरूपम् अचिन्तयत् अनन्यसाधारणं न यथा तथा लभ्यमित्यर्थः, सौन्दर्यं लावण्यं तेन तथोक्तेन। 'अनेन राजवाहनेन। पुरि निकेतने, भाग्यवतीनां सुभगानां तरुणीनां यूनीनां लोचनोत्सवः नयनानन्दः क्रियते विधीयते। पुत्ररत्नेन पुत्रश्रेष्ठेन। पुरन्ध्रीणां कुटुम्बिनीनां पुत्रादियुक्तगृहिणीना-मित्यर्थः, सीमन्तिनीनां नारीणाम्। सीमन्तः केशवेशः तस्य मौक्तिकं मण्डनमित्यर्थः, अस्य पुरुषस्य का देवी विवाहिता स्त्री? किं कारणम् अत्र अस्मिन् उद्याने आगमनकारणम् उपस्थितिहेतुः? मन्मथः कामः नाम अवन्तिसुन्दरीम् अपहसितं तिरस्कृतं निजलावण्यम् आत्मसौन्दर्यं येन तं तथोक्तम्। एनं राजवाहनं विलोकयन्तीं पर्यवेक्षमाणां, गुणेषु [illegible] असूयया [illegible] अतिमात्रम् अतिशयं मथ्नन् विलोडयन् निजनाम स्वं [illegible] सान्वयम् अन्वर्थम्। किं करोमि

सन्निधौ राजनन्दनोदन्तस्य सम्यगाख्यानम् अनुचितमिति लोकसाधारणैः वाक्यैः अभाषत—'भर्तृदारिके ! अयं सकलकलाप्रवीणो देवतासान्निध्यकरण आहवनिपुणो भूसुरकुमारो मणिमन्त्रौषधज्ञः परिचर्य्यार्हो भवत्या पूज्यताम्' इति। तदाकर्ण्य निजमनोरथम् अनुवदन्त्या बालचन्द्रिकया सन्तुष्टान्तरङ्गा तरङ्गावली, मन्दानिलेन इव सङ्कल्पजेनाकुलीकृता राजकन्या जितमारं कुमारं समुचितासनासीनं विधाय, सखीहस्तेन मस्तेन गन्धकुसुमाक्षतघनसारताम्बूलादिना नानावस्तुनिचयेन पूजां तस्मै कारयामास (६)

---

अत्र विषये मे किं करणीयमस्तीत्यर्थः, कथं केन प्रकारेण किं व्यपदेशेनेति भावः। अयं युवा राजवाहन इत्यर्थः, ज्ञातव्यः बोध्यः यथायथपरिचयेन मे ज्ञानविषयीभूतो भविष्यतीत्यर्थः।

(६) तत इति। 'बालचन्द्रिका तयोः अवन्तिसुन्दरीराजवाहनयोः। इतरेतररागवृत्तिम् अन्योन्यानुरागप्रकारम्। भावविवेकैः अभिप्रायाभिनिवेशैः, ज्ञात्वा विदित्वा कान्तासमाजसन्निधौ कान्तानां नारीणाम अवन्तिसुन्दर्याः सखीनिवहानामित्यर्थः, समाजः संघः तस्य सन्निधिः तस्मिन्। राजनन्दनस्य राजवाहनस्य उदन्तः वृत्तान्तः तस्य तथोक्तस्य। सम्यक् यथायथम् आख्यानं कीर्तनम् अनुचितम् अयुक्तम् इति हेतोः, लोकसाधारणैः जनसामान्यग्राह्यैः वचनैः अभाषत अब्रवीत्। राजवाहनस्य तस्मिन् देशे आत्मगूहनत्वात् तत्परिचयं व्यक्तीकरणमनुचितमित्यवगम्य जनसाधारण-वाक्यैरभाषतेत्यर्थः। भर्तृदारिके राजनन्दिनि, अयं जनः सकलकलाप्रवीणः सकलासु कलासु शिल्पशास्त्रेषु प्रवीणः दक्षः। देवसान्निध्यकरणः देवानां सान्निध्यं क्रियते अनेनेति तथोक्तः। मन्त्रादिप्रभावेण देवतासाक्षात्कारकः इत्यर्थः। आहवनिपुणः आहवेषु युद्धेषु निपुणः कुशलः। भूसुरकुमारः ब्राह्मणपुत्रः, मणिः सूर्यकान्तादिः, मन्त्रं देवताबीजम्, औषधं भेषजं, जानातीति ज्ञा कः। परिचर्य्यार्हः सेव्यः, भवत्या त्वया पूज्यताम् अर्च्यताम्। तत् तादृशं वाक्यम् आकर्ण्य श्रुत्वा निजमनोरथम् आत्माभिरुचितम् अनुवदन्त्या तुल्यं कथयन्त्या बालचन्द्रिकया सख्या सन्तुष्टान्तरङ्गा संतुष्टचित्ता,

राजवाहनोऽपि एवम् अचिन्तयत्—'नूनमेषा पूर्वजन्मनि मे जाया यज्ञवती, नोचेत् एतस्याम् एवंविधानुरागो मन्मनसि न जायेत । शापावसानसमये तपोनिधिदत्तं जातिस्मरत्वम् आवयोः समानमेव, तथापि कालज्ञानविशेषसूचकालापैः अस्या ज्ञानमुत्पादयिष्यामि' । तस्मिन् एव समये कोऽपि मनोरमो राजहंसः, केलिविधित्सया तदुपकण्ठम् अगमत् । समुत्सुकया राजकन्यया मरालग्रहणे नियुक्तां बालचन्द्रिकां समवलोक्य 'समुचितो वाक्यावसर एषः' इति सम्भाषणनिपुणो राजवाहनः सलीलमलपत्—'सखि ! पुरा शाम्बो नाम कश्चित् महीवल्लभो मनोवल्लभो मनोवल्लभया सह विहारवाञ्छया, कमलाकरम् अवाप्य तत्र कोकनदकदम्बसमीपे निद्राधीनमानसं राजहंसं शनैः गृहीत्वा बिसगुणेन तस्य चरणयुगलं निगडयित्वा, कान्तामुखं सानुरागं विलोकयन् मन्दस्मितविकसितैककपोलमण्डलः, ताम् अभाषत (७)—'इन्दुमुखि ! मया बद्धो मरालः शान्तो मुनिवदास्ते । स्वेच्छयानेन गम्यताम्' इति । सोऽपि राजहंसः

---

तरङ्गवती सरित् मन्दानिलेन मृदुनाधुना एव सङ्कल्पजेन मनोभवेन आकुलीकृता इदं जिता राजकन्या अवन्तिसुन्दरी, जितसार जितः पराजितः सारः कामः येन तम् । कुमारं राजवाहनं समुचितं योग्यम् आसनं पीठं तस्मिन् आसीनम् उपविष्टं तं तथोक्तम्, विधाय कृत्वा सखीहस्तेन सहचरीपाणिना ग्रस्तेन मङ्गलेन, गन्धः सुरभिः, कुसुमं पुष्पं, घनसारं कर्पूरम्, एतानि आदिर्येषां तेन । नाना च ते वस्तुविशेषा तेषां निचयः समूहः तेन । तत्र कुमाराय पूजां सम्बर्द्धनामित्यर्थः, कारयामास निर्वर्तयामास अधात: श्लिष्ट् । श्लेषोपमाच्छेकानुप्रासयोः संसृष्टिरलङ्कारः ।

(७) राजेति । एवं वक्ष्यमाणप्रकारम् अचिन्तयत् अभावयत् । नूनं निश्चितम् एषा दृष्टिपथवर्तिनी पूर्वजन्मनि प्राक्तने मे मम जाया पत्नी यज्ञवती तन्नाम्नी, नोचेत् नैवेत्यर्थः, एतस्यां युवत्याम् एवंविधः एवम् एतत्प्रकारं विधा यस्य सः । अनुरागः

शाम्बस् अशपत्—'महीपाल ! यत् अस्मिन् अम्बुजखण्डे अनुष्ठानपरायणतया परमानन्देन तिष्ठन्तं नैष्ठिकं माम् अकारणं, राज्यगर्वेण अवमानितवानसि। तदेतत् पाप्मना रमणीविरहसन्तापम् अनुभव।' इति विषण्णवदनः शाम्बो जीवनेश्वरीविरहमसहिष्णुर्भूमौ दण्डवत् प्रणम्य, सविनयमभाषत(८)

---

भावाभिनिवेशः मन्मनसि मम चित्ते न जायेत उत्पद्येत। शापस्य अभिसम्पातस्य अवसानम् अन्तः तस्य समयः कालः तस्मिन्। तपोनिधिः मुनिः तेन दत्तम् अर्पितं जातिस्मरत्वं पूर्वजातिस्मरणमित्यर्थः, आवयोः अवन्तिसुन्दर्य्याः मम च समानमेव तुल्यमेव, तथापि जातिस्मरत्वं समानेऽपीत्यर्थः, कालजनितः कालोत्पन्नः यो विशेषः तस्य सूचकं ज्ञापकं वाक्यं तैः तथोक्तैः। अस्याः अवन्तिसुन्दर्य्याः, ज्ञानम् पूर्व्वजन्मज्ञानमित्यर्थः, उत्पादयिष्यामि संजनयिष्यामि। तस्मिन्नेव समये तत्काले कोऽपि कश्चित् मनोरमः मनोज्ञः राजहंसः मरालः केलिविधित्सया केलिः क्रीड़ा तस्या विधित्सा कर्त्तुमिच्छा तया तथोक्तया। तदुपकण्ठं सरस्तीरम् अगमत अयात्। समुत्सुकया औत्सुक्यवत्या राजकन्यया अवन्तिसुन्दर्य्या मरालग्रहणे हंसग्रहणे नियुक्तां व्यापृतां वालचन्द्रिकां सहचरीं समवलोक्य पर्य्यवेक्ष्य समुचितः उपयुक्तः वाक्यावसरः कथनस्य प्रशस्तसमय इत्यर्थः, इति हेतोः सम्भाषणनिपुणः सम्भाषणे सम्यगालापने निपुणः दक्षः यः स तथोक्तः। सलीलं लीलया विलासेन सह वर्त्तमानं यथा तथा अवदत् अभाषत। सखि राजकन्य, पुरा प्राक् समये शाम्बो नाम तन्नामधेयः कश्चित् कोऽपि महीवल्लभः राजा मनोवल्लभः प्रियः मनोवल्लभया प्रियया सह सार्द्धं विहारवाञ्छया केलिकामेन कमलाकरं सरः अवाप्य लब्ध्वा, तत्र सरसि कोकनदानां रक्तपद्मानां कदम्बः समूहः तस्य समीपं निकटं तस्मिन्। निद्रयाँ अधीनम् आयत्तीकृतं मानसं मनः यस्य तम् तथोक्तम्। राजहंसं मरालं शनैः स्वैरम् अगौमे-नेत्यर्थः, गृहीत्वा धृत्वा बिसगुणेन मृणालतन्तुना तस्य हंसस्य चरणयुगलं पादद्वयं निगड़यित्वा निबध्य कान्तामुखं दयितावदनं सानुरागम् अत्यन्तासक्तियुक्तं विलोकयन् पश्यन् सन् मन्देन मृदुना स्मितेन हास्येन विकसितः उत्फुल्लः एकः मुख्यः श्रेष्ठ इति यावत्, कपोलमण्डलः गण्डस्थलं यस्य स तथोक्तः। तां कान्ताम् अभाषत अब्रवीत्।

(८) इन्दु इति। इन्दुमुखि इन्दुः चन्द्रः इव मुखं यस्याः तस्याः सम्बुद्धिः। मया

'महाभाग! यदज्ञानेन अकरवं तत् क्षमस्व' इति। स तापसः करुणाक्लिष्टचेताः तम् अवदत्—'राजन्! इह जन्मनि भवतः शापफलाभावो भवतु, मद्वचनस्य अमोघतया भाविनि जनने शरीरान्तरं गतायाः अस्याः सरसिजाक्ष्या दयितेन रमणो भूत्वा मुहूर्त्तद्वयं मच्चरणयुगलबन्धनकारितया मासद्वयं शृङ्खलनिगड़ितचरणो रमणीवियोगविषादम् अनुभूय, पश्चादनेककालं वल्लभया सह, राज्यसुखं लभस्व' इति। तदनु जातिस्मरत्वमपि तयोः अन्वग्रहीत्, तस्मात् मरालबन्धनं न करणीयं त्वया' इति (८)। सापि भर्त्तृदारिका तद्वचनाकर्णनाभिज्ञातस्वपुरातनजननवृत्तान्ता न नमयं 'मत्प्राणवल्लभः' इति मनसा जानती, रागपल्लवितमानसा समन्दहासम्

---

शाप्वेन बद्धः निगड़ितः मरालः राजहंसः श्रान्तः समयुक्तः मुनिवत् स्थिरधीरिव आसीत् वर्त्तते। स्वेच्छया आत्माभिलाषेण अनेन हंसेन सह गम्यताम् हंसेन सह क्रीडतामित्यर्थः, सोऽपि निगडितचरणोऽपि राजहंसः शाप्वं तन्नामधेयं राजानम् अशपत् अभिसम्पातयामास। तत् शापवाक्यमाह—महीपाल इति, महीपाल हे भूप, यत यस्मात् अस्मिन् समीपतरे अम्बुजखण्डे अम्बुजानां पद्मानां खण्डः सकलः तस्मिन्, पद्मसमूहानामेकदेशे इत्यर्थः, अनुष्ठानपरायणतया विजितेन्द्रियेणेत्यर्थः, परमानन्देन अतिसुखेन तिष्ठन्तं वर्त्तमानं नैष्ठिकमाबाल्यात् ब्रह्मचारिणं, निष्ठा अर्थात् ब्रह्मतामाचरतीति ठक्। मां हंसम् अकारणम् अहेतुकं राज्यगर्वेण राज्याहङ्कारेण अवमानितवान् निर्भर्त्सितवान् असि, त्वमिति शेषः। तत् तस्मात् एतेन पाप्मना पापेन रमणीविरहसन्तापं रमणी स्त्री तस्याः विरहः विच्छेदः तेन जन्यः सन्तापः दुःखं तं तथोक्तम्। अनुभव स्वीकुरु, इति हेतोः शापकारणादित्यर्थः, विषण्णवदनः मलिनमुखः शाम्बः, जीवनेश्वर्य्याः वल्लभायाः विरहः विच्छेदः तम् असहिष्णुः सहनाक्षमः यः स तादृशः। भूमौ धरण्यां दण्डवत् दण्ड इव विलुण्ठन्नित्यर्थः, प्रणम्य अभिवन्द्य सविनयं विनयपूर्वम् अभाषत अब्रवीत्।

·(८) महाभागेति। महाभाग हे दयादिगुणयुक्त, यत यस्मात् अज्ञानेन मोहपरवशेन अकरवम् कृतवान्, तत् अपराधं क्षमस्व मर्षय। स तापसः तपस्वी

अवोचत्—'सौम्य! पुरा शाम्बो यज्ञवतीसन्देशपरिपालनाय तथाविधं हंसबन्धनम् अकार्षीत्। तथाहि, लोके पण्डिता अपि दीर्घदर्शित्वेन अकार्यं कुर्वन्ति' इति (१०)। कन्याकुमारौ एवम् अन्योऽन्यपुरातनजननामधेये परिचिते, परस्परज्ञानाय साभिज्ञम् उक्त्वा मनोजरागपूर्णमानसौ बभूवतुः।

---

करुणाक्रान्तचेताः दयार्द्रहृदयः सन्, तं राजानम् अवदत् अकथयत्। राजन् हे नृपते, इह अस्मिन् जन्मनि वर्त्तमानदेहे भवतः तव, शापफलाभावः शापस्य अभिसम्पातस्य फलं कार्यं परिणतिरित्यर्थः, तस्य अभावः अन्यथाभावः भवतु घटिष्यतीत्यर्थः, ममाभिसम्पातः न त्वां बाधतामिति भावः। मद्वचनस्य मम वाक्यस्य अमोघतया अन्यथात्व न भाविनि भविष्यति जननै उत्पत्तौ शरीरान्तरं भिन्नदेहं गतायाः अस्याः तव प्रयस्याः सरसिजाक्ष्याः पद्मनयनायाः रसेन अनुरागेण रमणः सुखं इत्यर्थः। मुहूर्त्तद्वयं किञ्चिन्न्यूनाधिकघटिकाद्वयरूपः कालः मुहूर्त्तः, तस्य द्वयम्। मम चरणं तस्य युगलं युग्मं तयोर्बन्धनं तत् कारितया हतेन मासद्वयं द्वितयमासं शृङ्खलनिगडितचरणः शृङ्खलेन लौहमयपादबन्धनेन निगडितः संयमितः चरणं यस्य स तथोक्तः। रमण्याः स्त्रियः वियोगः विच्छेदः तस्मात् यः विषादः दैन्यं तं तथोक्तम्। अनुभूय ज्ञानविषयीकृत्येत्यर्थः, पश्चात् ततःपरम्, अनेककालं बहुदिनं व्याप्य वल्लभया दयितया सह साकं राज्यसुखं राज्योपभोगं लभस्व प्राप्नुहि। तदनु पश्चात् तयोः दम्पत्योः जातिस्मरत्वमपि प्राग्देहीयसंस्कारज्ञानमपि अस्त्वस्तु इत्यलसत। तस्मात् अतएव मरालबन्धनं हंसनिगडनं न करणीयं कर्त्तव्यं त्वया भवता।

(१०) साप्रीति। सा भर्तृदारिका राजकन्या अवन्तिसुन्दरी तस्य वचनं वाक्यं तस्य आकर्णनं श्रवणं तेन अभिज्ञात सम्यक् परिस्फुरितं स्वस्य आत्मनः पुरातनजननम् प्राक्देहधारणं तस्य वृत्तान्तः वार्त्ता यस्याः सा तथोक्ता। नूनं निश्चितम् अयं जनः मत्प्राणवल्लभः मम जीवनेश्वरः इति एवं मनसा चित्तेन जानती ज्ञातवती रागपल्लवितमानसा अनुरागपूर्णहृदया समन्दहासं मन्दहासेन सहितं यथा तथा अबोधत् अभाषत। सौम्य हे भद्र, पुरा प्राक् शाम्बः नृपः यज्ञवती शाम्बस्य महिषी तस्याः सन्देशः वाक्यं तस्य परिपालनाय रक्षणाय तथाविधं तेन भावेनेत्यर्थः, हंसबन्धनं

तस्मिन् अवसरे मालवेन्द्रमहिषी परिजनपरिवृता दुहितृकेलिविलोकनार्थं तं देशम् अवाप। बालचन्द्रिका तु तां पुरतो विलोक्य ससम्भ्रमं रहस्यनिर्भेदभिया, हस्तसंज्ञया, पुष्पोद्भवसेव्यमानं राजवाहनं वृक्षवाटिकान्तरितगात्रम् अकरोत्। सा मानसारमहिषी, सखीसमेतया दुहितुः नानाविधां विहारलीलामनुभवन्ती, क्षणं स्थित्वा, दुहित्रा समन्विता निजागारगमनाय उद्युक्ता बभूव (११)। मातरम् अनुगच्छन्ती अवन्तिसुन्दरी, 'राजहंसकुलतिलक ! विहारवाञ्छया

---

हंसस्य नयनम् अकार्षीत् कृतवान्। तथाहि अतएवेत्यर्थः, लोके संसारे पण्डिताः विद्वांसोऽपि दाक्षिण्यं परच्छन्दानुरोधः तेन, स्त्रीणां प्रीणनेनेत्यर्थः, अकार्यं गर्हितं कुर्वन्ति विदधति। अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः।

(११) कन्येति। कन्या राजकुमारी कुमारः राजवाहनः तौ। एवम् एवंप्रकारम् अन्योऽन्यं परस्परं पुरातनस्य प्राक्तनस्य जननम् उत्पत्तिः तस्य नामधेयः नाम तस्मिन् तथोक्ते। परिचिते ज्ञाते सति परस्परज्ञानाय अन्योऽन्याभिज्ञानायेत्यर्थः, साभिज्ञं साभिज्ञानम् उक्त्वा प्रकटीकृत्य मनोजः कामः तस्य रागः अनुरागः तेन पूर्णं मानसं मनः ययोः तौ तथोक्तौ। तस्मिन् अवसरे तदा मालवेन्द्रमहिषी मालवपट्टाभिषिक्ता परिजनपरिवृता सेवकजनसहाया दुहितुः कन्यकायाः केलिः क्रीडा तां विलोकनाय दर्शनाय तं देशं नगरोपान्तस्थोद्यानस्थानं अवाप संप्राप्तेति समागतवतीत्यर्थः। बालचन्द्रिका तां महिषीं दूरतः असामीप्यात् विलोक्य दृष्ट्वा ससम्भ्रमं सत्वरं रहस्यस्य गोप्यस्य निर्भेदः प्रकाशः तस्य भिया भयेन, रहस्यं भिद्येतेति शङ्कयेत्यर्थः, हस्तसंज्ञया हस्तसंकेतेन पुष्पोद्भवेन सेव्यमानं परिचर्यमाणं राजवाहनं राजपुत्रम्, 'अमात्यानां गणिकानाञ्च गृहोपवनमुद्यानं वृक्षवाटिका वृक्षप्रधानवाटिकेति शाकपार्थिवादित्वात् समासः। अत्र तु वृक्षवाटिका निकुञ्जः तस्याम् अन्तरितं प्रावृतं गात्रं देहम् अकरोत् व्यदधत् कृतवतीत्यर्थः। सा उद्यानागता मानसारमहिषी मानसारपट्टाभिषिक्ता सखीसमेतायाः वयस्यायुक्तायाः दुहितुः पुत्र्याः नानाविधां बहुप्रकारां विहारलीलां क्रीडासुखम् अनुभवन्ती ज्ञानविषयीकुर्वन्ती क्षणं मुहूर्तं स्थित्वा विश्रम्येत्यर्थः, दुहित्रा कन्यकया समन्विता युक्ता निजागारगमनाय स्वभवनं यातुम् उद्युक्ता उद्यता।

केलिवने मदन्तिकमागतं भवन्तम् अकाण्ड एव विसृज्य मया समुचितमिति जनन्यनुगमनं क्रियते, तदनेन भवन्मनोऽनुरागोऽन्यथा मा भूत्' इति मरालमिव कुमारमुद्दिश्य समुचितालापकलापं वदन्ती पुनः पुनः परिवृत्तदीननयना वदनं विलोकयन्ती निजमन्दिरम् अगात् (१२)। तत्र हृदयवल्लभकथाप्रसङ्गे बालचन्द्रिकाकथिततदन्वयनामधेया मन्मथबाणपतनव्याकुलमानसा, विरहवेदनया दिने दिने बहुलपक्षशशिकला इव क्षामक्षामा आहारादिसकलव्यापारं परिहृत्य, रहस्यमन्दिरे मलयजरसक्षालितपल्लवकुसुमकल्पिततल्पतलावर्तिततनुलता बभूव। तत्र तथाविधाम् अवस्थाम् अनुभवन्तीं, मन्मथानलसन्तप्तां सुकुमारीं कुमारीं निरीक्ष्य खिन्नो वयस्यागणः काञ्चनकलशसञ्चितानि हरिचन्दनोशीरघनसारमिलितानि तदभिषेककल्पितानि, सलिलानि बिसतन्तुमयानि वासांसि च, नलिनीदलमयानि तालवृन्तानि च, सन्ताप-

---

(१२) मातरमिति। मातरं जननीम् अनुगच्छन्ती पश्चात् यान्ती अवन्तिसुन्दरी राजहंसस्य विहङ्गमविशेषस्य कुले वंशे तिलकः इव भूषणभूतः। पक्षे राजहंसस्य राजहंसनामधेयस्य राज्ञः कुले तिलकः। विहारयात्रया केलिमात्रेण केलिवने प्रमदोद्याने मदन्तिकं मम समीपम् आगतं समुपस्थितं भवन्तं त्वाम् अकाण्डे सहसा एव विसृज्य त्यक्त्वा समुचितं युक्तम् इति हेतोः जनन्याः मातुः अनुगमनं पश्चात् गमनं क्रियते मयेत्यन्वयः। तत् तस्मात् अनेन ईदृशगमनेन भवन्तं प्रति मनसोऽनुरागः प्रीतिः, अन्यथा अन्यप्रकारं माभूत्, अन्यप्रकारं न परिभावयेत्यर्थः। इति एवं प्रकारं मरालमिव हंसमिव कुमारमुद्दिश्य लक्षीकृत्य समुचितं युक्तम् आलापस्य सम्भाषणस्य कलापः समूहः तं तथोक्तं, वदन्ती कथयन्ती पुनः पुनः वारं वारं परिवृत्य अभिमुखीभूय दीननयना कारुण्यपूर्णनेत्रा वदनं मुखमिति शेषः। विलोकयन्ती परिपश्यन्ती निजमन्दिरम् आत्मगृहम् अगात् अयात्।

इत्यानि बहूनि सम्पाद्य, तस्याः शरीरम् अशिशिरयत् (१३) तदपि शीतलोपचरणं सलिलमिव तप्ततैले, तदङ्गं दहनमिव समन्तादाविश्चकार । किंकर्तव्यतामूढां विषण्णां बालचन्द्रिकाम् ईषदुन्मीलितेन कटाक्षवीक्षितेन बाष्पकणाकुलेन विलोक्य, विरहानलोष्णनिःश्वासम्लपिताधरया नताङ्ग्या

---

(१२) तत्रेति। तत्र गृहे हृदयवल्लभस्य प्रियस्य कथायाः प्रसङ्गः प्रस्तावः तस्मिन् तथोक्ते। बालचन्द्रिकया कथिते तस्य राजनन्दनस्य अन्वर्थनामधेये कुलनामनी यस्यां तथोक्ता। मन्मथः कामः तस्य बाणाः तेषां पतनं पातः तेन व्याकुलं चञ्चलं मानसं यस्याः सा तथोक्ता। विरहवेदनया विच्छेदव्यथया दिने दिने प्रतिदिने बहुलपक्षः कृष्णपक्षः तस्मिन् या शशिकला इन्दुकला सेव। "पक्षः स बहुलोऽसितः" इति हैमः। क्षामक्षामा अतिकृशा, आहारादिसकलव्यापारं भोजनादिक्रियाकलापं परिहृत्य त्यक्त्वा रहस्यमन्दिरे निर्जने भवने मलयजः चन्दनं तस्य रसः द्रवः तेन क्षालितं शीतं पल्लवकुसुमकल्पितं किसलयपुष्परचितं तल्पतलं शय्या तत्र आयतः अधिकृतः तनुलताः देहावयवः यस्याः सा तथोक्ता। तत्र तादृशीमव्याग्रां तथाविधाम् अवस्थां मन्मथव्याकुलामित्यर्थः, अनुभवन्ती ध्यानविषयीकुर्वन्ती अनाथाम् अलसन्तप्तां काम-पीडितामित्यर्थः, सुकुमारीम् अतिकोमलां कुमारीं राजकन्यां निरीक्ष्य दृष्ट्वा खिन्नः दुःखितः वयस्यगणः सखीसमूहः काञ्चनकलशे हेमघटे सञ्चितानि गृहीतानि, हरिचन्दनं श्वेतचन्दनम् उशीरं वीरणमूलं घनसारः कर्पूरः तैः मिश्रितानि युक्तानि तानि तथोक्तानि। तस्याः कुमार्याः अभिषेकः स्नानं तत् कल्पितानि विहितानीत्यर्थः, सलिलानि जलानि, बिसानां मृणालानां तन्तवः सूत्राणि तन्मयानि निर्मितानि युक्तानीत्यर्थः, वासांसि वसनानि, नलिनीदलमयानि पद्मपत्रखचितानि तालवृन्तानि व्यजनानि, सन्तापहरणानि देहतापनिवारकानि तदुक्तं चाह सुश्रुतः—"शीतं विधानमत ऊर्ध्वमहं प्रवक्ष्ये, दाहप्रशान्तिकरमग्निमतां नराणाम्। तत्रादितो मलयजेन हितः प्रदेहः, चन्द्रांशुहार-तुहिनोदकशीतलेन ॥ शीताम्बुशीतलतरैश्च शयानमेवं हारैर्बालवलयैरबलाः स्पृशेयुः। भिन्नोत्पलोज्ज्वलहिमे शयने शयीत, पत्रेषु वा कजलबिन्दुषु पद्मिनीनाम् ॥ दाहाभिभूतम् अथवा परिषेचयेत्तु, शीतैरुशीरजलचन्दनवारिभिस्तम् ॥" इति। बहूनि विविधानि सम्पाद्य विरच्य तस्याः राजकन्यायाः शरीरं देहम् अशिशिरयत् शीतलीचकार, वयस्यागण इति सम्बन्धः।

शनैः सगद्गदं व्यलापि—'प्रियसखि ! कामः कुसुमायुधः पञ्चबाण इति नूनमसत्यम् उच्यते। इयमहम् अयोमयैः असङ्ख्यैः इषुभिः अनेन हन्ये। सखि ! चन्द्रमसं वाडवानलात् अतितापकरं मन्ये (१४)। यदस्मिन् अन्तःप्रविशति, शुष्यति पारावारः, सति निर्गते तदा एव वर्द्धते। दोषाकरस्य दुष्कर्म किं वर्ण्यते मया ? यदनेन निजसोदर्याः पद्मालयायाः गेह-भूतमपि कमलं विहन्यते। विरहानलसन्तप्तहृदयस्पर्शेन नूनम् उष्णीकृतः, स्वल्पीभवति मलयानिलः, नवपल्लवकल्पितं तल्पम् इदम् अनङ्गाग्निशिखापटलम् इव सन्तापं तनोः तनोति।

---

(१४) तदपीति। तत् प्रागुक्तशैत्यादिनिषेकमपीत्यर्थः, तप्ततैले उत्तप्ततैले शीतलोपचरणं शैत्यप्रेचणरूपमित्यर्थः, सलिलमिव जलवत् तदङ्गे तस्याः राजकन्यायाः शरीरे दहनमिव अग्निमिव समन्तात् चतुर्दिचु आविश्चकार उत्पादयामास। अत्र शीत-क्रियायाः सन्तापानुत्पत्तिविषमालङ्कारः, श्रौत्युपमा, वाच्या भावाभिमानिनीक्रियोत्प्रेक्षा चेत्यमीषामङ्गाङ्गिभावेन सङ्करः। किंकर्त्तव्यता विमूढां कर्त्तव्यविषये हतचेतना-मित्यर्थः, विषण्णां खिन्नमानसं बालचन्द्रिकां सखीम् ईषदुन्मिलितेन किञ्चिदुन्मेषितेन कटाक्षवीचितेन लोचनपर्य्यवेक्षणेन बाष्पकणाशा अश्रुलवशेषेण आकुलः व्याप्तः तेन तथोक्तेन। विलोक्य पर्य्यवेक्ष्य विरहानलः उष्णनिःश्वासः तेन ग्लपितः दैन्यं गतः अधरः ओष्ठः यस्याः तथा तथोक्तया। मताङ्ग्या नमितदेहया शनैः मन्दं सगद्गदम् अव्यक्तास्फुटशब्द-सहितं व्यलापि अवाचि वक्ष्यमाणवाक्यमिति शेषः। प्रियसखि हे बालचन्द्रिके, कामः मदनः कुसुमायुधः कुसुमंमायुधं यस्य स तथोक्तः। पञ्च पञ्च संख्यकाः बाणाः यस्य स तथोक्तः। नूनं निश्चितम् असत्यम् अयथार्थम् उच्यते शास्त्रकारैरिति शेषः। यदि कामस्यायुधं कुसुममयं तर्हि कथमेतादृशं पीडयति ? कथं वा पञ्चसंख्यकनिर्दिष्टाः बाणाः बहुभिराकारितैर्मां प्रहरतीति भावः। इयं पुरोवर्त्तिन्यहम् अयोमयैर्लौह-निर्म्मितैः असंख्यैः संख्यातीतैः इषुभिर्बाणैः अनेन कामेन हन्यते पीड्यते इत्यर्थः। अत्र अपह्नुत्यनुप्राणितोत्प्रेक्षालङ्कारः। सखि बालचन्द्रिके, चन्द्रमसं विधुं वाड़वानलात् अम्बुनिधेरन्तर्गताग्नेः अतितापकरम् अतिसन्तापजनकम् मन्ये अनुभवामीत्यर्थः। अत्रोत्प्रेक्षालङ्कारः।

हरिचन्दनमपि पुरा निजयष्टिसंश्लेषवदुरगरदनलिप्तोल्वणगरलसङ्कुलितम् इव तापयति शरीरम्। तस्मादलमलम् आयासेन, शीतलोपचारे लावण्यजितमन्मथो राजकुमार एव अस्मदङ्गस्य मन्मथज्वरापहरणे, सोऽपि लब्धुमशक्यो मया, किं करोमि' (१५) इति। बालचन्द्रिका मनोजज्वरावस्थापरमकाष्ठां गतां कोमलाङ्गीं तां, राजवाहनलावण्याधीनमानमाम् अनन्यशरणाम् अवेक्ष्य आत्मनि अचिन्तयत्—'कुमारः सत्वरमानेतव्यो मया, नो चेदेनां स्मरणीयां गतिं नेष्यति मीनकेतनः। तत्र उद्याने कुमारयोः अन्योन्यावलोकनवेलायाम् असमसायकः समं

---

(१५) यदिति। यत यस्मात् अस्मिन् चन्द्रमसि अन्तः जलमध्ये प्रविशति सति पारावारः समुद्रः शुष्यति जलशून्यं करोतीत्यर्थः, निर्गते बहिरागते सति तदेव तस्मिन्नेव काले वर्धते वृद्धिं याति। दोषा रात्रिस्तां करोतीति दोषाकरः चन्द्रः, तस्य "दोषा रात्रौ भुजेऽपि च" इति विश्वः। दुष्कर्म दुष्कार्यं किं वर्ण्यते विशेषेण प्रपद्यते इत्यर्थः, अत्र श्लेषालङ्कारः। यत् यस्मात् अनेन चन्द्रमसा निजसोदर्याः भगिन्याः पद्मालयायाः लक्ष्म्याः, चन्द्रमसः लक्ष्म्याश्चैकपारावार एव जनकत्वेन सोदर्यमिति भावः। गेहभूतमपि निवासस्थानमपि कमलं पद्मं विहन्यते। रात्रौ हि पद्मानि मुद्यमानानि भवन्तीति भावः। अत्र पूर्ववाक्यसमर्थनात् काव्यलिङ्गालङ्कारः। विरहानलेन विच्छेदवह्निना सन्तप्तं उष्णीकृतं हृदयं मनः तस्य स्पर्शः तेन। नूनं निश्चितम्, उष्णीकृतः सन्तापो विहितः. स्वल्पीभवति सङ्कोचत्वमादधते इत्यर्थः, मलयानिलः मलयमारुतः। अत्रोत्प्रेक्षालङ्कारः। इदं नवपल्लवकल्पितं नूतनकिसलयाकीर्णं तल्पं शयनम् अनङ्गाग्निशिखापटलम् अनङ्गः कामः तद्रूपोऽग्निः तस्य शिखापटलं अर्चिःसमूहमिव सन्तापमुष्मानं तनोः शरीरस्य तनोति विस्तारयति। अत्र रूपकानुप्राणितोत्प्रेक्षा-विषमालङ्कारयोः सङ्करः। हरिचन्दनमपि श्वेतमलयजमपि पुरा प्राक् निजयष्टेः निजाश्रयस्य तरुकाण्डस्य संश्लेषवन्तः आश्लिष्टाः ये उरगाः सर्पाः तेषां रदनेषु दन्तेषु लिप्तं स्थितं यत् उल्वणं व्यक्तं गरलं विषं तेन सङ्कुलितं व्याप्तमिव जर्जरितमिवेति यावत्, शरीरं कायं तापयति संतापं जनयतीत्यर्थः, अत्रोत्प्रेक्षालङ्कारः। तस्मात् अत एव अलमलं निरर्थकम् आयासेन चेष्टया, वारणार्थेनाम तृतीया। शीतलोपचारे शीतल-

मुक्तसायकोऽभूत्। तस्मात् कुमारानयनं सुकरम्।' ततोऽवन्तिसुन्दरीरक्षणाय समयोचितकरणीयचतुरं सखीगणं नियुज्य राजकुमारमन्दिरम् अवाप (१६)। पुष्पबाणबाणतूणीरायमाणमानसोऽनङ्गतप्तावयवसम्पर्कपरिम्लानपल्लवशयनम् अधिष्ठितो राजवाहनः, प्राणेश्वरीम् उद्दिश्य सह पुष्पोद्भवेन, संलपन् आगतां प्रियवयस्याम् आलोक्य, पादमूलम् अन्वेषणीया लता इव बालचन्द्रिका आगतेति सन्तुष्टमनाः, निटिलतटमण्डनीभवदम्बुजकोरकाकृतिलसदञ्जलिपुटाम् 'इतो निषीद' इति (१७) निर्दिष्टसमुचितासनासीनाम् अवन्तिसुन्दरीप्रेषितं

---

व्यवहारे। लावण्येन सौन्दर्येण जितः पराभूतः मन्मथः कामः येन स तथोक्तः। राजकुमारः राजवाहन एव अगदङ्कारः चिकित्सकः, 'कारिमन्यागदङ्कार' इत्यनेन मुम्। मन्मथज्वरापहरणे कामरोगोपशमने, सोऽपि राजकुमारोऽपि अलं प्राय नायकः अनुभावनीयः, मया अवन्तिसुन्दर्यां कथा, किं करोमि, अत्र कि करणीयमित्यर्थः।

(१६) बालचन्द्रिकेति। मनोजः कामः तस्य ज्वरावस्था पीडादशा तस्याः परमकाष्ठा चरमसीमा तां गतां प्राप्तां कोमलाङ्गीं सुकुमारीं तां राजनन्दिनीं राजवाहनस्य लावण्यं सौन्दर्यं तस्य अधीनम् आयत्तं मानसं मनः यस्याः तां तथोक्ताम्। अनन्यशरणां नान्यानुरक्तामित्यर्थः, अवेक्ष्य दृष्ट्वा आत्मनि मनसि अचिन्तयत् अभावयत्। कुमारः राजवाहनः सत्वरं शीघ्रम् आनेतव्यः संगृहीतव्य इत्यर्थः, मया बालचन्द्रिकया कथा, नो चेत् नहि एनां कुमारीं अरणीयां गतिं नेष्यति अन्त्यां दशां प्रापयिष्यतीत्यर्थः, मीनकेतनः कामः। तत्र नगरीपान्ते रम्योद्याने, कुमारयोः कुमारी च कुमारश्च तयोरित्येकशेषः। अन्योन्यावलोकनवेलायां परस्परावेक्षमाणसमये अमसमायकः तीव्रशरः कामः इत्यर्थः, समभिककाले मुक्तसायकः प्रविमुक्तबाण इत्यर्थः, अभूत्। वेधमकरोदित्यर्थः, तस्मादतएव कुमारानयनं राजवाहनानयनं सुकरं सुखसाध्यम्। ततः अनन्तरम् अवन्तिसुन्दरीरक्षणाय अवन्तिसुन्दरीं सेवितुं समयोचिते अवस्थामिदं करणीयं कर्तव्यं तस्मिन् चतुरः दक्षः तं तथोक्तम्। सखीगणं वयस्यावृन्दं नियुज्य सन्निविश्य राजकुमारस्य राजपुत्रस्य मन्दिरं गृहम् अवाप लेभे।

(१७) पुष्पेति। पुष्पबाणः कामः तस्य बाणः शरः सन्मोहनादिः, तूणीरः शराश्रयः

सकर्पूरं ताम्बूलं विनयेन ददतीं तां कान्तावृत्तान्तम् अपृच्छत्। तया सविनयम् अभाणि—'देव! क्रीडावने भवदवलोकनकालम् आरभ्य मन्मथमथ्यमाना पुष्पतल्पादिषु तापशमनम् अलब्धवती, वामनेनेव उन्नततरुफलमलभ्यं त्वदुरःस्थलालिङ्गनसौख्यं स्मरान्धतया लिप्सुः सा, स्वयमेव पत्रिकाम् आलिख्य, 'वल्लभाय एनाम् अर्पय' इति मां नियुक्तवती।' राजकुमारः पत्रिकां ताम् आदाय पपाठ (१८)—

---

तदिवाचरतीति क्यङ्, ततः शानच्। तूणीरायमाणं मानसं मनो यस्य स तथोक्तः, अनङ्गेन कामेन तप्तः उष्णीकृतः अवयवानां शरीराणां सम्पर्कः सम्बन्धः तेन परिम्लानं शुष्यमाणं पल्लवशयनं किसलयाकीर्णशय्याम् अधिष्ठितः आरोहितः राजवाहनः प्राणेश्वरीं प्रेयसीम् उद्दिश्य अनुसन्धाय सह पुष्पोद्भवेन वयस्येन सार्धं संलपन् संकथयन् आगतां समुपस्थितां प्रियवयस्यां बालचन्द्रिकाम् आलोक्य दृष्ट्वा पादमूलं पाददेशम् अन्वेषणीया अन्वेषणार्हा अन्वेष्टव्येति यावत्, या अन्विष्यते सेवेत्यर्थः, सैव पादमूलम् आमपादान्तिकं स्वयमागतेयं बालचन्द्रिका ममान्तिकमागता, इति हेतोः सन्तुष्टमनाः परितुष्टचेताः, निटिलतटस्य ललाटदेशस्य मण्डनीभवत्, अलङ्कारीभवत् यत् अम्बुजकोरकं कमलकलिका तस्याकृतिरिव लसत् दीप्यमानम् अञ्जलिपुटम् बद्धाञ्जलिः यस्याः ताः तथोक्तां शिरसि कृताञ्जलिपुटामित्यर्थः, इतः अस्मिन् निषीद उपविश।

(१८) निर्दिष्टेति। निर्दिष्टं प्रदर्शितं समुचितं योग्यम् आसनं पीठं तस्मिन् आसीना स्थिता। तां तथोक्ताम्। अवन्तिसुन्दरीप्रेषितं प्रेरितं सकर्पूरं कर्पूरेण सहितं ताम्बूलं पर्णं विनयेन अनुनयेन सहेति शेषः। ददतीम् अर्पयन्तीं तां बालचन्द्रिकां कान्तावृत्तान्तं दयितावार्ताम् अपृच्छत् जिज्ञासयामास। तया बालचन्द्रिकया सविनयं विनयपूर्वकम् अभाणि अभाषि। देव भो राजकुमार, क्रीडावने क्रीडोद्याने भवतः तव अवलोकनमीक्षणं तस्य कालः समयः तत आरभ्य मन्मथेन कामेन मथ्यमाना पीड्यमाना पुष्पतल्पादिषु कुसुमादिशय्यासु तापशमनम् उष्णोपशमनम् अलब्धवती अप्राप्तवती वामनेनेव ह्रस्वाकृतिजनेन उन्नततरुफलम् उच्चवृक्षफलमलभ्यम् अलभनीयं, तव उरःस्थलं वक्षः तद् आलिङ्गनेन आश्लेषणेन यत् सौख्यं तत् तथोक्तम्। अत्र इवशब्दः उपमा द्योतकः। स्मरान्धतया कामज्वरेण पीडितत्वेनेत्यर्थः, लिप्सुः

सुभग ! कुसुमसुकुमारं जगदनवद्यं निरीक्ष्य ते रूपम् ।
मम मानसमभिलषति त्वं चित्तं कुरु तथा मृदुलम् ॥ १९

इति पठित्वा सादरम् अभाषत—'सखि ! छायावत् माम् अनुवर्तमानस्य पुष्पोद्भवस्य वल्लभा त्वमेव तस्या मृगीदृशो बहिश्चराः प्राणा इव वर्तसे । त्वच्चातुर्यम् अस्यां क्रियालतायाम् आलवालम् अभूत् । यत्तवाभीष्टं, येन क्रियामनोरथः फलिष्यति तदखिलं करिष्यामि । नताङ्ग्या मन्मनः काठिन्यम् आख्यातं यदा केलिवने कुरङ्गनयनालोचनपथम् अवर्तम् (२०) तदैव अपहृतमदीयमानसा सा स्वं मन्दिरम् अगात् । सा चेतसो माधुर्यकाठिन्ये स्वयमेव जानाति । 'दुष्करः कन्यान्तःपुरप्रवेशः, तदनुरूपम् उपायम् उपपाद्य श्वः परश्वो वा नताङ्गीं

---

लब्धुमिच्छति 'सनिप्रत्ययान्त भिक्षासुः' इति उः । सा तव वल्लभा राजकुमारीत्यर्थः, स्वयमेव आत्मना पत्रिकाम् लिपिम् आलिख्य लिखित्वा वल्लभाय दयिताय एनां पत्रीम् अर्पय देहि इति एवमुक्त्वेति शेषः । तां बालचन्द्रिकां नियुक्तवती सन्दिष्टवती । राजकुमारः राजवाहनः तां पत्रिकां लिपिम् आदाय गृहीत्वा पपाठ पाठं चकार ।

(१९) सुभगेति । शुभः भगः माहात्म्यादिः यस्य स सुभगः प्रियः तस्यामन्त्रणम् । कुसुममिव सुकुमारं पेलवं जगति अनवद्यं निर्दोषं ते तव रूपं सौन्दर्यं निरीक्ष्य मम मानसं चित्तम् अभिलषति अभिकाङ्क्षति, तव रूपं त्वां चेति शेषः । यथा तवरूपं मृदुलं पेलवं तथा चित्तमपि कोमलं कुरु, मामनुगृहाण इत्याशयः ।

(२०) इतीति । इति पठित्वा आकर्ण्य सादरम् आदरातिशयेन अभाषत अवोचत । सखि, हे बालचन्द्रिके, छायावत् अनातप इव मां राजवाहनम् अनुवर्तमानस्य पश्चात् स्थितस्य पुष्पोद्भवस्य मत्सख्युः त्वमेव वल्लभा प्रिया, तस्या मृगीदृशः मृगनयनायाः अवन्तिसुन्दर्याः बहिश्चराः बहिश्चरन्ति ये ते तथोक्ताः, प्राणाः असव इव वर्तसे, त्वमेव तस्याः प्राणसमा ते प्राणा अन्तर्निवसन्ति, त्वद्रूपा बहिश्चरन्तीति तात्पर्यम् । त्वच्चातुर्यं तव दाक्षिण्यम् अस्यां क्रियालतायां क्रियैव लता तस्याम् आलवालम् आ समन्तात् जललवमालातीति आ लाधातोः कः ; वृक्षमूलसेकार्थं पात्रम् अभूत् । यत्तवाभीष्टं तव वाञ्छनीयं येन प्रकारेण क्रियासु तत्तत् मनोजव्यापारेषु मनोरथः

सङ्गमिष्यामि। मदुदन्तम् एवम् आख्याय शिरीषकुसुमसुकुमाराया यथा शरीरबाधा न जायेत, तथाविधम् उपायम् आचर' इति। बालचन्द्रिकाऽपि तस्य प्रेमगर्भितं वचनम् आकर्ण्य सन्तुष्टा कन्यापुरम् अगच्छत् (२१)। राजवाहनोऽपि यत्र हृदयवल्लभावलोकनसुखम् अलभत तत् उद्यानं विरहवेदनविनोदाय पुष्पोद्भवसमन्वितो जगाम। तत्र चकोरलोचनावचितपल्लवकुसुमनिकुरम्बं महीरुहसमूहं शरदिन्दु-

---

दृक्षाकाङ्क्षा, अथवा क्रियया वात्स्यायनोक्तालिङ्गनचुम्बनादिदैहिकव्यापारेण युक्तः मनोरथः कामः फलिष्यति घटिष्यते सफलो भविष्यतीत्यर्थः, तत् तस्मात् अखिलं सर्वं करिष्यामि अहं राजवाहन इति शेषः। स्तनभारेण नतमङ्गमस्याः इति ङीप्; तया तथोक्तया, मन्मनः मम मानसं काठिन्यं कठोरम् आख्यातं वर्णितं, यदा यस्मिन् काले केलिवने क्रीड़ोद्याने कुरङ्गनयनायाः मृगीदृशः आलोचनपथं दृष्टेरन्तर्गतमित्यर्थः, अवर्त्तमित्यत्र वृत्तेः द्युद्भ्य इत्यनेन ङविधानेन अङ्य परस्मैपदमावविषयत्वात् लुङि परस्मैपदमिति।

(२१) तदेवेति। तदेव उद्याने दर्शनवेलायामेव अपहृतं चोरितं मदीयं मतसम्बन्धीयं मानसं मनः यया सा तथोक्ता। सा वल्लभा राजकुमारी स्वम् आत्मनः मन्दिरं गृहम् अगात् अयात् गतवती। सा राजकन्या चेतसः चित्तस्य माधुर्यं मधुरत्वं काठिन्यं कठोरत्वं ते तथोक्ते। स्वयमेव आत्मना जानाति ज्ञातवती, दुर् दुःखेन क्रियते इति कृधातोः खल्; दुष्करः दुःसाध्यः कन्यायाः कुमार्य्याः अन्तःपुरम् अवरोधः तत्र प्रवेशः। तदनुरूपं तस्य प्रवेशस्य अनुरूपं तुल्यम् उपायं साध्यम् उपपाद्य संपाद्य श्वः आगामिनि दिवसे, परश्वस्तत्परस्मिन् दिवसे, वा विकल्पे, नताङ्गीं स्तनभरेण नमितदेहां सङ्गमिष्यामि संपूर्वकस्य गमेरिह सकर्मकत्वेन नात्मनेपदम्। मदुदन्तं मम वृत्तान्तम् एवं एवम्प्रकारम् आख्याय वर्णयित्वा शिरीषस्य तन्नामकवृक्षस्य कुसुमं तद्वत् सुकुमारा कोमला तथोक्तायाः; यथा येन प्रकारेण शरीरबाधा देहस्य विघ्नमित्यर्थः, न जायेत नोत्पद्येत, तथाविधं तादृशम उपायम् आचर कुरु। बालचन्द्रिकापि तस्य कुमारस्य प्रेमगर्भितं प्रेमयुक्तं वचनं वाक्यम् आकर्ण्य श्रुत्वा सन्तुष्टा परितुष्टा कन्यकापुरं राजकुमार्य्यावरोधम् अगच्छत् अगमत् गतवतीत्यर्थः।

मुख्या मन्मथसमाराधनस्थानञ्च, नताङ्गीपदपङ्क्तिचिह्नितं शीतलसैकततलं च, सुदतीभुक्तमुक्तं माधवीलतामण्डपान्तरपल्लवतल्पञ्च विलोकयन्, ललनातिलकविलोकनवेलाजनितशेषाणि स्मारं स्मारं मन्दमारुताकम्पितानि नवचूतपल्लवानि, मदनाग्निशिखा इव चकितो दर्शं दर्शं मनोजकर्णेजपानाम् इव, कोकिलकीरमधुकराणां क्वणितानि श्रावं श्रावं, मारविकारेण क्वचिदपि अवस्थातुम् असहिष्णुः परिबभ्राम (२२)। तस्मिन् अवसरे धरणीसुर एकः सूक्ष्मचित्रनिवसनः स्फुरन्मणिकुण्डलमण्डितो मुण्डितमस्तकमानवसमेतः चतुरवेषमनोरमो

---

(२२) राजेति। राजवाहनोऽपि अथ यस्मिन्नुद्याने, हृदयस्य मनसः वल्लभा प्रिया तस्याः अवलोकने सन्दर्शने यत् सुखं तत् तथोक्तम्। अलभत प्राप्तवान्, तत् उद्यानं आक्रीडं विरहस्य विच्छेदस्य वेदनं वेदना दुःखमित्यर्थः, तस्य विनोदनाय प्रशमनाय पुष्पाङ्कर्समन्वितः युक्तः सन् जगाम ययौ गतवानिति यावत्। तत्र उद्यानं, चकोराविव लोचने यस्याः तया चकोराक्ष्या हृदयवल्लभयेत्यर्थः, अवचितानि पल्लवकुसुमनिकुरम्बाणि किसलयपुष्पसमूहानि यस्य तथा विधम्। महीरुहसमूहं पादपव्रातं शरदिन्दुमुख्या शरच्चन्द्रवदनया मन्मथस्य कामस्य समाराधनम् उपासनां कामाभिव्याप्तमित्यर्थः, तस्य स्थानं प्रदेशं तत् तथोक्तम्। नताङ्ग्याः नमिताङ्ग्याः पदपङ्क्तिः चरणश्रेणी तस्याः चिह्नितम् अङ्कितं तत् तथोक्तम्। शीतलं शैत्यं सैकततलं वालुकाप्रचुरदेशं, सु सुन्दराः दन्ताः यस्याः सा सुदती 'वयसि दन्तस्य दतृ' इति श्रीपतिसूत्रेण दतादेशः। तस्याः भुक्तं व्यवहृतम् अतः मुक्तं त्यक्तम्। माधवीलतामण्डपं माधवीलतानिर्मितगृहं तस्य अन्तरं मध्यः तस्मिन् पल्लवतल्पं पत्रनिर्मितशयनं तत् तथोक्तम्। विलोकयन् पश्यन् ललनातिलकं रमणीश्रेष्ठम् अवन्तिसुन्दरी तस्याः विलोकनवेलायां दर्शनसमये जनितविशेषाणि प्रकटितावशिष्टानि स्मारं स्मारं स्मृत्वा स्मृत्वा मन्दमारुतेन मृदुलवायुना आ ईषत् कम्पितानि आन्दोलितानि नवचूतपल्लवानि नवीनाम्रशाखाग्रचयानि मदनरूपः कामरूपः योऽग्निः तस्य शिखा ज्वाला इव चकितः भीतः सन् दर्शं दर्शं दृष्ट्वा दृष्ट्वा, मनसि जायते इति मनोजः कामः तस्य कर्णेजपाः कर्णे जपन्तीति तथोक्ताः, अनुकूलसहायः। कर्णे सूचका इत्यर्थः, तेषामिव कामस्य दुर्मन्त्रिणामिवेति भावः। कोकिलः पिकः कीरः

यदृच्छया समागतः, समन्ततोऽभ्युल्लसत्तेजोमण्डलं राजवाहनम् आशीर्वादपूर्वकं ददर्श। राजा सादरं 'को भवान्' 'कस्यां विद्यायां निपुणः' इति तं पप्रच्छ। स च 'विद्येश्वरनामधेयोऽहम् ऐन्द्रजालिकविद्याकोविदो, विविधदेशेषु राजमनोरञ्जनाय भ्रमन् उज्जयिनीम् अद्य आगतोऽस्मि' इति शशंस। पुनरपि राजवाहनं सम्यक् आलोक्य 'अस्यां लीलावनौ पाण्डुरतानिमित्तं किमिति ?' साभिप्रायं विहस्य अपृच्छत्। पुष्पोद्भवश्च ऐन्द्रजालिकचातुर्य्यं निजकार्य्यकरणं तर्कयन् एनम् आदरेण बभाषे—'ननु सतां सख्यस्य आभाषणपूर्वतया चिरं रुचिरभाषणो भवान् अस्माकं प्रियवयस्यो जातः, सुहृदाम् अकथ्यञ्च किमस्ति ? केलिवने अस्मिन् वसन्तमहोत्सवागतायाः मालवेन्द्रसुताया राजनन्दनस्य अस्य चाकस्मिकसन्दर्शनेन अन्योन्यानुरागातिरेकः समजायत (२१)। सततसम्भोगसिद्ध्युपायाभावेन असौ ईदृशीमवस्थाम् अनुभवति' इति। विद्येश्वरो

---

पः मधुकरः भ्रमरः तेषां क्वणितानि शब्दान् श्रावं श्रावं श्रुत्वा श्रुत्वा मारविकारेण कामविकारेण क्वचिदपि कुत्रापि अवस्थातुं अभिवस्तुम् असहिष्णुः असमर्थः परिबभ्राम पर्य्यटत्।

(२१) तस्मिन्निति। तस्मिन्नवसरे तदानीम् एकः धरणीसुरः द्विजः सूक्ष्मं चित्रञ्च निवसनं वस्त्रं यस्य स तथाभूतः। स्फुरद्भ्यां चलद्भ्यां मणिनिर्म्मिताभ्यां कुण्डलाभ्यां कर्णभूषणाभ्यां मण्डितः भूषितः, मुण्डितं वपनं मस्तकं शिरः यस्य तेन तथोक्तेन, अपरेण मानवेन समेतः युक्तः चतुरवेशेण कार्य्यकुशलतया मनोरमः मनोज्ञः यदृच्छया अतर्कितेन समागतः समुपस्थितः, समन्ततः चतुर्द्दिक्षु अभ्युल्लसत् परिदीप्तम् तेजसः मण्डलं यस्य तं तथोक्तम्। राजवाहनम् आशिषो वादः वचनम् तत्पूर्व्वकं युक्तम्। ददर्श अवलोकयामास। निपुणो दक्षः इति एवं प्रकारं तं राजवाहनं पप्रच्छ जिज्ञासामास। स मुण्डितशिरः आगन्तुक इत्यर्थः, विद्येश्वरनामधेयः नाम्ना विद्येश्वरः। इन्द्रो ब कोशला-वैश्वर्य्येष जालं समीचकाणां नेत्रावरणम् इन्द्रजालं तेन चरतीति ठक्, ऐन्द्रजालिक-रूपा विद्या तस्याः कोविदः ज्ञाता विविधदेशेषु नानास्थानेषु राजमनोरञ्जनाय नृपचित्तप्रसा

लज्जाभिरामं राजकुमारमुखम् अभिवीक्ष्य विरचितमन्दहासो व्याजहार—'देव! भवदनुचरे मयि तिष्ठति, तव कार्यम् असाध्यं किमस्ति? अहम् इन्द्रजालविद्यया मालवेन्द्रं मोहयन् पौरजनसमक्षमेव तत्तनयापरिणयं रचयित्वा कन्यान्तःपुरप्रवेशं कारयिष्यामीति, वृत्तान्त एष राजकन्यकायै सखीमुखेन पूर्वमेव कथयितव्यः' इति। सन्तुष्टमना महीपतिः अनिमित्तं मित्रं प्रकटीकृतकुचिमक्रियापाटवं विप्रलम्भकृत्रिमप्रेमसहजसौहार्द्दवेदिनं तं विद्येश्वरं सबहुमानं विससर्ज्ज (२४)।

---

विनोदनाय भ्रमन् पर्यटन् उज्जयिनीम् अवन्तीम् अद्य अस्मिन्नहनि आगतः अनुपस्थितः अस्मि अहं विद्येश्वर इति शेषः। इति एवं प्रशंस कथयामास। पुनरपि भूयः, सम्यक् यथायथम्, लीलायाः क्रीडायाः अवनिः भूमिः तस्याम्। पाण्डुरता पाण्डुरत्वं तस्याः निमित्तं कारणं "पाण्डरीरक्तपीतस्तु पाण्डुरः शुक्लपीतकः" इति शाब्दिकनरसिंहः। किमिति प्रश्ने। साभिप्रायम् अभिप्रायेन सहितं यथा तथा विहस्य स्मितं कृत्वा अपृच्छत् जिज्ञासयामास। पुष्पोद्भवः ऐन्द्रजालिकचातुर्य्यम् इन्द्रजालविषये दक्षतां निजकार्यकरणम् आत्मकार्य्योपयोगिनं तर्कयन् विचारयन् एनं विद्येश्वरं आदरेण यत्नपूर्वकं अभाषि उवाच। ननु अनुनये, सतां सज्जनानां सख्यस्य बन्धुत्वस्य आभाषणं परस्परकथनं पूर्वं यस्मिन्, तस्य भावः तया। चिरं दीर्घकालं व्याप्य प्रियं भाषणं वाक्यं यस्य स तादृशः, भवान् त्वम् अस्माकम् आवयोः 'वाग्दत्त' इति बहुवचनम्। प्रियवयस्यः प्रियबन्धुः जातः गत इत्यर्थः, सुहृदां वयस्यानाम् अकथ्यम् अवक्तव्यं किमस्ति किं विद्यते? केलिवने प्रमोदवने, वसन्तस्य महोत्सवः तत्र आगता तयोत्सायाः मालवेन्द्रसुतायाः मालवेश्वरदुहितुः, अस्य समीपतरस्य राजनन्दनस्य राजवाहनस्य आकस्मिकदर्शनेन सहसावलोकनेन अन्योऽन्यानुरागातिरेकः परस्परानुरागातिशयः समजायत उत्पद्यत।

(२४) सतत इति। सततं निरन्तरं सम्भोगस्य सुरतस्य रतेरिति यावत्, सिद्धिः साधनं तस्याः उपायाभावः तेन। सततसम्भोगसिद्धिर्यया घटेत तथाविधोपायं न लभत इति भावः। असौ राजकुमारः ईदृशीम् अवस्थाम् एतादृशीं दशाम् अनुभवति ज्ञानविषयी-करोति। विद्येश्वरः ऐन्द्रजालिकः लज्जया अभिरामं मनोरमम् राजकुमारमुखं राजवाहनमुखम् अभिवीक्ष्य सम्यक् निरीक्ष्य विरचितः कृतः मन्दहासः मृदुहासं येन

अथ राजवाहनो विद्येश्वरस्य क्रियापाटवेन फलितम् इव मनोरथं मन्यमानः, पुष्पोद्भवेन सह, स्वमन्दिरम् उपेत्य, सादरं बालचन्द्रिकामुखेन, निजवल्लभायै महोत्सवक्रियमाणं सङ्गमोपायं वेदयित्वा, कौतुकाकृष्टहृदयः, कथमिमां क्षपां क्षपयामीति चिन्तयन् अतिष्ठत् । परेद्युः प्रभाते, विद्येश्वरो रसभावरीतिगतिचतुरः तादृशेन महता निजपरिजनेन सह, राजभवनद्वारान्तिकम् उपेत्य, दौवारिकनिवेदितनिजवृत्तान्तः सहसा उपगम्य सप्रणामम् 'ऐन्द्रजालिकः समागतः' इति द्वाःस्थैर्विज्ञापितेन तद्दर्शनकुतूहलाविष्टेन समुत्सुकावरोधसहितेन मालवेन्द्रेण समाहूयमानो, विद्येश्वरः कक्षान्तरं प्रविश्य सविनयमाशिषं दत्त्वा, तदनुज्ञातः, परिजनताड्यमानेषु वाद्येषु नदत्सु गायकीषु मदकलकोकिलामञ्जुलध्वनिषु समधिकरागरञ्जितसामाजिकमनोवृत्तिषु, पिच्छिकाभ्रमणेषु, सपरिवारं परिवृढं भ्रामयन्, मुकुलितनयनः क्षणम् अतिष्ठत् (२५)। तदनु विषमं विषम् उल्बणं वमन्तः फणालङ्करणा

---

स तथोक्तः सन् वक्ष्यमाणं वाक्यं व्यजहार बभाषे। देव हे राजकुमार, भवदनुचरे तव सेवके मयि विद्येश्वरे तिष्ठति सति तव कार्यं सम्पादनीयं विषयम् असाध्यम् साध्यातीतं किमस्ति न किमपीत्यर्थः, इन्द्रजालविद्यया इन्द्रजालप्रभावेन मालवेन्द्रं मालवेश्वरं मोहयन् भ्रान्तिजनयन् पौरजनसमक्षमेव पुरवासिनां प्रत्यक्षे तत्तनयापरिणयं तस्य दुहितुः विवाहं रचयित्वा कृत्वा कन्यान्तःपुरप्रवेशः कन्याजनानामवस्थितिदेशगमनं कारयिष्यामि सम्पादयिष्यामीत्यर्थः, वृत्तान्तः वार्त्ता, राजकन्यकायै राजदुहित्रे सखीमुखेन सखीजनेनेत्यर्थः, पूर्वमेव प्राक् कथयितव्यः ज्ञातयितव्यः। सन्तुष्टमना आनन्दितचेता महीपतिः राजवाहनः अनिमित्तं कारणशून्यं मित्रं सुहृदं प्रकटीकृतं अकृत्रिमं कृत्रिमक्रियायां पाटवं दाक्षिण्यं येन तम् तथोक्तम्। विप्रलम्भः वञ्चनं, कृत्रिमं कपटं प्रेम, सहजं स्वाभाविकं सौहार्द्दं च वेत्तीति तथाविधम्। सबहुमानं बहुमानपुरःसरं यथा तथा विससर्ज तत्याज।

(२५) अथेति। अथ अनन्तरम्। विद्येश्वरस्य तन्नामकस्येन्द्रजालिकस्य क्रियापाटवेन

वल्लराजिनीराजितराजमन्दिराभोगा भोगिनो भयं जनयन्तो निश्चेरुः। उच्चाश्च बहवः, तुण्डैः अद्रिपतीन आदाय दिवि समचरन्। ततोऽजस्रा, नरसिंहस्य हिरण्यकशिपोः दैत्येश्वरस्य विदारणमभिनीय, सहदारवर्यान्वितं राजानम् अभाषत—'राजन्! अवसानसमये भवता, शुभसूचकं द्रष्टुमुचितम्। ततः कल्याणपरम्परावाप्तये भवदात्मजाकारायाः तरुण्याः, निखिललक्षणोपेतस्य राजनन्दनस्य विवाहः कार्यः' इति। तदवलोकनकुतूहलेन महीपालेन अनुज्ञातः, स सङ्कल्पितार्थसिद्धिसम्भावनमंफुल्लवदनः, सकलमोहजनकम् अञ्जनं लोचनयोर्निक्षिप्य, परितो व्यलोकयत्। सर्वे तु 'तदैन्द्रजालिकमेव कर्म' इति तत् साद्भुतं पश्यन्तु, रागपल्लवितहृदयेन

---

क्रियाकौशलेन फलितं सिद्धमिव मनोरथं मनोभिलाषं मन्यमानः मनसि कुर्वन्नित्यर्थः, पुष्पोद्भवेन सह सार्धं स्वमन्दिरम् आत्मभवनम् उपेत्य आगत्य, सादरं यथा तथा बालचन्द्रिकामुखेन बालचन्द्रिकां दूतीं कृत्वेत्यर्थः, मिजवल्लभार्थे स्वप्रियार्थे महीसुरक्रियमाणं महीसुरेण द्विजेन क्रियते इति, क्रियमाणः तम्। सुरतोपायं सुरतसाधनोपायं वेदयित्वा विज्ञाप्य कौतुकेन अपूर्वदर्शनोत्सुकेन आकृष्टः अभिभूतः हृदयं मनः यस्य स तथाविधः। कथं केन प्रकारेण इमां क्षपां रात्रिं क्षपयामि युद्धापयामि इति एवं चिन्तयन् भावयन् अतिष्ठत् अभिवर्तत। परेद्युः अन्यस्मिन्नहनि प्रभाते प्रातः विद्येश्वरः ऐन्द्रजालिकः, रसा... सहकारादयः, भावः अभिप्रायप्रकटनं, रीतिगतयः इन्द्रजालविद्यान्तर्गताः तेषु चतुरः दक्षः स तादृशः। तादृशेन सकल-बोधेनेत्यर्थः, निजपरिजनेन आत्मसेवकेन सह साकम् राज्ञः भवनं गृहं तस्य द्वारं गमननिर्गमनपथं, तस्य अन्तिकं समीपम् उपेत्य गत्वा दौवारिकद्वारप्रान्तः तेन निवेदितः विज्ञापितः निजवृत्तान्तः वार्ता येन च तथोक्तः। सहसा अतर्कितेन उपगत्य यात्वा सप्रणामं प्रणामसहितं 'ऐन्द्रजालिकः समागतः समुपस्थितः' इति एवं द्वाःस्थैः द्वारपालैः विज्ञापितेन निवेदितेन, तस्य दर्शनं तस्मै कुतूहलम् औत्सुक्यम् तेन आविष्टः संयुक्तः तेन तथोक्तेन। सञ्जातसुताः औत्सुक्ययुक्ताः अवरोधाः राजान्तःपुरयोषितः ताभिः सहितेन युक्तेन मालवेन्द्रेण मालवेश्वरेण समाहूयमानः आकार्यमाणः विद्येश्वरः कक्षान्तरम् अन्यां कक्षां प्रकोष्ठमित्यर्थः, प्रविश्य उपगम्य

राजवाहनेन पूर्वसङ्केतसमागतामनेकभूषणभूषिताङ्गीम् अवन्तिसुन्दरीं वैवाहिकमन्त्रतन्त्रनैपुण्येन अग्निं साक्षीकृत्य संयोजयामास (२६)। क्रियावसाने सति 'इन्द्रजालपुरुषाः! सर्वे गच्छन्तु भवन्तः' इति द्विजन्मना उच्चैः उच्यमाने सर्वे मायामानवा यथायथम् अन्तर्भावं गताः। राजवाहनोऽपि

---

सविनयं विनयपूर्वकम् आशिषम् आशीर्वचनं दत्त्वा प्रत्यर्प्य तदनुज्ञातः तस्य विद्येश्वरस्य अनुज्ञातः आज्ञाक्रमेणेत्यर्थः, परिजनेन अनुचरेण ताड्यमानं प्रहार्यमाणं तेषु तथोक्तेषु वाद्येषु वादनीयेषु नदत्सु शब्दितेषु गायकेषु गानकर्त्तृषु, मदेन हर्षेण अव्यक्तमधुरशब्दः यस्याः तादृशी या कोकिला तद्वत् मञ्जुलः मनोहरः ध्वनिर्येषां तासु समधिकरागेण अतिशयानुरागेण अत्यधिकमनाकर्षणव्यापारेणेत्यर्थः, रञ्जितः भूषितः सामाजिकानां सभ्यानां मनोवृत्तिः मनसः व्यापारः तेषु तथोक्तेषु। पिच्छिका पिच्छगुच्छा मयूरबर्हनिर्म्मितेन्द्रजालिकव्यापारसाधनसहायभूता तस्याः भ्रमणं घूर्णनं तेषु तथोक्तेषु। सपरिवारं परिवारसहितं परिवृढं नेतारं राजानमित्यर्थः; किंवा परिवृढमतिशयितं घूर्णनव्यापारविशेषमित्यर्थः, भ्रामयन् भ्रान्तं कुर्वन्नित्यर्थः, मुकुलितनयनः मुद्रितेक्षणः क्षणं क्षणकालम् अतिष्ठत् अभिवर्त्तत।

(२४) तदन्विति। तदनु ततः परं विषमम् अत्यन्तं विषं गरलम् उल्बनः तीव्रं वमन्तः उद्गीरयन्तः, फणः आहीनामनायासोत्पन्नव्यापारविशेषः, स एव अलं करणं भूषणं येषां ते तथोक्ताः। रत्नानां मणीनां सर्पशिरःस्थानामित्यर्थः, राजयः श्रेण्यः ताभिः नीराजित-शोभितः राजमन्दिरस्य आभोगः व्यासः प्रदेश इत्यर्थः, यैः तथोक्ताः। "प्रपञ्चाभोग-विस्तारव्यासाः" इति चिन्तामणिः। भोगिनः सर्पाः भयं त्रासं जनयन्तः उत्पादयन्तः निर्वेरः इतस्ततो विचरन्ति स्मेत्यर्थः। गृध्राः शकुनयः बहवः अनेकाः तुण्डैः मुखैः अहिपतीन् अहिश्रेष्ठान् आदाय गृहीत्वा दिवि आकाशे समचरन पर्य्यटन्। ततः अनन्तरम् अग्रजन्मा ब्राह्मणः नरसिंहस्य नारायणमूर्त्तिविशेषस्य हिरण्यकशिपोः कश्यपात्मजस्य दैत्येश्वरस्य दनुजपतेः विदारणं नखैः पाटनम् अभिनीय रूपयित्वा महदाश्चर्य्यान्वितम् अतिशयविस्मयापन्नं राजानं मालवेन्द्रम् अभाषत अब्रवीत्। अवसानसमये इन्द्रजालव्यापारान्ते इत्यर्थः, भवता महाराजेन शुभसूचकं शुभशंसनं द्रष्टुमवलोकितुम् उचितम् युक्तम्। ततः तस्मादतएवेत्यर्थः। कल्याणानां शुभानां परम्परा तस्याः अवाप्तिः संप्राप्तिः तस्यै। भवतः तव आत्मजा दुहिता तस्याः आकारा

पूर्वसङ्कल्पितेन गूढोपायचातुर्य्येण ऐन्द्रजालिकपुरुषवत् कन्यान्तःपुरं प्रविवेश। मालवेन्द्रोऽपि तत् अद्भुतं मन्यमानस्तस्मै वाड़वाय प्रचुरतरं धनं दत्त्वा 'विद्येश्वर! त्वम् इदानीं साधय' इति तं विसृज्य स्वयमन्तर्मन्दिरं जगाम। ततोऽवन्तिसुन्दरी प्रियसहचरीसमेता वल्लभोपेता मन्दिरं ययौ। एवं

---

यवयवरूपा तस्याः तथोक्तायाः, तरुण्याः यून्याः निखिलानि सर्व्वाणि लक्षणानि चिह्नानि तैः उपेतः युक्तः तस्य तथोक्तस्य राजनन्दनस्य राजकुमारस्य विवाहः उद्वाहः कार्य्यः करणीयः। तस्य अवलोकनाय कुतूहलम् उत्साहः यस्य तेन, महीपालेन राज्ञा अनुज्ञातः आज्ञप्तः स विद्येश्वरः सङ्कल्पितस्य अभिलषितस्य अर्थस्य प्रयोजनस्य सिद्धेः सम्भावना सम्भावः तेन संफुल्लम् आनन्दयुक्तं वदनं यस्य स तथोक्तः। सकलमोहजनकं सर्वेषां मोहोत्पादकम् अञ्जनं कज्जलं लोचनयोः नेत्रयोः निक्षिप्य पातयित्वा परितः चतुर्द्दिक्षु व्यलोकयत् निरैक्षत्। सर्वेषु जनेष्वित्यर्थः, तत् कार्य्यम्, ऐन्द्रजालिकमिव इन्द्रजालस्येदमैन्द्रजालिकम्, इन्द्रजालव्यापारोद्भूतमित्यर्थः, तत्कर्म्म साद्भुतम् आश्चर्य्येण सह यथा तथा पश्यतसु सतसु. रागेण अनुरागेण पल्लवितं विस्तारितम् आसक्तियुक्तमित्यर्थः, हृदयं यस्य तेन तादृशेन। पूर्वसङ्केतेन दूतीमुखेन व्यक्तीकृतरहस्येनेत्यर्थः, समागतां समुपस्थिताम् अनेकभूषणेन विविधालङ्कारेण भूषितं मण्डितम् अङ्गं यस्याः तां तथोक्ताम्। वैवाहिकाः विवाहसम्बन्धिनः मन्त्राः आश्वलायनादिमुनिप्रोक्तशब्दविशेषाः, तन्त्राणि विविधदेवतोपासनामार्गप्रतिपादकाः आगमविशेषाः तेषु नैपुण्यं दाक्ष्यं तेन। अग्निं पावकं साक्षीकृत्य अग्निं प्रज्वाल्य तत्सन्निधौ वैवाहिकं मन्त्रं पठित्वेत्यर्थः, संयोजयामास सङ्गमयामास।

(२५) क्रियेति। क्रियावसाने विवाहकार्य्यान्ते सति इन्द्रजालपुरुषाः मायापुरुषाः भवन्तः सर्वे गच्छन्तु अपसरन्तु इति एवं द्विजन्मना ब्राह्मणेन उच्चैः तारस्वरेण उच्यमाने कथ्यमाने सर्वे मायामानवाः मायापुरुषाः यथायथं यथायोग्यदेशम् अन्तर्भावम् अदर्शनं गताः याताः। पूर्वसङ्कल्पितेन प्रागीप्सितेन गूढः गोप्यः उपायः पन्थाः तस्य चातुर्य्यं पाटवं तेन तथोक्तेन। ऐन्द्रजालिकपुरुषवत् मायामानव इव कन्यान्तःपुरं कन्याजननिकेतनं प्रविवेश प्रजगाम। मालवेन्द्रोऽपि मालवेश्वरोऽपि तत् कर्म्म अद्भुतम् आश्चर्य्यं मन्यमानः परिभावयन्नित्यर्थः, तस्मै वाड़वाय ब्राह्मणाय "द्विजात्यग्रजन्मभूदेववाड़वाः" इत्यमरः। प्रचुरतरं बहुलं धनम् अर्थं दत्त्वा समर्प्य विद्येश्वर हे ऐन्द्रजालिक

दैवमानुषबलेन मनोरथसाफल्यमुपेतो राजवाहनः सरसमधुरचेष्टाभिः शनैः शनैः हरिणलोचनाया लज्जाम् अपनयन्, सुरतरागम् उपचयन्, रहो विस्रम्भम् उपजनयन्, संलापे तदनुलापपीयूषपानलोलुभः चित्रचित्रं चित्तहारिणं चतुर्दशभुवनवृत्तान्तं श्रावयामास ।

इति श्रीदण्डिनः कृतौ राजवाहनचरिते अवन्तिसुन्दरीपरिणयो नाम पञ्चम उच्छ्वासः ।

## पूर्वपीठिकेयं समाप्ता ।

---

त्वम् इदानीम् अधुना साधय गच्छ । तं विद्येश्वरं विसृज्य त्यक्त्वा स्वयमन्तर्मन्दिरम् अन्तःपुरगृहं जगाम ययौ । प्रियसहचरीसमेता युक्ता वल्लभोपेता वल्लभसहिता मन्दिरं भवनं ययौ गतवती । एवम् एवम्प्रकारं देवानां मानुषाणाञ्च बलं तेन, मनोरथः मनोऽभिलाषः तस्य साफल्यं सफलताम् उपेतः प्राप्तः राजवाहनः कुमारः सरसं रसयुक्तं यथा तथा मधुरचेष्टा आनन्दजनककायिकव्यापारः ताभिः । शनैः शनैः उत्तरोत्तरेण क्रमशः इत्यर्थः, हरिणनयनायाः मृगीदृशाः अवन्तिसुन्दर्याः इत्यर्थः, लज्जां त्रपाम् अपनयन् अपसारयन् सुरतरागं निधुवनानुरागम् उपचरन् उद्भावयन् रहः निर्जने विस्रम्भं प्रत्ययम् उपजनयन् उत्पादयन्, संलापे परस्परकथने, तस्याः कुमार्याः अनुलापः मुहुर्भाषणं स एव पीयूषममृतं तत्पानलोलुभः अतिलोभयुक्तः । चित्रचित्रम् अतिशयेन चित्रम् । चित्तहारिणम् अत्यद्भुतं चतुर्दशभुवनवृत्तान्तं चतुर्दश एव भुवनानि तेषां वृत्तान्तः वार्त्ता तं तथोक्तम् । "विष्टपं भुवनं जगत्" "वार्त्ता प्रवृत्तिर्वृत्तान्तः" इति अमरः । श्रावयामास वर्णनञ्चकार ।

इति कृष्णात्रेय-श्रीरेवतीकान्तशर्मकृतायां विद्योतन्याख्यायां दशकुमारटीकायां पूर्वपीठिकाविवृतिः समाप्ता ।

# दशकुमारचरिते

## उत्तरखण्डम् ।

### प्रथमोच्छ्वासः ।

श्रुत्वा तु भुवनवृत्तान्तम् उत्तमाङ्गना विस्मयविकसिताक्षी सस्मितम् इदम् अभाषत—'दयित! त्वत्प्रसादात् अद्य मे चरितार्था श्रोत्रवृत्तिः, अद्य मे मनसि तमोपहः त्वया दत्तो ज्ञानप्रदीपः, पक्वमिदानीं त्वत्पादपद्मपरिचर्य्याफलम्, अस्य च त्वत्प्रसादस्य किमुपकृत्य प्रत्युपकृतवती भवेयम् । अभवदीयं हि नैव किञ्चित् मत्सम्बद्धम् । अथवा अस्त्येव अस्यापि जनस्य क्वचित् प्रभुत्वम्, अशक्यं हि मदिच्छया विना सरस्वती-मुखग्रहणोच्छेषणीकृतो दशनच्छद एष चुम्बयितुम् । अस्तुजा-सनास्तनतटोपभुक्तम् उरःस्थलञ्चैतदालिङ्गयितुम्' इति (१)।

---

(१) श्रुत्वेति। उत्तमा चासौ अङ्गना चेति उत्तमाङ्गना वरस्त्री नायिका अवन्तिसुन्दरी "कामिन्यामङ्गना मता" इति मेदिनी। भुवनस्य जगतः वृत्तान्तं शकुन्तलादुष्मन्तादीनां गान्धर्वविवाहकरणविषयां प्रवृत्तिम्, अनेन गान्धर्व-विवाहेन परिणीतानां पुण्यवत्त्वज्ञानात् राजवाहनेन सह गान्धर्वविवाहो ममापि पुण्यवत्त्वं सम्पादयेदिति मतिरुत्पन्ना, इत्याह तत्रभवान् शिवरामः। श्रुत्वा आकर्ण्य विस्मयेन आश्चर्य्येण विकसिते उत्फुल्ले अक्षिणी लोचने यस्याः सा तथोक्ता सती। "अक्षि लोचनमम्बकम्" इति यादवः। सस्मितम् ईषत् हास्यं कृत्वा इदं वक्ष्यमाणम् अभाषत अब्रवीत्। दयित हे वल्लभ, त्वत्प्रसादात् तव प्रसादः तस्मात्, तव भुवनवृत्तान्तकथनरूपानुग्रहादित्यर्थः, अद्य मे मम श्रोत्रयोः कर्णयोः वृत्तिः व्यापारः चरितार्था सफला श्रोतव्यविषयश्रावणादिति भावः। अद्य त्वया मे मम मनसि चेतसि तमोपहः अज्ञाननाशकः 'आतश्चोपसर्गे' इति कः। "अज्ञानान्धकारयो-स्तमसो" इति महीपः। स्वाभीष्टवरलाभेऽपि कुमारीणामात्मदाने न स्वातन्त्र्यं विद्यत इत्यज्ञानम्। ज्ञानमयः प्रदीपः ज्ञानप्रदीपः ज्ञानं गान्धर्वपरिणयस्य पुण्यवत्त्वादि-प्रदर्शनेन समर्थनरूपम्, तदेव प्रदीप इति तात्पर्य्यम्। दत्तः प्रज्वालितः,

ततः प्रियोरसि प्रावृडिव नभसि उपास्तीर्णगुरुपयोधरमण्डला, प्रौढ़कन्दलीमुकुलम् इव रूढ़रागरूषितं चक्षुरुल्लासयन्ती, अलिवर्णावलीविड़म्बयता कुसुमचन्द्रकभारेण मधुकरजाल-व्याकुलेन केशकलापेन स्फुरदरुणकिरणकेसरकरालं कदम्ब-मुकुलमिव कान्तस्य अधरमणिम् अधीरम् आचुचुम्ब। तदारम्भस्फुरितया च रागवृत्त्या भूयोऽप्यावर्त्तत अतिमात्र-चित्रोपचारप्रोकारो रतिप्रबन्धः (२)।

---

ममाज्ञानान्धतमसावृते चेतसि ज्ञानप्रदीपः प्रज्वालित इत्यर्थः, अत्र रूपकालङ्कारः। पादौ चरणौ पद्मे कमले इव इति पादपद्मं तव पादपद्मं तयोः परिचर्या सेवा तस्याः फलम्। इदानीमधुना पक्वं परिणतम्, अत्रातिशयोक्तिरलङ्कारः। अस्य ईदृशस्य प्रभुतस्य त्वत्प्रसादस्य तवानुग्रहस्य किमुपकृत्य किं कार्यं सम्पाद्य प्रत्युपकृतवती कृतप्रत्युपकारा भवेयम्, सम्भावनायामेव लिङ्। हि यस्मात् अभवदीयं भवतः अधिकारवहिर्भूतम् किञ्चित् किमपि वस्तु, मत्सम्बन्धं मदीयं नैव आत्मनोऽपि तवाधीनत्वादित्यर्थः, अथवेति पूर्वापरितोषे अस्यापि जनस्य मल्लक्षण-जनस्य क्वचित् प्रभुत्वमस्त्येव। तत् प्रकाशयति अशक्यमिति मम इच्छा तया तथोक्तया विना 'पृथग् विनेति तृतीया।' सरस्वती भारती तया कर्त्त्रा यत् मुखस्य वदनस्य तवेति शेषः, ग्रहणं चुम्बनमित्यर्थः, तेन उच्छिष्टीकृतः उच्छिष्टीकृतः एषः दशनच्छदः अधरः चुम्बयितुम् अवलीढ़यितुम्, अत्र विनोक्तिरलङ्कारः। अम्बुनि जले जायते इति जले-डः; अम्बुजं पद्मम् आसनं यस्याः तथोक्तायाः लक्ष्म्याः स्तनतटं पयोधरदेशः तेन उपभुक्तं रक्षितमित्यर्थः, एतत् उरःस्थलं वक्षःप्रदेशः तवेति शेषः। एतेन विशेषणद्वयेन सरस्वत्याः लक्ष्म्याश्च पतिरिति सूचयित्वा भावि सार्वभौमत्वं ध्वन्यते। सरस्वत्युच्छिष्टस्य तवाधरस्य चुम्बने, अम्बुजासनोपभुक्तस्य वक्षसश्चालिङ्गने यदहं मे प्रभुत्वमिच्छामि तदेव त्वया चुम्बयितुमालिङ्गयितुञ्च शक्यते नान्यथेति भावः। पयोधरान्वितस्य वक्षसः शौक्लनारुढ़त्वं नेत्रोत्प्रेक्षा स्पष्टा।

(२) तत इति। अनन्तरं प्रियोरसि वल्लभवक्षसि प्रावृडिव वर्षावत् नभसि आकाशे उपास्तीर्णं प्रत्यर्पितं गुरु विशालं पयोधरमण्डलं कुचबिम्बं यया तथोक्तया। पक्षे पयः सलिलं धारयतीति पयोधरः मेघः तस्य मण्डलम्। प्रौढ़ा विकसिता या कन्दली द्रोणपर्णी तस्याः मुकुलं कुड्मलमिव "द्रोणपर्णी स्निग्धगन्धा कन्दली भूतकन्दली" इति शब्दार्णवः। रूढ़ेन सञ्जातेन रागेण अनुरागेण लौहित्येन च रूषितं युक्तं रञ्जितं चक्षुः

सुरतखेदसुप्तयोस्तु तयोः स्वप्ने बिसगुणनिगडितपादो जरठः कश्चित् जालपादः अदृश्यत, प्रत्यबुध्येतां च उभौ। अथ तस्य राजकुमारस्य, कमलमूढशशिकिरणरज्जुदामनिगृहीत-मिव रजतशृङ्खलोपगूढं चरणयुगलम् आसीत्। उपलभ्यैव च 'किमेतत्' इत्यतिपरित्रासविह्वला मुक्तकण्ठमाचक्रन्द राज-कन्या (२)। येन च तत्क्षणमेव कन्यान्तःपुरम् अग्निपरीत-

---

लोचनद्वयम् उन्मीलयन्ती विस्फारयन्ती, अत्र श्लेषानुप्राणितोपमालङ्कारः। बर्हिणां मयूराणां या बर्हावली पिच्छावली तस्याः विडम्बयता निर्भर्त्सयता तुल्येनेत्यर्थः, कुसुमं चन्द्रकं शिखिमेचकमिव यत्र "मेचकश्चन्द्रकः समौ" इति हैमः। तेन, अतएव शारेण विचित्रेण "शबले मारुते शारः" इति वैजयन्ती। मधुकरकुलैः भ्रमरसमूहैः व्याकुलेन व्याप्तेन समन्तात् विरचितेनेत्यर्थः, उपलक्षणेनात्र तृतीया। स्फुरन्तः विकशन्तः अरुणकिरणाः केशराणि किञ्जल्कानि इव तैः करालं व्याप्तम्, कदम्बमुकुलमिव नीपकुड्मलमिव "नीपः कदम्बः" इति हैमः। कान्तस्य वल्लभस्य अधरमणिम् अधरः मणिरिव तवौष्ठरत्नमित्यर्थः, अधीरमवशम् धैर्यहीनमित्यर्थः, यथा तथा आचुम्ब्य अवलीढ़ स्म; अत्र रूपकानुप्राणितोपमालङ्कारः। तदारम्भेन चुम्बनारम्भेन स्फुरितया उद्दीपितया रागहत्या अनुरागावेशेनेत्यर्थः, भूयः पुनः आवर्तत अभूत्। अतिमात्रम् अतिशयम् तेन विविध नानोपचारेण सुरतव्यापाराङ्गोपचारेण व्यापारविशेषेण वा शीकरः रम्यः "शीकरः स्फीतरम्ययोः" इत्यजयः। रतिप्रबन्धः रतिरूपप्रबन्धः व्यापारः।

(१) सुरतेति। सुरतस्य रमणस्य खेदः अवसन्नता तेन सुप्तः निद्रितः तयोः तयोस्तयोः। स्वप्ने बिसस्य मृणालस्य गुणेन तन्तुना निगडितौ बद्धौ पादौ यस्य स तथाभूतः। कश्चित् एकः जरठः वृद्धः जालपादः हंसः "जालपादः श्वेतगरुच्चक्राङ्गः मानसः प्रियः" इति वैजयन्ती। अदृश्यत दृष्टः। उभौ दम्पती प्रत्यबुध्येतां जागरितौ च अथ प्रबोधानन्तरं राजकुमारस्य राजवाहनस्य चरणयुगलं कमलमिति भ्रमेणेव नितरां मूढेन भ्रान्तेन शशिना चन्द्रेण किरणाः रज्जुदामानीव तैः निगृहीतं दृढबद्धमिव चरणयुगलं राजवाहनस्येति शेषः। रजतशृङ्खलेन रौप्यदाम्ना उपगूढं निगडितम् आसीत्। अत्रापह्नुत्यनुप्राणितोपमालङ्कारः। राजकन्या एतत् उपलभ्य ज्ञात्वा एव किमेतत् कस्मादिदं बन्धनमागतम् इति अतिपरित्रासेन अत्यन्तभयेन विह्वला सती मुक्तकण्ठं मुक्तस्वरम् उच्चैरित्यर्थः, आचक्रन्द रुरोद।

मिव पिशाचोपहतम् इव वेपमानम्, अनिरूप्यमाणतदात्वायतिविभागम् अगण्यमानरहस्यरक्षासमयम्, अवनितलविप्रविध्यमानगात्रम् आक्रन्दविदीर्यमाणकण्ठम् अश्रुस्रोतोऽवगुण्ठितकपोलतलम् आकुलीबभूव। तुमुले च अस्मिन् समये अनियन्त्रितप्रवेशाः 'किं किम्' इति सहसोपसृत्य विविशुः अन्तर्वंशिकपुरुषाः दृष्ट्वा च तदवस्थं राजकुमारम्। तदनुभावजितरुद्धनिग्रहेच्छास्तु सद्य एव ते तमर्थं चण्डवर्मणे निवेदयामासुः (४)। सोऽपि कोपादागत्य निर्दहन् इव दहनगर्भया दृशा निशाम्य उत्पन्नप्रत्यभिज्ञः, 'कथं स एवैषः? मदनुजमरणनिमित्तभूतायाः पापायाः बालचन्द्रिकायाः पत्युः अत्यभिनिविष्टवित्तदर्पस्य वैदेशिकवणिक्पुत्रस्य पुष्पोद्भवस्य मित्रम् रूपमत्तः कलाभिमानी नैकविधविप्रलम्भोपायपाटवावर्जितमूढपौरजनाध्यारोपितवितथदैवतानुभावः कपटधर्मकञ्चुकी

---

(४) येनेति। तेन च रोदनेन सकलं समस्तम् एव कन्यान्तःपुरं अग्निपरीतमिव अग्न्याक्रान्तो जनो यथा चरति तद्वदित्यर्थः, पिशाचेन निकृष्टदेवयोनिविशेषेण उपहतम् अभिभूतमिव वेपमानं कम्पमानं अनिरूप्यमाणः अनिर्णीयमानः तदात्वायत्योः वर्तमानभविष्यतोः "तत्कालस्तु तदात्वं स्यादुत्तरः काल आयतिः" इत्यमरः। विभागः कृत्यं यत्र तथाभूतं, तत्काले किं कर्तव्यमुत्तरस्मिंश्च काले किं कर्तव्यमिति विमूढमित्यर्थः, तदा अपायपश्चात् विशेषणायुक्तेति भावः। अगण्यमानः अमन्यमानः रहस्यस्य कुमार्याः गूढं कान्तसङ्गमस्य वृत्तान्तस्य रक्षायाः गोपनस्य समयः व्यवस्था यत्र तादृशं तदा भयेनोद्वेजिताः पुरवृन्दः रहस्यपालने मनांसि न दधुः। अवनीतले भूपृष्ठे विप्रविध्यमानम् आहन्यमानं गात्रं यस्य तत् तथोक्तम्। भयाभिविह्वलास्ताः भूपृष्ठे निपेतुरित्यर्थः, आक्रन्दनेन रोदनशब्देन विदीर्यमाणः कण्ठः यस्य तत् तथाभूतम्। अश्रूणां नयनाम्बूनां स्रोतोभिः अवगुण्ठितम् आच्छादितं कपोलतलं गण्डदेशः यस्य तत् तथोक्तम्। आकुलीबभूव अनाकुलः आकुलोभूत इति अभूततद्भावे च्विः। अस्मिन् तुमुले सङ्कुले समये तादृशीमवस्थां गतायां कुमार्याम् अनियन्त्रितप्रवेशाः अनिषिद्धप्रवेशाः अन्तर्वंशिकपुरुषाः अन्तःपुराध्यक्षाः "स्थातामन्तःपुराध्यक्षेऽन्तर्वंशिकावरोधिकौ"

निगूढपापशील: चपलो ब्राह्मणब्रुव:। कथमिव एनमनुरक्ता, सादृशेषु अपि पुरुषसिंहेषु सावमाना कपियम् अवन्तिसुन्दरी, पश्यतु पतिमद्यैव शूलावतंसितमियमनार्य्यशीला कुलपांसनी इति निर्भर्त्सयन् भीषणभ्रुकुटिदूषितललाट: काल इव काललोहदण्डकर्कशेन बाहुदण्डेन अवलम्ब्य हस्ताम्बुजं रेखाब्जरथाङ्कलाञ्छने राजपुत्रं सरभसम् आचकर्ष। स तु स्वभावधीर: सर्वपौरुषातिभूमि: सहिष्णुतैकप्रतिक्रियां दैवीमिव ताम् आपदम् अवधार्य्य 'स्मर तस्या हंसगामिनि! हंसकथाया:। सहस्व वामु! मासद्वयम्' इति प्राणपरित्याग-रागिणीं प्राणसमां समाश्वास्य रिपुवश्यतामयासीत्। (५)

---

इति एतचन्द्र:। किं किं किमापतितमित्यर्थ:, सम्भ्रमे द्विरुक्ति:। इति कथयत: सहसा अतर्कितेन उपसृत्य तथागत्य विविशु: कुमारीभवनमानि ग्रंथ:। तदवस्थं निगडितपादं राजकुमारं राजवाहनं दृष्ट्वा: दृष्टवन्त:। तु किन्तु तस्य राजकुमारस्य अनुभावेन प्रभावेण निरुद्धा निग्रहेच्छा बन्धनेच्छा येषां ते तथाभूता:। "अनुभाव: प्रभावे च निश्चये भावसूचके" इति वैजयन्ती। अनुभावविशेषात् तं निरोद्धुं न शेकुरिति भाव:। ते परिचारका: सद्य एव झटिति एव तम् अर्थं विषयं वृत्तान्तं कन्याकुमारसङ्गमरूपं चण्डवर्मणे तन्नामधेयाय दर्पशारानाम्ने 'यमभिप्रेत्य बालवर्धाः' इति चतुर्थी। निवेदयामासु: कथयाञ्चक्रु:।

(५) सोऽपीति। सोऽपि चण्डवर्मापि कोपात् क्रोधात् आगत्य दहनगर्भया अनलमध्यया दृशा चक्षुषा लोचनाभ्यामित्यर्थ:, निशाम्य आलोक्य राजवाहनं प्रति दृष्टिं दत्त्वेत्यर्थ:, उत्पन्ना जाता प्रत्यभिज्ञा पूर्वस्मृति: यस्य तथाभूत:। मम अनुज: मदनुज: दारुवर्मा तस्य मरणं तस्य निमित्तभूता कारणरूपा तस्या: तथोक्ताया:, पापाया: दु:शीलाया: बालचन्द्रिकाया: पत्यु: स्वामिन: अत्यभिनिविष्ट: अतिशयेनोत्पन्न: वितर्क: धनमद: यस्य तादृशस्य। वैदेशिक: भिन्नदेशजात: वणिक् तस्य पुत्र: तस्य तथोक्तस्य पुष्पोद्भवस्य मित्रं सुहृत् रूपमत्त: सौन्दर्येण मदङ्कृत: कलाभिमानी कला चतुःषष्टिप्रकारा, गीतवाद्यादिरूपा वा तां जानामीत्यभिमानवान् नैकविधा: नानाप्रकारा: ये विप्रलम्भस्य वञ्चनस्य उपाया: तेषु यत् पाटवं पटोर्भाव: नैपुण्यमित्यर्थ:,

अथ विदितवार्त्तावार्त्तौ महादेवीमालवेन्द्रौ आमातरम् आकारपक्षपातिनौ आत्मत्यागोपन्यासेन अरिणा जिघांस्यमानं ररक्षतुः ; न तु शेकतुः तम् अप्रभुत्वात् उत्तारयितुम् आपदः। स किल चण्डशीलः चण्डवर्मा सर्वम् इदम् उदन्तजातं राजराजगिरौ तपस्यते दर्पसाराय सन्दिश्य, सर्वम् एव पुष्पोद्भवकुटुम्बकं सर्वस्वहरणपूर्वकं सद्य एव बन्धने क्षिप्त्वा, कृत्वा च देवं राजवाहनं राजकेशरिकिशोरकम् इव दारुपञ्जरनिबद्धं, मूर्द्धजजालविलीनचूडामणिप्रभावविक्षिप्त-क्षुत्पिपासादिखेदञ्च तम्, अवधूतदुहितृप्रार्थनस्य अङ्गराजस्य उद्धरणाय अङ्गान् अभियास्यन् अनन्यविश्वासान्विनाय ; ररोध च बलभरदत्तकम्पः चम्पाम् (६)। चम्पेश्वरोऽपि सिंहवर्मा

---

तेन आवर्जितः वशीकृतः मूढः अज्ञः पौरजनः पुरवासी तेन अध्यारोपितः वितथः अलीकः देवतानुभावः देवप्रभावः यस्य तादृशः। अस्य प्रतारणामाहात्म्यात् न विमुग्धाः पौराः मन्यन्तः कोऽपि देवः लीलाप्रकाशाय मानवशरीरपरिग्रहेण भुवि विचरतीत्यर्थः। कपटः कृत्रिमः धर्मः स एव कञ्चुकः वारवाणः यस्य तथाभूतः, छद्मधर्माचरणकारीत्यर्थः, चित्ते न धर्मप्रवणता बहिस्तु तथाविधं दर्शयतीति भावः। निगूढं निभृतं पापं शीलं स्वभावः यस्य स तथोक्तः, मनसि पापाचारीत्यर्थः। चपलः दुर्विनीतः ब्राह्मणब्रुवः आत्मानं ब्राह्मणं ब्रवीतीति तथा, नीचब्राह्मणः इत्यर्थः। "ब्रुवो हीनः पदात् परे। जातिमात्रोपजीवे तु कथ्यते ब्राह्मणो ब्रुवः" इति वैजयन्ती। निकृष्टानामेव द्विजानामेतत् वक्तुं प्रयोजनमिति नीचब्राह्मणे पदमिदं प्रयुज्यते। कथं पापा अधर्मचारिणी इयम् अवन्तिसुन्दरी एनं पुरुषापसदं प्रति अनुरक्ता जातरागा मादृशेषु महिषेषु पुरुषसिंहेषु मानवश्रेष्ठेषु अपि सावमाना सावज्ञा मादृशमप्यवज्ञातवतीत्यर्थः; एतेन कुमार्य्याः स्वाभिलाष इति ध्वनिः। इयं पुनार्य्यशीला दुष्टस्वभावा कुलपांसनी कुलकलङ्किनी कुलदूषिकेत्यर्थः, "पांसनः कुलदूषकः" इति वैजयन्ती। अयोग्य अभिमत्येव पतिं भर्त्तारं शूलम् अपतंशः भूषणं यस्य स तथोक्तम्। वधाय शूले आरोपितमित्यर्थः, पश्यतु इत्यन्वयः।

(६) ररोधेति। हति एवं प्रकारं निर्भर्त्सयन् तिरस्कुर्वन्, भीषयतीति निजम्नन्

सिंह इव असह्यविक्रमः, प्राकारं भेदयित्वा, महता बलसमुदायेन निर्गत्य सम्प्रहितदूतव्रातागतानां साहाय्यदानाय अतिसत्वरमापततां, धरापतीनाम् अचिरकालभाविन्यपि सन्निधावदत्तापेक्षः साक्षादिवावलेपो वपुष्मान् अक्षमापरीतः प्रतिबलं प्रतिजग्राह ; जगृहे च, महति सम्पराये प्रक्षीणसकलसैन्यमण्डलः प्रचण्डप्रहरणघातभिन्नमर्मा सिंहवर्मा करिणा करीव अवप्लुत्य अतिमानुषप्राणबलेन चण्डवर्मणा (७)। स च तद्दुहितरि अम्बालिकायाम् अबलारत्नसमाख्यातायाम्

---

भीधातोः लुः ; भीषणः भयङ्करः ; भ्रुवोः कुटिः कौटिल्यं भीषणा भ्रुकुटी तया दूषितं दुष्प्रेक्ष्यं ललाटं भालं यस्य तथाभूतः सन् कालः यम इव कालः अयितः यो लोहदण्डः तद्वत्कर्कशेन कठिनेन बाहुदण्डेन दण्डवत्भीषणेन बाहुनेत्यर्थः, रेखा चिह्नविशेषः, अम्बुजं पद्मं रथाङ्गं चक्रं लाञ्छनं चिह्नं यस्य तथाभूते, हस्ताम्बुजे पद्मतुल्यौ हस्तावित्यर्थः,अवलम्ब्य गृहीत्वा राजपुत्रं राजवाहनं सरभसं सबलम् आचकर्ष आकृष्टवान्। स्वभावधीरः निसर्गशान्तः सर्वपौरुषाणां पराक्रमाणाम् अतिभूमिः पराकाष्ठा यत्र तथाभूतः, सः राजवाहनः सहिष्णुता सहनशीलता एव एका प्रतिक्रिया प्रतिकारः यस्याः तां तथोक्ताम्। केवलेन धैर्येणैव यस्य प्रतीकारः शक्यते ; अप्रतिकार्यसहनमेव प्रतीकारः इति भावः। दैवीमेव अदृष्टकृतमेव आपदं विपदम् अपरिहार्यं निश्चित्य, हंसगामिनि, अयि हंसवत् सुन्दरगमनशीले, तस्याः हंसकथायाः प्राग्देहस्य शापस्य स्मर चिन्तय 'अधीगर्थदयेषां कर्मणि' इति कर्मणि षष्ठी। वास हे बाले, "बाला स्याद्दास:" इत्यमरः। मासद्वयं सहस्व हिमासं धैर्यमवलम्ब्यापेक्षस्वेत्यर्थः। इति एतेन वाक्येन प्राणानां परित्यागः तस्मिन् रागः अनुरक्तिः, तत् अस्याः अस्तीति इन्, ततः स्त्रियामीप्। प्राणसमां जीवनतुल्यां समाश्वास्य सान्त्वयित्वा रिपुवश्यताम् अधीनताम् अयासीत् प्रापत् तस्मात्मानं समर्पितवान्।

(७) अथेति। अथ अनन्तरम्। विदिता ज्ञाता वार्त्ता वृत्तान्तः याभ्यां तौ तथोक्तौ। अतएव आर्त्तौ कातरौ कन्यास्नेहादिति भावः। महादेवीमालवेन्द्रौ मालवपतिस्तत्पत्नी च, आकारपक्षपातिनौ आकारेण आमात्तः सौन्दर्यदर्शनेन तत्पक्षे स्थितौ तस्मिन् स्निह्यन्तौ। आत्मनः प्राणानां परित्यागः मोचनं तस्य उपन्यासः वाक्योपक्रमः तेन तथोक्तेन। "आत्मा पुंसि स्वभावे च प्रयत्नमनसोरपि। धृतावपि मनीषायां शरीरे

प्रतिमन्त्राभिलाषः, प्राणैरेनं न व्ययूयुजत्। अपि तु अनीनयत् अपनीताशेषप्रत्ययम् अकल्पसम्भो बन्धनगृहम्। अजीगणच्च गणकसङ्घः: 'अद्य एव क्षपावसाने विवाहनीया राजदुहिता' इति। कृतकौतुकमङ्गले च तस्मिन्, एकपिङ्गाचलात् प्रतिनिवृत्य एणजङ्घोनाम जङ्घाकरिकः प्रभवतो दर्पसारस्य प्रतिसन्देशमावेदयत्। 'अयि मूढ़! किम् अस्ति कन्यान्तःपुरदूषकेऽपि कश्चित् क्षपावसरः। स्थविरः स राजा जरावलुप्तमानावमानचित्तो दुश्चरितदुहितृपक्षपाती, यदेव किञ्चित् प्रलपति, त्वयापि किं तदनुमत्या स्थातव्यम्? अविलम्बितम्

---

प्रश्नयोरपि॥" इति मेदिनी। यद्यप्येनं हनिष्यति तर्हि आवां प्राणान् त्यक्ष्याव इति वाक्योपन्यासिनेत्यर्थः, अरिणा शत्रुणा चण्डवर्म्मणा जिघांसमानं हन्तुं नीयमानं जामातरं राजवाहनं ररक्षतुः जीवयामासतुः। तु किन्तु अप्रभुत्वात् असामर्थ्यात् पूर्वं राज्यापहरणात् स्वस्य अप्रभुत्वमिति भावः। आपदः विपदः 'भीत्रार्थानां भयहेतुः' इत्यपादानम्। तम् उत्तारयितुं परित्रातुं 'शकधृषज्ञा—' इति तुमुन्। न शेकतुः शक्तवन्तौ। स चण्डवर्मा किल वार्त्तायाम्। चण्डशीलः उग्रस्वभावः "चण्डस्त्वत्यन्तकोपनः" इति हेमचन्द्रः। सर्व्वमिदमुदन्तजातं सकलवृत्तान्तसमूहम् अवन्तिसुन्दर्याः परिणयरूपव्यापाररूपम्। राज्ञां राजा राजराजः कुबेरः तस्य गिरिः पर्व्वतः कैलासः तस्मिन्। तपस्यते तपश्चरते दर्पसाराय सन्दिश्य वार्त्तां प्रेषयित्वा 'क्रियया यमभिप्रैति—' इति चतुर्थी। "सन्देशः प्रहितं वचः" इति वैजयन्ती। सर्व्वमेव सफलमेव पुष्पोद्भवकुटुम्बकं राजवाहनमित्रस्य पुष्पोद्भवस्य परिजनं, सर्व्वस्वहरणपूर्व्वकम् सर्व्वं स्वं धनं तस्य हरणं तत्पूर्व्वं यस्य तत् यथा तथा। पुष्पोद्भवस्य सर्व्वं राजकोषन्यस्तं कृत्वेत्यर्थः, सद्य एव सपदि एव बन्धने कारागृहे चिक्षेप निक्षिप्य परिजनसहितं तं बन्दीकृत्वेत्यर्थः। मूर्द्धजानां केशानां जालेषु लीनः स्थितः यश्चूड़ामणिः शिरोरत्नं तस्य प्रभावेन शक्त्या विक्षिप्तः दूरीकृतः क्षुत्पिपासादिखेदः क्षुधातृष्णादिजनितः क्लेशः यस्य तथाविधं तं राजवाहनं राजा कैश्चरिभिः सिंहप्रवरस्य किशोरकं बालं इव दारुणा काष्ठेन निर्म्मितं पञ्जरं तस्मिन् निबद्धः संयमितः तं तथोक्तम्। कृत्वा सम्पाद्येत्यर्थः, अवधृता प्रत्याख्याता दुहितुः कन्यायाः प्रार्थना याच्ञा येन तस्य

एव तस्य कामोन्मत्तस्य चित्तवृत्तिप्रेषणीन श्रवणोत्सवेऽस्माकं विधेयः। सा तु दुष्टकन्या सङ्गानुजेन कीर्त्तिसारेण निगडितचरणा चारके निरोद्धव्या' इति। (८) तच्च आकर्ण्य 'प्रातरेव राजभवनद्वारे स दुरात्मा कन्यान्तःपुरदूषकः सन्निधापयितव्यः, चण्डपोतश्च मातङ्गपतिः उपरचितकल्पनोपपन्नः तत्रैव समुपस्थापनीयः। कृतविवाहकृत्यश्चोत्थाय अहमेव, तम् अनार्य्यं, तस्य हस्तिनः कृत्वा क्रीड़नकं, तत् अधिरुह्य एव गत्वा शत्रुसाहाय्याय 'प्रत्यासीदतो राजन्यकस्य सकोषवाहनस्य अवग्रहणम् करिष्यामि' इति पार्श्वचरान् अवेक्षाञ्चक्रे। निन्ये च असौ अहनि अन्यस्मिन् उन्मिषति एवोषोरागे राजपुत्रो राजाङ्गनं रक्षिभिः, उपतस्थे च चरितगण्डः चण्डपोतः। क्षणे च तस्मिन्, मुमुचे तदङ्घ्रियुगलं रजतशृङ्खलया। सा चैनं चन्द्रलेखाकृतिः काचित् अप्सरोरूपिणी

---

तयोक्तस्य। चण्डवर्मा पाणिग्रहीतुम् अङ्गराजसङ्ग्रामस्वामिकां ययाचे तेन तु सा प्रार्थना प्रत्याख्यातेति। अङ्गराजस्य अङ्गाधिपतेः सिंहवर्म्मणः, अङ्गराज्यन्तु वर्त्तमानभागलपुराख्यजनपदः इति। उद्धरणाय उन्मूलितुम् अङ्गान् तदाख्यदेशान् अभियास्यन् अभिजययात्रां करिष्यन् अनन्यविश्वासात् अन्यस्मिन् जने असात्यपरिजने राजवाहनरक्षणभारदाने प्रत्ययाभावादित्यर्थः, निनाय नीतवान्, स्वेन सह राजवाहनं नयति स्मेत्यर्थः। बलानां सैन्यानां भरेण अतिशयेन दत्तः जनितः कम्पः येन स तथाभूतः। अगणितयोऽष्टपादभरेण धरणी कम्पितेत्यर्थः, चम्पा तन्नामधेया अङ्गदेशराजधानी तां वरोध आचक्राम।

(८) चम्पेश्वर इति। सिंह इव असह्यविक्रमः अप्रतिमेयप्रतापः चम्पेश्वरः चम्पाधिपतिः सिंहवर्म्मा अपि स्वेन आत्मना प्रहितैः प्रेरितैः दूतव्रातैः दूतसङ्घैः आहूतानां साहाय्यार्थमाकारितानां योधानां। साहाय्यदानाय सहायतामर्पणाय वत् पक्षे स्थित्वा योद्धुमित्यर्थः, अतिसत्वरम् अतित्वरितम् आपतताम् आगच्छतां धरापतीनां भूपालानाम् अचिरकालभाविन्यपि अचिरेण भविष्यत्यपि सन्निधौ उपस्थितौ अदत्तापेक्षः निरपेक्षः तेषामागमनमनपेक्ष्यैवेति भावः। साक्षात् प्रत्यक्षतः 'वपुष्मान् इतविग्रहः

भूत्वा, प्रदक्षिणीकृत्य प्राञ्जलिः व्यजिज्ञपत्। (६) 'देव! दीयताम् अनुग्रहार्द्रं चित्तम्, अहमस्मि सोमरश्मिसम्भवा सुरतमञ्जरी नाम सुरसुन्दरी। तस्या मे, नभसि नलिनजुब्ध-मुग्धकलहंसानुबद्धवक्त्रायाः तन्निवारणक्षोभविच्छिन्नविगलिता

---

अवलेपः दर्पः इव अक्षमापरीतः क्रोधाभिभूतः प्राकारं नगरप्राचीरं "प्राकारो वरणः साल:" इति रत्नकोषः। भेदयित्वा विदीर्य्य महता विपुलेन बलसमुदायेन सैन्यनिवहेन निर्गत्य राजधान्याः बहिरेत्य प्रतिबलम् अरातिवाहिनीं प्रतिजग्राह आचक्राम। महति तुमुले सम्पराये युद्धे प्रक्षीणं हतं सकलानां सैन्यानां मण्डलं समूहः यस्य तथोक्तः। प्रचण्डैः अत्युग्रैः प्रहरणशतैः अस्त्रसमूहैः भिन्नं विदारितं मर्म हृदयं यस्य स तथोक्तः। सिंहवर्म्मा करिणा हस्तिना करीव हस्तीव अवप्लुत्य उद्गत्य अतिमानुषं मानुषमतिक्रान्तं प्राणानां बलं यस्य तथोक्तेन। अलौकिकसत्वशालिनेत्यर्थः, चण्डवर्म्मणा तदाख्यायिकेन जगृहे वन्दीकृतः।

(८) स चेति। स चण्डवर्म्मा तद्दुहितरि तस्य अङ्गराजस्य सिंहवर्म्मणः कन्यायां अवनासु स्त्रीषु रत्नं सारभूतं श्रेष्ठतमेत्यर्थः, समाख्याताथां प्रसिद्धायां तथाहि—"जातौ जातौ यदुत्कृष्टं तद्रत्नमिति कथ्यते" इति। अम्बालिकायाम् अतिमात्राभिलाषः अत्यधिकं जातदपः एनं सिंहवर्म्माणं प्राणैः असुभिः न व्ययुयुक्त वियोजितवान् निजन्त-युजधातोः लुङि रूपम्। अपि तु किन्तु अकल्या सन्धा यस्य सः, सत्यप्रतिज्ञ इत्यर्थः, अपनीतानि अङ्गेभ्यः व्याधितानि अशेषाणि शल्यानि अस्त्रखण्डानि यस्य तथा.....: तं सिंहवर्म्माणं बन्धनं कारागृहम् अनीनयत् प्रापयामास। गणकसंघैः ज्योतिःशास्त्रज्ञ-निकरैः अजीगणत् गणयामास। अद्य एव क्षपावसाने रात्रिशेषे राजदुहिता राजकन्या विवाहनीया परिणेतव्या तस्मिन् चण्डवर्म्मणि कृतं विहितं कौतुकाय विवाहाय मङ्गलम् आभ्युदयिकादिकर्म्म येन तथाभूते। एणजङ्घो नाम जङ्घाकारिकः शीघ्रगामी अनु-चर इत्यर्थः, जङ्घया जीवतीति ठन्। "जाङ्घाकरिको जाङ्घिको जवी" इति हेमचन्द्रः। एकपिङ्गः कुबेरः तस्य अचलः पर्व्वतः तस्मात् प्रतिनिवृत्य प्रत्यागत्य प्रभवतः प्रभोः राज्ञ इत्यर्थः, दर्पसारस्य प्रतिसन्देशं प्रत्युत्तरम् अवेदयत् विज्ञापयामास। अयि मूढ, रे मूर्ख, कन्यायाः अन्तःपुरं तस्य दूषकः मर्य्यादानाशकः दूषयतीति णिजन्तदूषधातोः ण्वुल्। तस्मिन् तथोक्ते जने कश्चित् अनुभावोऽपि कृपावसरः दयाप्रकाशस्य सम्भावना अस्ति किं नैवास्तीत्यर्थः। जरया वार्द्धक्येन अवलुप्तौ विनष्टौ मानापमानौ यस्य तादृशं

हारयष्टिर्यदृच्छया जातु हैमवते सरसि मग्नोदके सन्ध्योपासनस्य महर्षेः मार्कण्डेयस्य मस्तके मणिकिरणद्विगुणितपलितम् अपतत्। पातितञ्च कोपितेन कोऽपि तेन मयि शापः। 'पापे!

---

चित्तं चेतः यस्य तथाभूतः। वार्द्धक्येन मानापमानबुद्धिरपि तिरोहिता इत्यर्थः, स्थविरः वृद्धः स राजा दुश्चरितायाः दुष्कार्य्यान्वितायाः दुहितुः सुतायाः पक्षपाती पक्षसमर्थनकारी सन् यत् एव किञ्चित् प्रलपति व्यर्थमभिभाषते त्वया तदनुमत्या तस्य भूपतेः निर्देशेन स्थातव्यं किम् न स्थातव्यमित्यर्थः, किमाक्षेपे। तस्य वातोन्मत्तस्य वातेन उन्मत्तः विवेकशून्यः तस्य तथाभूतस्य। प्रिया श्रवणसुखकरी वधवार्त्ता वधसंवादः तस्याः प्रेषणं प्रेरणं तेन तथोक्तेन। अविलम्बितं शीघ्रम् एव अस्माकं श्रवणोत्सवः कर्णयोः सुखं विधेयः करणीयः। सा च दुष्टकन्या दुःशीला अनुजेन कनिष्ठेन भ्रात्रा सह निगडितचरणा निगडः बन्धनम् अस्य यात इति निगडशब्दादितच्। निगडितौ चरणौ यस्याः सा तथोक्ता। चारके बन्धनागारे "चारकं बन्धनालयः" इति वैजयन्ती। निरोद्धव्या निक्षेपितव्येत्यर्थः।

(९) तच्चेति। तत् तादृशं दर्पसारसन्देशमित्यर्थः, आकर्ण्य श्रुत्वा चण्डवर्मा प्रातरेव प्रत्यूषे स दुरात्मा राजवाहनः राजभवनद्वारे राजप्रासादतोरणे सन्निधापयितव्यः निकटे स्थापनीय इत्यर्थः, चण्डपोतः तन्नामकः मातङ्गपतिः करिश्रेष्ठः, उपरचिता सम्यगनुष्ठिता कल्पना वेशरचना तया उपपन्नः युक्तः योग्यालङ्कारैः सज्जित इत्यर्थः, तस्मिन् तोरणे स्थापनीयः रक्षणीयः, कृतं विवाहकृत्यं येन स तथोक्तः विवाहकार्य्यं निष्पाद्येत्यर्थः, अहमेव उत्थाय तम् अनार्य्यम् अशिष्टं तस्य हस्तिनः चण्डपोतस्य क्रीडनकं क्रीडासाधनं कृत्वा चण्डपोतेन तं व्यापाद्येत्यर्थः, तम् तस्मिन् करिश्रेष्ठे अधिरूढ एव गत्वा करिणि आरुह्य शत्रुं आह्वाय्याय शत्रोः सिंहवर्म्मणः उद्धारार्थं 'क्रियार्थोपपदे' इति चतुर्थी। प्रत्यासीदतः समागच्छतः राजन्यकस्य क्षत्रियसमूहस्य कर्म्मणि षष्ठी। सकोषवाहनस्य कोषः धनागारं वाहनं हस्त्यश्वयानादीनि ताभ्यां सह वर्त्तमानः तथोक्तस्य। अवग्रहणं बन्धनं करिष्यामि इति एवम् उक्त्वा, पार्श्वे चरन्ति ये ते पार्श्वचराः, तान् अवेक्षाञ्चक्रे अवलोकयामास। तान् प्रति दृष्टिं निचिक्षेप इत्यर्थः, अन्यस्मिन्नहनि परेद्युः कषोरागे उषसः लौहित्ये प्रातःकालसम्बन्धिनि लौहित्ये उन्मिषति विकाशयति, असौ राजपुत्रः रक्षिभिः प्रहरिभिः राजाङ्गनं राजभवनस्याजिरम् "अङ्गनं चत्वराजिरे" इत्यमरः। नि... प्रापितः

भजस्व लोहजातिम् अजातचैतन्या सती' इति। (१०) स पुनः प्रसाद्यमानः त्वत्पादयुग्मद्वयस्य मासद्वयमात्रं सन्दानतामेत्य, निस्तरणीयाम् इमाम् आपदम्, अपरिक्षीणशक्तित्वं पञ्चेन्द्रियाणामकल्पयत्। अनल्पेन च पाप्मना रूप्यशृङ्खलीभूतां

---

क्षरितगण्डः क्षरितः च्युतः गण्डः गण्डस्थलः यस्य स तथोक्तः मदस्रावीत्यर्थः, चक्षुपोतः तदाख्यकरी उपतस्थे आजगाम। 'ष्ठागतिनिवृत्तौ' इति धातोः 'उपाद्देवपूजासंगतिकरणमित्रकरणपथिष्विति वाच्यम्' इत्यनेनात्मनेपदम्। तस्मिन् क्षणे समये तदङ्घ्रियुगलं तस्य राजवाहनस्य चरणयुगलं रजतशृङ्खलया रजतनिर्मितनिगडेन मुमुचे त्यक्तम्। मुचः कर्मणि लिट्। सा शशाङ्कलेखा, चन्द्रस्य लेखा रेखा तस्याः इव छविः कान्तिर्यस्याः सा तथोक्ता। कौमुदीव सुन्दरकान्तिः इत्यर्थः, काचित् अप्सरोरूपिणी अमरमः रूपधारिणी भूत्वा प्रदक्षिणीकृत्य दक्षिणे संस्थाप्य वेष्टनेनेत्यर्थः, कुमारमिति शेषः। प्राञ्जलिः युक्ताञ्जलिः व्यज्ञपत् न्यवेदयत निवेदितवतीति यावत्।

(१०) देवेति। देव हे कुमार, अनुग्रहार्द्रं करुणार्द्रं चित्तं चेतः दीयतां मदाकर्ण्यं श्रुत्वा मामनुगृहाण इत्यर्थः, अहं सोमरश्मिसम्भवा सोमरश्मेः ततसंज्ञकात् तदाख्यगन्धर्वादित्यर्थः, सम्भवा उत्पन्ना नाम्ना सुरतमञ्जरी सुरसुन्दरी सुराणां सुन्दरी सुराङ्गना तस्याः मे मम जातु कदाचित् नभसि गगने नलिने पद्मे लुब्धः लालसान्वितः यः मुग्धः भ्रान्तः कलहंसः राजहंसः तेन अनुबद्धम् अनुसृतं वक्त्रम् आस्यं यस्याः तथाकारायाः। शिवरामेण सन्मुखे नलिनत्वभ्रान्त्या कलहंसेनावरुद्धवक्त्रायाः मसेत्यर्थः इति व्याख्यातम्। तस्य निवारणे ताडने यः क्षोभः संभ्रमः तेन विच्छिन्ना निहता विगलिता च्युलिता हारयष्टिः हारलता, मुखकमलयोः साम्येन कलहंसानां मुखे कमलभ्रान्तित्वादत्र भ्रान्तिमानलङ्कारः। हैमवते हिमवतः इदं हैमवतं तस्मिन्। हिमालयसम्बन्धिनीत्यर्थः, सरसि ह्रदे मन्दोदके तदाख्ये सरसि, केचित्तु मन्दोदके अगाधाम्भसि यदृच्छया इच्छानुसारेण मग्नोन्मग्नत्वादाहुः, स्नानं कुर्वतः महर्षेः मार्कण्डेयस्य मस्तके मणयः रत्नानि तेषां किरणः भास्वरः तेन द्विगुणितं वर्द्धितं पलितं वार्द्धक्यजनितशौक्ल्यं यस्मिन्, तत् यथा तथा अपतत पपात। कोपितेन क्रुद्धेन तेन महर्षिणा कोऽपि कश्चित् शापः अभिसम्पातः मयि पातितः दत्तः। पापे रे पापीयसि, अजातचैतन्या न जातम् उत्पन्नं चैतन्यं चेतनधर्मः यस्याः सा, नष्टसंज्ञेत्यर्थः। लोहजातिं लोहत्वं भजस्व प्राप्नुहि।

मामैक्ष्वाकस्य राज्ञो वेगवतः पौत्रः पुत्रो मानसवेगस्य, वीर-शेखरो नाम विद्याधरः शङ्करगिरौ समभ्यगमत्, आत्मसात्कृता च तेनाहमासम्। अथासौ पितृप्रयुक्ते वैरे वर्त्तमाने, विद्या-धरचक्रवर्त्तिनि वत्सराजवंशवर्द्धने नरवाहनदत्ते, विरसाशयः तदपकारक्षमोऽयम् इति तपस्यता दर्पसारेण सह समसृज्यत। प्रतिश्रुतश्च तेन तस्मै स्वसुः अवन्तिसुन्दर्याः प्रदानम्। (११) अन्यदा तु वियति व्यवदायमानचन्द्रिके मनोरथप्रियतमाम् अवन्तिसुन्दरीं दिदृक्षुः अवशेन्द्रियः तदिन्द्रमन्दिरद्युति कुमारी-पुरमुपासरत्। अन्तरितश्च तिरस्करिण्या विद्यया, स च तां तदा

---

(११) स इति। पुनः शापानन्तरं प्रसाद्यमानः अनुनीयमानः सः महर्षिः त्वत्-पादपद्मद्वयस्य तव चरणकमलयोः मासद्वयमात्रं द्वौ मासौ यावत् 'प्रमाणं इन्द्रियच—' इत्यादिना माचच्। सन्दानतां पादबन्धनतां एत्य संप्राप्य इमाम् आपदं शृङ्खलपरिणति-रूपां विपदं निस्तरणीयां समापयिष्यसि पञ्चेन्द्रियाणां मनःप्रभृतीनाम् अपरिक्षीण-शक्तित्वं स्वस्वविषयग्राहकत्वम्। शृङ्खलरूपत्वेनापि सर्वेन्द्रियजन्यं ज्ञानं न तिरोऽभवदिति भावः। अकल्पयत् विहितवान्। अनल्पेन महता याम्नना दाम्नेन महर्षेः शिरसि हारपतनरूपेणेत्यर्थः, ऐक्ष्वाकस्य इक्ष्वाकुवंशोद्भवस्य राज्ञः वेगवतः पौत्रः नप्ता मानसवेगस्य तन्नामधेयस्य पुत्रः वीरशेखरो नाम नाम्ना वीरशेखरः विद्याधरः देवयोनिविशेषः। शङ्करगिरौ कैलासे शृङ्खलीभूतां रजतशृङ्खलरूपेण 'रूपितां मां समभ्यगमत् प्राप। तेन विद्याधरेण अहम्, आत्मसात्कृता आत्माधीनं नीता। अथ असौ वीरशेखरः पितृप्रयुक्ते पित्रा कृते वैरे प्रबुद्धे वर्त्तमाने कुर्वाणे, दीपिकाकारस्तु इदमन्यथमाचचते। "वर्त्तमानेथ सांप्रतम्" विद्याधरचक्रवर्त्तिनि विद्याधरचितीशे वत्सराजवंशवर्द्धने वत्सराजस्य कुलनन्दने नरवाहनदत्ते विरसाशयः पुरुषाभिप्रायः "भावोऽभिप्राय आशयः" इत्यमरः। अयं दर्पसारः तदपकारक्षमः तस्य विद्याधरस्य अपकारः अनिष्टाचरणं तस्मिन् क्षमः इति एवं मत्वेति शेषः। तपस्यता तपश्चरता दर्पसारेण सह समसृज्यत संगतः मिलित इत्यर्थः, तेन दर्पसारेण अस्मै वीरशेखराय स्वसुः सोदर्याः अवन्तिसुन्दर्याः प्रदानम् अर्पणं प्रतिश्रुतम् अङ्गीकृतम्।

त्वदङ्कोपाश्रयां सुरतखेदसुप्तगात्रीं, त्रिभुवनसर्गयात्रासंहारसंस्थिताभिः कथाभिः अमृतस्यन्दिनीभिः प्रत्यानीयमानरागपूरां न्यरूपयत्। (१२) स तु प्रकुपितोऽपि, त्वदनुभावप्रतिबद्धनिग्रहान्तराध्यवसायः समालिङ्ग्य इतरेतरम् अत्यन्तसुखप्रसुप्तयोर्युवयोः देवदत्तोत्साहः पाण्डुलोहशृङ्खलात्मना मया पादपद्मयोर्युगलं तव निगडयित्वा, सरोषरभसम् अपासरत्। अवसितश्च ममाद्य शापः, तच्च मासद्वयं तव पारतन्त्र्यम्। प्रसीद इदानीं किं तव करणीयम्? इति प्रणिपतन्तीं 'वार्त्तयानया मत् प्राणसमां समाश्वासय' इति व्यादिश्य विससर्ज। (१३)

---

(१२) अन्यदेति। अन्यदा अन्यस्मिन् समये वियति गगने व्यवदायमाना दीप्यमाना चन्द्रिका कौमुदी यस्मिन् तथोक्ते। 'दैप् शोधने' इति धातोः कर्त्तरि शानच्। मनोरथप्रियतमां मनोरथैः अभिलाषजालैः नवैश्चणादिभिः प्रियतमां वल्लभाम् अवन्तिसुन्दरीं दिदृक्षुः द्रष्टुमिच्छुः 'सनाशंसभिक्ष उः' इति उः। अवशेन्द्रियः चञ्चलचित्तः इन्द्रमन्दिरद्युति इन्द्रस्य मन्दिरं गृहं तस्य द्युतिरिव द्युतिर्यस्य तत् तथोक्तम्। इन्द्रपुरीवदुज्ज्वलमित्यर्थः, तत् यत्र त्वमस्वपः तदित्यर्थः, कुमारीपुरं कन्यान्तःपुरम् उपासरत् उपागच्छत्। तिरस्करिण्याः अन्तर्धानकारिण्या विद्यया अन्तरितः तिरोहितः। तदा तत्काले। ताम् अवन्तिसुन्दरीं सुरतं स्मरः तज्जन्यः खेदः अवसन्नता तेन सुप्तं निद्रितं गात्रं यस्याः तां तथोक्ताम्। तव अङ्कः क्रोड़ः तस्मिन् उपाश्रयः उपस्थितिः यस्याः तां तथोक्ताम्। त्वदङ्कसङ्गे न्यस्तमस्तकामित्यर्थः, त्रिभुवनस्य तदाख्यजनस्य सर्गेण सार्द्धेन यात्रा गतिः। इन्द्रादेः पराङ्गनागमनम्, यादवानां मद्यपानम्, युधिष्ठिरनलादीनां द्यूतविधिस्तेन संहारः, इन्द्रचन्द्रवालिरावणादेरिगवधादिः। यद्वा सर्गः उत्पत्तिः, यात्रा स्थितिः, संहारो लयः, तत्र संस्थिताभिः तद्बोधिकाभिः। इति भूषणाकारः। अमृतस्यन्दिनीभिः अमृतवर्षिणीभिः कथाभिः वार्त्ताभिः। प्रत्यानीयमानः पुनरानीयमानः रागः अनुरागः तस्य पूरः प्रवाहः यस्याः तां तथोक्ताम्। न्यरूपयत् ददर्श दृष्टवानिति यावत्।

(१३) स इति। स तु विद्याधरः वीरशेखरः प्रकुपितोऽपि अत्यन्तक्रुद्धोऽपि तव

तस्मिन् एव क्षणान्तरे 'इतो हतस्खड्गवर्मा सिंहवर्मदुहितुरवालिकायाः पाणिग्रहणरागप्रसारिते बाहुदण्ड एव बलवद्वलक्रमरभसमाकृष्य केनापि दुष्करकर्मकारिणा तस्करेणैकेनैव नखरप्रहारेण राजमन्दिरोद्देशश्च शवशतमयम् आपादयन् अचकितगतिरसौ विहरति' इति वाचः समभवन्। श्रुत्वा चैतत् तमेव मत्तहस्तिनम्, उदस्ताधोरणो राजपुत्रोऽधिरुह्य रंहसोत्तमेन राजभवनम् अभ्यवर्तत। स्तम्बेरमरयाधूतपत्तिदण्डवर्मा च प्रविश्य वेश्माभ्यन्तरम् अदभ्राभ्रनिर्घोषगम्भीरेण स्वरेण अभ्यधात्—'कः स महापुरुषो येनैतन्मानुषमात्रदुष्करं महत् कर्मानुष्ठितम्। आगच्छतु, स मया सह इमं मत्तहस्तिनम् आरोहतु। अभयमेव मदुपकण्ठवर्त्तिनो देवदानवैरपि विरुद्धानस्य' इति। (१४) निशम्य एवं स पुमान् उपोढहर्षो निर्गत्य कृताञ्जलिराक्रम्य संज्ञाकुञ्चितं

---

अनुभावः प्रभावः तेन प्रतिबद्धः निवारितः निग्रहान्तरस्य अन्यकृपानिग्रहस्य अध्यवसायः उद्योगः यस्य स तथोक्तः। दैवेन तव दुरदृष्टेन दत्तः उत्साहः तव निग्रहे यत्नः यस्मै स तथोक्तः। इतरेतरम् अन्योऽन्यं समालिङ्ग्य आश्लिष्य, सुखेन प्रसुप्तः निद्रितः, अत्यन्तं सुखप्रसुप्तः तयोः तथोक्तयोः, सुप्सुपा समासः। युवयोः त्वञ्च सा अवन्तिसुन्दरी च तयोः। तव पादपद्मयोर्युगलं युग्मम्, पाण्डुलोहं रजतं तेन निर्मितं शृङ्खलं तदात्मा यस्य तेन रजतशृङ्खलीभूतेनेत्यर्थः, मया निगडयित्वा संयम्य सरोवरमरुं सक्रोधवेगम् अपाहरत् अपागच्छत्। अद्य मम शापः अभिसम्पातः अवसितः समाप्तिं गतः। तत् तस्मादेतदवेत्यर्थः, सा चेदं तव पारतन्त्र्यं पराधीनता। इदानीं सांप्रतं प्रसीद प्रसन्नो भव किं तव करणीयं किं भवतः प्रियमुपहरामीति भावः। इति प्रणिपतन्तीं नमस्कुर्वन्तीम् अनया वार्त्तया वृत्तान्तेन, मत्प्राणसमां मम प्राणतुल्याम् अवन्तिसुन्दरीं समाश्वासय सान्त्वय इति एवं व्यादिश्य कथयित्वा विससर्ज तत्याज। यथेच्छं यातुमनुमेने इत्यर्थः।

(१४) तस्मिन्निति। तस्मिन्नेव क्षणान्तरे परस्मिन्नेवावसरे केनापि एकेनैव दुष्कर-

कुञ्जरगात्रमसक्तम् अभ्यरुचत्। आरोहन्तमेव एनं निर्वर्ण्य हर्षोत्फुल्लदृष्टिः 'अये! प्रियसखोऽयमपहारवर्मैव' इति पश्चान्निषोदतोऽस्य बाहुदण्डयुगलमुभयभुजमूलप्रवेशितम् अग्रेऽवलम्ब्य स्वमङ्गमालिङ्गयामास। स्वयञ्च पृष्ठतो वलिताभ्यां भुजाभ्यां पर्यवेष्टयत्। तत्क्षणोपसंहृतालिङ्गनव्यतिकरश्च अपहारवर्मा चापचक्रकणपकर्पणप्रासपट्टिशमुषलतोमरादि-

---

कर्मकारिणा दुःसाध्यव्यापारसम्पादकेन तस्करेण चौरेण सिंहवर्मदुहितः कन्यायाः अम्बालिकायाः पाणेः स्पर्शः परिग्रहः तस्य रागः अनुरागः तेन प्रसारिते विस्तारिते बाहुदण्डे बाहुयुग्मे बलवदेव सुदृढमित्यर्थः, अवलम्ब्य तौ आदायेत्यर्थः, सरभसं सवेगम् आक्षिप्य धृत्वेत्यर्थः, एकेनैव नखरप्रहारेण क्षुरिकाघातेन "नखरम्लक्षिपुत्रिका" इति वैजयन्ती। चण्डवर्मा हतः हतः विनष्ट, सम्भ्रमेण द्विरुक्तिः। असौ तस्करः राजमन्दिरोद्देशं राजगृहप्रदेशं शवानां जीवनशून्यानां शतानि तन्वन्, अश्रेश्यगवदैः पूर्णमित्यर्थः, आपादयन् कुर्वन् अचकितगतिः अवस्तगमनः विचरति परिभ्रमति इति एवं वाचः वाक्यं समभवन् सर्वत्र लोकमुखेन श्रूयन्ते स्म। श्रुत्वा च एतत् वाक्यमित्यर्थः, राजपुत्रः राजवाहनः उदस्ताधोरणः उदस्तः दूरीकृतः आधोरणः हस्तिपकः येन तथोक्तः। पश्चात् हस्तिपकमधः क्षिप्त्वेत्यर्थः, तमेवमत्तहस्तिनं मत्तकरिणम् अधिरुह्य आश्रित्य रंहसोत्तरेण अतिवेगेन राजभवनं राजगृहम् अभ्यवर्तत समाश्रयौ। रंहो रमते इति 'सम्बकर्णयोरसिजपोः' इत्यच्। स्वत्व रमः हस्तो तस्य रयेण वेगेन अवधूतैः दूरीकृतैः पत्तिभिः पदातिकयोद्धृभिः दत्तं वर्त्म मार्गं यस्मै स तथोक्तः। वेश्माभ्यन्तरं गृहमध्यं प्रविश्य,अदभ्र बहुलं यत् अभ्रं मेघः तस्य निर्घोषः गर्जनम् इव गम्भीरः तेन तथोक्तेन। स्वरेण रवेण अभ्यगात् अकथयत्। कः स महापुरुषः महानुभवो वीरः येन वीरेण एतत् चण्डवर्मविनाशरूपं मानुषमात्रदुष्करं मानुष एव मानुषमात्रम् इति नित्यसमासः। तेन दुष्करम् अतिमानुषं तत् कर्म्म अनुष्ठितं विहितम्। सः जनः आगच्छतु आयात् मया सह इमं मत्तहस्तिनं चन्द्रपोतम् आरोहतु। मम उपकण्ठं समीपं तस्मिन् वर्त्तते इति तथोक्तम्। देवदानवैः देवदैत्यैः अपि सह विरुद्धाणस्य विरोधं कुर्वतः अभयमेव मह्यायुष्यत्वमस्त्येव। मयि स्थिते देवदानवैरपि पराभवितुं न शक्तः, किं पुनः मानुषमात्रादिति भावः। इति।

प्रहरणजालम् उपयुञ्जानान् बलावलिप्तान् प्रतिबलवीरान् बहुप्रकारयोधिनः परिक्षिपतः क्षितौ विचिक्षेप। क्षणेन च अद्राक्षीत् तदपि सैन्यमन्येन समन्ततोऽभिमुखम् अभिधावता बलनिकायेन परिक्षिप्तम् (१५)

अनन्तरञ्च कश्चित् कर्णिकारगौरः कुरुविन्दसवर्णकुन्तलः कमलकोमलपाणिपादः कर्णचुम्बिदुग्धधवलस्निग्धनीललोचनः

---

(१५) निशम्येति। स पुमान् अमानुषकर्म्मा तस्करः एवं पूर्वोक्तरूपं निशम्य आकर्ण्य उपोढहर्षः सञ्जातप्रीतिः आगत्य समेत्य कृताञ्जलिः बद्धपाणिः सन् संज्ञासङ्कुचितं संज्ञया सङ्केतेन सङ्कोचितम् आनतं कुञ्जरगात्रं मातङ्गस्य पूर्वजङ्घाप्रदेशं "गजानामग्रजङ्घायां गात्रमङ्गशरीरयोः" इति व्याडिः। असक्तं शीघ्रम् अध्यरुक्षत् आरुरोहेत्यर्थः, एनं त्वां रोहन्तमिव समाश्रयन्तं जनमेव निर्वर्ण्य दृष्ट्वा हर्षेण आह्लादेन उत्फुल्ला उच्छ्वसिता दृष्टिः यस्य स तथोक्तः। अयि, इति निपातः सम्बुसम्बोधनवाचकः, अयं प्रियसखः 'राजाहःसखिभ्यष्टच्' इति समासान्त टच्। अपहारवर्म्मा इति उक्त्वा पश्चात् निषीदतः आसीनस्य उभयभुजमूलप्रवेशितम् आत्मनः भुजमूलमध्येन सम्यक् समागतम् अस्य बाहुदण्डयुगलम् अयि बाह्वोरग्रभागे अवलम्ब्य धृत्वा स्वमङ्गं देहम् आलिङ्गयामास संश्लेषं चक्रे। स्वयम् आत्मना च पृष्ठतः पश्चात् वलिताभ्यां चलिताभ्यां वक्रिताभ्यामित्यर्थः, भुजाभ्यां पर्य्यवेष्टयत आलिलिङ्ग। तत् क्षणं सद्यः उपसंहृतः पर्य्यवसितः आलिङ्गनव्यतिकरः आश्लेषव्यापारः येन स तथोक्तः। चापं धनुः, चक्रं तदाख्यास्त्रविशेषः, कणपः लौहदण्डविशेषः, कर्पणः कुटिलायास्त्रविशेषः, प्रासः कुन्तः, पट्टिशः विशालधारास्त्रविशेषः, मुषण्ठ तोमरः अस्त्रविशेषः एतत् आदयो यस्य तथाविधं प्रहरणजालम् अस्त्रसमूहम् उपयुञ्जानान् प्रेरयतः निक्षिपतः इत्यर्थः, बहुप्रकारयोधिनः बहुप्रकारम् अनेकविधम् आयोधिनः युद्धं कुर्वतः परिक्षिपतः समन्तादवरोधं कुर्वत इत्यर्थः। बलावलिप्तान् बलदृप्तान् प्रतिमल्लीयान् विपक्षवीरान् क्षितौ भूम्यां विचिक्षेप पातयामास। क्षणेन अत्यल्पकालेन अन्येन बलनिकायेन सैन्यनिवहेन समन्ततः सर्वतः सर्वेभ्यः दिग्भ्यः आगत्येत्यर्थः, अभिमुखं सम्मुखं 'प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः' इति। अभिधावता धावमानेन तदपि चण्डवर्म्मणोऽपि सैन्यं परिक्षिप्तं निरुद्धितम् अद्राक्षीत् ददर्श

कटितटनिविष्टरत्नक्षुरः पट्टनिवसनः कृशाङ्गप्रोद्गोरःस्थलः कृतहस्ततया रिपुकुलभिषुवर्षेण अभिवर्द्धन् पादाङ्गुष्ठनिष्ठुरावघृष्टकर्णमूलेन प्रजविना गजेन सन्निकृष्य पूर्वोपदेशप्रत्ययात् 'अयमेव स देवो राजवाहनः' इति प्राञ्जलिः प्रणम्य अपहारवर्मणि निविष्टदृष्टिः आचष्ट—'त्वदादिष्टेन मार्गेण सन्निपातितम् एतत् अङ्गराजसाहाय्यदानाय उपस्थितं राजन्यकम्। अरिबलञ्च विहतविध्वस्तं स्त्रीबालहार्य्यशस्त्रं वर्त्तते किमन्यत् कृत्यम्' इति। हृष्टस्तु व्याजहार अपहारवर्मा—'देव! दृष्टिदानेन अनुगृह्यतामयम् आज्ञाकरः। सोऽयमपि अहमेव अमुना रूपेण धनमित्राख्यया च अन्तरितो मन्तव्यः। स एव अद्य निर्गमय्य बन्धनादङ्गराजम्, अपवर्ज्जितं कोषवाहनम् एकीकृत्य अस्मद्गृह्येण च अमुना सह राजन्यकेन एकान्ते सुखोपविष्टमिह देवम् उपतिष्ठतु यदि न दोषः' इति। देवोऽपि 'यथा ते रोचते' इति तमाभाष्य गत्वा च तन्निर्दिष्टेन मार्गेण नगरात् वहिरतिमहतो रोहिणद्रुमस्य कस्यचित् क्षौमावदातसैकते गङ्गातरङ्गपवनपातशीतले तले द्विरदात् अवततार। (१६) प्रथमसमवतीर्णेन अपहारवर्मणा च स्वहस्तसत्वरसमीकृते मातङ्ग

---

(१६) अनन्तरमिति। अनन्तरं ततः परम् कश्चित् कर्णिकागौरः कर्णिकारः द्रुमोत्पलः तद्वदेव गौरः धवलदेहः। "कर्णिकारो द्रुमोत्पले" इति विश्वः। कुरुविन्दस्य नीलकान्तमणेः सवर्णः तुल्यवर्णः कुन्तलः केशकलापः यस्य स तथोक्तः। नीलकुन्तलकशोभि इत्यर्थः, कमलं पद्मं तद्वत् कोमलं पाणिपादं यस्य स तथोक्तः। 'प्राणितुर्य्यसेनाङ्गानां' इति समाहारः। राजलक्षणमिह वराहसंहितायां "अस्वेदनौ मृदुतलौ कमलोदराभौ श्लिष्टाङ्गुलीरुचिरताम्रनखौ सुपार्ष्णी। उष्णौ शिरादिरहितौ च निगूढगुल्फौ कूर्म्मोन्नतौ च चरणौ मनुजेश्वरस्य॥" इति। कर्णचुम्बिनी आकर्णविस्तृते दुग्धधवले दुग्धवत् शुभ्रे स्निग्धनीले स्निग्धनीलवर्णयुक्ते लोचने तारकाद्वये यस्य स

इव [स्फटिकमय इव] भागीरथीपुलिनमण्डले सुखं निषसाद। तथा निषण्णञ्च तम् उपहारवर्मार्थपालप्रमतिमित्रगुप्तमन्त्रगुप्त-विश्रुतैः मैथिलेन च प्रहारवर्मणा काशीभर्त्रा च कामपालेन,

---

तथोक्तः। कटितटे निविष्टं रचितं रत्नयुक्तं नखरं नखराकृतिः अस्त्रविशेषो यस्य स तथोक्तः। पट्टं दुकूलं निवसनं वासः यस्य स तथोक्तः। कृशं क्षीणम् उदरम्, पक्षे विस्तृतं उरःस्थलं वक्षोदेशं यस्य स तथोक्तः। क्षीणमध्यः विशालवक्षाश्चेत्यर्थः, रिपुकुलं शत्रुसमूहम् इषुवर्षेण बाणक्षेपेण अभिवर्षन् अभिक्षिपन्नित्यर्थः, पादाङ्गुष्ठेन निष्ठुरं निर्दयं यथा तथा अवनष्टं ताडितं कर्णमूलं यस्य तेन तथोक्तेन। प्रजविना सवेगेन गजेन सन्निकृष्य समीपमागत्य पूर्वः उपदेशः परिचयदानं तस्य प्रत्ययः विश्वासः तस्मात्। अयमेव स देवः राजपुत्रः राजवाहन इति एवम् उक्त्वा प्राञ्जलिः बद्धाञ्जलिः प्रणम्य नमस्कृत्य अपहारवर्मणि निविष्टदृष्टिः सन्निबद्धचक्षुः आचष्ट उवाच। त्वदादिष्टेन त्वया निर्द्दिशितेन मार्गेण पथा अङ्गराजसाहाय्यदानाय अङ्गराजमरातिभ्यः उद्धर्तुमित्यर्थः, उपस्थितम् आगतम् एतत् राजकं भूपतिवृन्दं सन्निपातितम् आनीतम् अरिबलम् अरातिसैन्यं विहतविध्वस्तं विहतं नाशितं विध्वस्तं क्षयगतं, कति विनाशितं कति क्षीणबलं कृतमित्यर्थः, अतएव स्त्रीभिः बालैश्च हार्य्यं हर्त्तुं शक्यं शस्त्रं यस्य तथाविधम्। वर्त्तते किमन्यत् कृत्यम् इतःपरं सम्पादनीयमित्याज्ञापयेत्यर्थः। हृष्टः सञ्जातहर्षः अपहारवर्म्मा व्याजहार जगाद। देव हे राजन्, अयं समीपतरः आज्ञाकरः सेवकः दृष्टिदानेन कृपाकटाक्षेण अनुगृह्यतां प्रसादीक्रियताम्। सोऽयमेव हि अमुना एव रूपेण आकारेण धनमित्राख्यया नाम्ना धनमित्रेण अन्तरितः अन्वितः मन्तव्यः ज्ञातव्यः। यदि चेत् दोषः अपराधः न भवेत् स एव अद्य अङ्गराजं सिंहवर्म्माणं बन्धनात् कारागृहात् निर्गमय्य मोचयित्वा अपवर्जितम् शत्रुणा गृहीतम् इतस्ततो-गतमित्यर्थः, कोषवाहनं धनं हस्त्यश्वादिकञ्च एकीकृत्य एकत्रं कृत्वा अस्मदगृह्ये-मामकपक्षीयेषु "गृह्यः पक्षस्थ उच्यते" इति हलायुधः। 'पादाश्चरिवाह्यापक्षेषु' इति क्यप्। अमुना राजन्यकेन क्षत्रियसङ्घेन सह एकान्ते निर्जने सुखोपविष्टं सुखासीनं देवं भवन्तम् इह अत्र उपतिष्ठत् सन्निधिमागच्छत्वित्यर्थः, देवोऽपि कुमारोऽपि यथा ते तुभ्यं रोचते 'रुच्यर्थानां प्रियमाणः' इति चतुर्थी। यत् सुखतया प्रतिभाति तथा विधीयतामित्यर्थः, इति एवं तम् अपहारवर्म्माणम् आभाष्य उक्त्वा तन्निर्द्दिष्टेन तदुप-

प्रमेश्वरेण सिंहवर्मणा सह उपागत्य धनमित्रः प्रणिपपात। देवोऽपि हर्षाविष्टम् अभ्युत्थितः 'कथं समस्त एष मित्रगणः समागतः, को नाम अयमभ्युदयः' इति कृतयथोचितोपचारान् निर्भरतरं परिरेभे। काशीपतिमैथिलाङ्गराजांश्च सुहृन्निवेदितान् पितृवत् अपश्यत्। तैश्च हर्षकम्पितपलितं सरभसोपगूढ़ः

---

दिष्टदिशा मार्गेण पथा नगरात् पुरात् बहिः वाह्ये चौमं दुकूलं तद्वत् अवदातं शुभ्रं यत् सैकतं सिकतामयं तस्मिन्। यद्वा चौमवसनवत् अवदातं शुभ्रं सैकतं पुलिनं यत्र तथाभूते। गङ्गायाः तरङ्गः वीचिः तत्सम्बन्धी पवनः तस्य पातः सञ्चारः तेन शीतलं शैत्यं तस्मिन् तथोक्ते। कस्यचित् एकस्य अतिमहतः अतिविशालस्य रोहिण-द्रुमस्य वटपादपस्य "वटश्चस्तु रोहिणः" इति वैजयन्ती। तस्य मूले द्विरदात् करिणः अवततार अवरुरोह।

(१७) प्रथमेति। प्रथमसमवतीर्णेन कुमारराजवाहनस्य अग्रतः भूमिप्राप्तेन अपहारवर्म्मणा स्वस्य हस्तौ ताभ्यां सत्वरं त्वरितं समीकृते कृतसमतले वन्रभाव-मपनीयसमतलचेते इत्यर्थः, अतएव मातङ्गे वरिष्ठे इव तद्वत् सुखोपविष्टत्वादित्यर्थः, भागिरथीपुलिनमण्डले गङ्गायाः सैकतभूमिप्रदेशे सुखं यथा तथा निषसाद उपविवेश। तथा तद्वत् निषण्णम् उपविष्टं तं कुमारं राजवाहनम् उपहारवर्म्मादिभिः षड्भिः कुमार-समूहैः मैथिलेन मिथिलाधिपेन प्रहारवर्म्मणा कामपालेन सिंहवर्म्मणा सह धनमित्रः धनमित्रसमूहान्तर्वर्त्ती काशीपतिमिथिलोऽङ्गराजस्त्रिभिः प्रहारवर्म्मकामपालसिंहवर्म्मभिः इति कवीन्द्राचार्य्यपादाः। उपागत्य समेत्य धनमित्रः प्रणिपपात नमश्चकार। देवोऽपि राजवाहनोऽपि हर्षेण आह्लादेन आविष्टं तत् यथा तथा अभ्युत्थितः सन् कथं समस्तः सर्वः एष मित्रगणः सुहृत्समूहः समागतः समुपस्थितः अयं को नाम इति अत्याश्चर्य्यो अभ्युदयः समृद्धिः भाग्योदयः इत्यर्थः, इति एवम् उक्त्वा कृतयथोपचारान् कृताः विहिताः यथायोग्याः उपचाराः सम्माननाः यैः तान्। निर्भरतरम् अत्यन्तगाढ़तरं परिरेभे आलिलिङ्ग। काशीपतिमैथिलाङ्गराजांस्तु सुहृन्निवेदितान् सुहृद्भिः उपहारवर्म्मप्रभृतिभिः निवेदितान् विज्ञापितान् पितृवत् जनकानिव अपश्यत् जनकवत् सम्मानं कृतवानित्यर्थः, तैः काशीराजादिभिः, हर्षेण आह्लादेन कम्पितं चलितं पलितं जराजनितं शौक्ल्यं केशसमूहं यत्र तत् यथा तथा सरभसोपगूढ़ः सवेगमालिङ्गितः परम्

परम् अभिननन्द। ततः प्रवृत्तासु प्रीतिसङ्कथासु प्रियवयस्यगणानुयुक्तः स्वस्य च सोमदत्तपुष्पोद्भवयोश्चरितम् अनुवर्ण्य सुहृदामपि वृत्तान्तं क्रमेण श्रोतुं कृतप्रस्तावः तांश्च तदुक्तावन्वयुङ्क्त। तेषु प्रथमं प्राह स्म किल अपहारवर्मा—(१७)

इति दशकुमारचरिते, राजवाहनचरितं नाम

प्रथम उच्छ्वासः।

---

अतिशयम् अभिननन्द हर्षमवापेत्यर्थः, ततः अनन्तरं प्रीतिसंकथासु प्रीतेः आनन्दस्य संकथा अन्योऽन्योक्तिः विस्रब्धवार्त्तेत्यर्थः, तासु। प्रवृत्तासु संरब्धासु सतसु प्रियवयस्यानां प्रियसुहृदां गणाः समूहाः तैः अनुयुक्तः उपरुद्धः स्वस्य आत्मनः सोमदत्तपुष्पोद्भवयोश्च चरितमाचरणम् अनुवर्ण्य सम्यक् विहत्य सुहृदां मित्राणामपि वृत्तान्तमुदन्तं चरितमित्यर्थः, क्रमेण पर्य्यायेण श्रोतुं कृतप्रस्तावः कृतोपक्रमः तान् बन्धून् तदुक्तौ सुहृद्वृत्तान्तौ स्वस्वचरिताख्याने अन्वयुङ्क्त योजितवान्। तेषु मित्रेषु मध्ये अपहारवर्म्मा प्रथमं, किल वार्त्तायां। प्राहस्म अब्रवीत्।

—:०:—

## अथ द्वितीयोच्छ्वासः ।



### अपहारवर्मचरितम् ।

'देव! त्वयि तद्वत्तोर्वे द्विजोपकाराय असुरविवरं तदन्वेषणप्रसृते च मित्रगणे अहम् अपि महीमटन् 'अङ्गेषु गङ्गातटे बहिश्चम्पायाः कश्चित् अस्ति तपःप्रभावोत्पन्नदिव्य-चक्षुर्मरीचिर्नाम महर्षिः' इति कुतश्चित् संलपतो जनसमाजात् उपलभ्य अमुतो बुभुत्सुस्त्वद्गतिं तम् उद्देशम् अगमम्। न्यशा-मयञ्च तस्मिन् आश्रमे कस्यचित् चूतपोतकस्य छायायां कमपि उद्विग्नवर्णं तापसम्। अमुना च अतिथिवत् उपचरितः क्षणं विश्रान्तः 'क्वासौ भगवान् मरीचिः, तस्मात् अहम् उपलिप्सुः प्रसङ्गप्रोषितस्य सुहृदो गतिं, आश्चर्यज्ञानविभवो हि स महर्षिः मह्यां विश्रुतः' इति अवादिषम्। (१) अथ

---

(१) देवेति। द्वितीयोच्छ्वासोपक्रमे यदाह्वय तत्रभवान् शिवरामः। राजवाहनः कदाचित् पितरमामन्त्र्य सुहृद्भिः सह विन्ध्ये अटन् शिवालयमद्राक्षीत्। तत्रत्यादेव विवरान्निर्गत्य शिवार्चनं कुर्वन्तीं नमुचिकन्यां प्रेक्ष्य कामपीडयातिक्लशं द्विजं तत्रापश्यत्। यिश्रामनिषात् ससुहृत् तत्र स्थितः। क्वचित् प्रयाते मित्रगणे द्विजेन स्ववृत्तान्तः अस्मै निवेदितः। अथ रात्रौ सुहृद्गणः सः द्विजश्च तत्रैव सुष्वाप। अथार्ध-रात्रे निर्गतां तामीश्वमर्चयित्वा यान्तीं तत् द्वारि द्विजोपकाराय देवालयबिलं गतमात्मानं मित्रबोधाय विलिख्यानुययौ। तत्र स्वर्णपुरे कन्याशतवृतां तां पर्यङ्कस्थां 'का त्वम्' इत्यादन्वयुङ्क्त राजवाहनः। 'देव, विष्णुना नमुचौ सालोक्यं नीते मां समाश्वास्य इदमभिहितम्—'योऽत्र ज्वलनकुण्डे प्रवेक्ष्यति स ते भर्ता' इत्यनुजगाद सा। ततो द्विजेन् ज्वलनकुण्डे प्रविश्य सोढा। तद्वत्तश्च राजवाहनः क्षुत्पिपासाहरं मणिमादाय ददर्शयौ। मित्रगणस्तु प्रातस्तं तत्रानुपलभ्य तदन्वेषणाय दिक्षु प्रतस्थे। राजवाहनोऽपि

असौ उष्णमायतञ्च निश्वस्य अशंसत्—'आसीत् तादृशो मुनिः अस्मिन्नाश्रमे । तस्मिन्नेकदा काममञ्जरी नाम अङ्गपुर्य्यवतंसस्थानीया वारयुवतिः अश्रुविन्दुतारकितपयोधरा सनिर्वेदमभेत्य कीर्णशिखण्डास्तीर्णभूमिः अभ्यवन्दिष्ट । तस्मिन्नेव च क्षणे मातृप्रमुखः तदाप्तवर्गः सानुक्रोशम् अनुप्रधावितस्तत्रैव अविच्छिन्नपातम् अपतत् । स किल कृपालुस्तं जनमार्द्रया गिरा आश्वास्य आर्त्तिकारणं तां गणिकाम् अपृच्छत् । सा तु सव्रीड़ेव सविषादेव सगौरवेव च अब्रवीत् ।—(२) 'भगवन् !

---

भिक्षाखनुपलभ्य स्वेच्छया महीं विचचारेति प्रसङ्गः । देव हे राजन् यर्हि भवति तदा तस्मिन् काले द्विजोपकाराय ब्राह्मणोपकारार्थम् असुरविवरं पातालं "सुषिरं विवरं बिलम्" इत्यमरः । अवतीर्णे प्रविष्टे त्वदन्वेषणप्रवृत्ते तव अन्वेषणाय प्रवृत्ते परितः सर्वतः मित्रगणे सुहृद्वर्गे अहमपि महीं भुवम् अटन् भ्रमन् अङ्गेषु अङ्गराज्येषु चम्पायाः चम्पानामनगर्य्याः बहिः बाह्ये गङ्गातटे गङ्गायास्तीरे तपःप्रभावेण तपश्चर्य्यया उत्पन्ने उद्भूते दिव्ये अलौकिके भूतादिकालदृष्टियुक्ते इत्यर्थः, चक्षुषी यस्य स तथोक्तः । मरीचिः नाम्ना तदीति कश्चित् कोऽपि महर्षिः तापसः अस्ति विद्यते, इति कथा समाप्ती । कुतश्चित् कस्मादपि जनसमाजात् लोकप्रमुखात् संलपतः अन्योऽन्यमाभाषतः उपलभ्य ज्ञात्वा असुतः महर्षेः त्वद्गतिं तवोद्देशं बुभुत्सुः बुभुत्सुः तं महर्षिम् उद्देशम् अनुसन्धानम् अगमम् अव्रजम् गतवानित्यर्थः । तस्मिन् आश्रमे मुनेरावासस्थले कस्यचित् एकस्य चूतपोतकस्य आम्रतरोः छायायाम् अनातपे उद्विग्नः भ्रान्तमानसः तस्य वर्णः कान्तिः स इव कान्तिर्यस्य स तथोक्तः । "उद्विग्नः भ्रान्तमानसः" इति वैजयन्ती । तापसं मुनिं व्यशामयम् अपश्यम् । असुना मुनिना अतिथिवत् अभ्यागत इव अहम् उपचरितः सत्कृतः क्षणम् अल्पस्वकालं विश्रान्तः विश्रामं कृत्वेत्यर्थः, तस्मात् मरीचेः उपलिप्सुः उपलब्धुमिच्छुः क्व कुत्र असौ भगवान् मरीचिः ? प्रसङ्गप्रोषितस्य केनापि हेतुना देशान्तरगतस्य "प्रसङ्गः कारणं हेतुः" इति वैजयन्ती । सुहृदः मित्रस्य गतिम् अवस्थानं हि यतः स महर्षिः मरीचिः आश्चर्य्यः अलौकिकः विस्मयकरः इत्यर्थः, ज्ञानस्य विभवः सामर्थ्यं यस्य स तथोक्तः । मह्यां भुवि विश्रुतः प्रसिद्धः इति एवम् अवादिषम् उक्तवान् ।

(२) असौति । अथ इतः परम्, असौ अपगतकान्तिः तापसः उष्णमायतं सुदीर्घं यथा

ऐहिकस्य सुखस्य अभाजनं जनोऽयम्; आमुष्मिकाय श्रेयसीयाय आर्त्ताभ्युपपत्तिवित्तयोः भगवत्पादयोर्मूलं शरणमभिप्रपन्नः' इति। तस्यास्तु जननी उदञ्जलिः पलितशार-शिखण्डबन्धस्पृष्टमुक्तभूमिः अभाषत—'भगवन्! अस्या मे दोषम् एषा वो दासो विज्ञापयति, दोषश्च मम स्वाधिकारानु-ष्ठापनम्'। (३) एष हि गणिकामातुरधिकारः, यद् 'दुहितु-

तथेत्यर्थः, निम्नस्य वहिर्मुखयानं परित्यज्येत्यर्थः, अशंसत अवर्णयत्। अस्मिन्नाश्रमे अत्र तापसावासे तादृशः भवद्वर्णनानुरूपः मुनिः तापसः आसीत् अभूत्। एकदा कस्मिंश्चित् समये अङ्गपुर्य्यवतंसस्थानीया अङ्गानाम् अङ्गदेशीयानां पुरी तस्याः अवतंस-स्थानीया शिरोभूषणस्वरूपा अश्रुविन्दुभिः तारकितौ पयोधरौ यस्याः सा तथोक्ता। मौक्तिकहारालङ्कृतौ पयोधराविन्यर्थः। कानमञ्जरीनाम नाम्ना काममञ्जरी वारयुवतिः वेश्या सनिर्वेदं सर्वतोपेक्षासहितम् अभ्येत्य आगत्य कीर्णः इतस्ततः पातितः विक्षिप्त इत्यर्थः, यः शिखण्डः केशपाशः तेनास्तीर्णा आच्छादिता कृतास्तरणेत्यर्थः, भूमिः यया तथाभूता भूपतिता सती तं मुनिम् अभ्यवन्दिष्ट प्रणनाम। तस्मिन्नेव च क्षणे तत्काले मातृप्रमुखः मात्रादिः माधवसेनादिरित्यर्थः। तस्याः वारनार्याः आप्तवर्गः परिजनवृन्दः सानुक्रोशं सकृपम् अनुधावितः पश्चादागतः तत्रैव तापसान्तिके एव अविच्छिन्नपातम् निरतसम्पातम् एकादिपर्य्यायेणेति तात्पर्य्यम्। अपतत् उपतस्थे भूमावलुण्ठदित्यर्थः। सः महर्षिः कृपालुः दयाप्रवणः किल वार्त्तायाम्। "वार्त्तायामरुचौ किल" इति विकाण्डशेषः। तं जनं तदात्मीयसमूहम् आर्द्रया स्निग्धया गिरा वाचा आश्वास्य प्रबोध्येत्यर्थः। आर्त्तिकारणं पीड़ाहेतुं तां गणिकां वेश्यां काममञ्जरीमित्यर्थः। अपृ-च्छत् जिज्ञासयामास। सा वारवनिता तु एव "तु स्याद्भेदेऽवधारणे" इत्यमरः। सव्रीड़ेव लज्जया सहेव लज्जामभिनीय किन्तु न तात्त्विकी लज्जा इत्यर्थः। सविषादेव सदुःखितेव दुःखमभिनयन्तीव किन्तु न वास्तवं दुःखमित्यर्थः। स गौरवा इव मुनेरा-वर्ज्जनस्य स्वसुकरत्वज्ञानात् स गौरवत्वमित्यर्थः। अब्रवीत् अवोचत्।

(३) भगवन्निति। भगवन् हे महाभाग, अयं समीपतरः जनः ऐहिकस्य इहकाल-सेव्यमानस्य सुखस्य अभाजनम् अपात्रम् आमुष्मिकाय पारलौकिकाय श्रेयसीयाय स्वश्रेय-साय "श्वःश्रेयस स्यात् कल्याणं श्रेयसीयं शिवं शुभम्" इति हलायुधः। आर्त्तानां

जन्मनः प्रभृत्येवाङ्गक्रिया, तेजोबलवर्णमेधासंवर्धनेन दोषाग्नि-धातुसाम्यकृता मितेनाहारेण शरीरपोषणम्, आपञ्चवर्षात् पितुरपि अनतिदर्शनम्, जन्मदिने पुण्यदिने च उत्सवोत्तरो मङ्गलविधिः, अध्यापनम् अनङ्गविद्यानां साङ्गानाम्, नृत्यगीत-वाद्यनाट्यचित्रास्वाद्यगन्धपुष्पकलासु लिपिज्ञानवचनकौशला-दिषु च सम्यग्विनयनम्, शब्दहेतुसमयविद्यासु वार्त्तामात्राव-बोधनम्, आजीवज्ञाने, क्रीड़ाकौशले, सजीवनिर्जीवासु च द्यूतकलासु अभ्यन्तरीकरणम् अभ्यन्तरकलासु वैश्वासिकजनात् प्रयत्नेन प्रयोगग्रहणम्, (४) यात्रोत्सवादिषु आदरप्रसाधितायाः

---

पीड़ितानां विपन्नानामिति यावत्, शरणागतानामित्यर्थः, अभ्युपपत्तिरनुग्रहः तत्र वितथोः ख्यातयोः भवतः पादयोः चरणयोः मूलं पादसमीपदेशमित्यर्थः। शरणं रक्षणम् अभिप्रपन्नः प्राप्तः भवच्चरणे शरणं लब्धुमिच्छुरित्यर्थः। तु परन्तु तस्याः कामसञ्ज्ञायाः जननी माता उदञ्जलिः बद्धाञ्जलिः पलितेन जरसा शारः कर्बुरः शुक्लकृष्णमिश्रितवर्णः केशकलाप इत्यर्थः, यः शिखण्डबन्धः कुन्तलकलापबन्धनं तेन आदौ स्पृष्टा पश्चात् भूमिर्यया सा तथोक्ता, भालस्थलभूतलगतया नमःकृत्वेति भावः, अभाषत अवदत्। भगवन् हे षड़ैश्वर्यसम्पन्न महर्षे, तस्याः समीपतराशाः मे मम दोषं दूषणम् एषा पुरोवर्त्तिनी वः युष्माकं गौरवाद्बहुवचनम्। दासी सेविका मद्दुहितेत्यर्थः; विज्ञापयति कथयति मम दोषं दूषणं स्वस्य वेश्यायाः यः अधिकारः कर्त्तव्याचारः तस्य अनुष्ठापनम् अनुष्ठानकारणम्।

(४) एष इति। हि निश्चितम् एषः, गणिकामातुः वेश्याजनन्याः, अधिकारः स्वामित्वं यत् यत् कार्य्यमित्यर्थः, दुहितुः सुतायाः जन्मनः जन्मप्रभृति 'कार्त्तिक्याः प्रभृति' इति भाष्यप्रयोगात् पञ्चमी। अङ्गक्रिया देहसंस्कारविशेषः, अथवा हरिद्रातैलादि मर्द्दनरूपम् तथाहि वात्स्यायने—"अङ्गक्रिया यदङ्गेषु हरिद्रातैलमर्द्दनम्" इति। तेजः प्रभावः बलं सामर्थ्यं वर्णः रूपं श्यामत्वादिः मेधा धारणाधीः तेषां सम्वर्द्धनं पोषणं तेन दोषाः वातपित्तकफाः अग्निः जाठरः धातवः वसासृगादयः तेषां साम्यकृता समभावेन नीता मितेन परिमितेन नात्यधिकेन नात्यल्पेनेत्यर्थः, आहारेण भक्षणेन शरीरपोषणं देहविवर्द्धनम् आपञ्चमात् पञ्चमवर्षादारभ्य 'आङ् मर्य्यादाभिविध्योः' इति पञ्चमी। पितुर्जनकस्यापि अनतिदर्शनमत्यन्तदर्शनाभावः प्रायसः पितृदर्शनविरहतया

स्फीतपरिबर्हाया: प्रकाशनम्, प्रसङ्गवत्यां सङ्गीतादिक्रियायां पूर्वसंगृहीतैर्गोष्ठीवाग्भिः सिद्धिलम्भनम्, दिङ्मुखेषु तत्तच्छिल्पवित्तकैः यशःप्रख्यापनम्, कार्त्तान्तिकादिभिः, कल्याणलक्षणोद्घोषणम्, पीठमर्दविटविदूषकैः भिक्षुक्यादिभिश्च नागरिकपुरुषसमवायेषु रूपशीलशिल्पसौन्दर्यमाधुर्यप्रस्तावना, युवजनमनोरथलक्ष्यभूतायाः प्रभूततमेन शुल्केन व्यवस्थापनम्, स्वतो रागान्धाय तद्भावदर्शनोन्मादिताय वा, जातिरूपवयोऽर्थ-

---

लज्जाभयाद्यभावप्रकटनार्थमिति तात्पर्यम्। जन्मदिने उत्पत्तिवासरे पुण्यदिने संक्रमणग्रहणादौ उत्सवोत्सवः उत्सवमुख्यः गीतवाद्यादिविशेषानन्दजनकव्यापारः इत्यर्थः, प्रायेण गीतवाद्यादेरनुष्ठानात् तं प्रत्यस्याः आसक्तिः स्फुटिता। मङ्गलविधिः हितसाधनप्रकारः अध्यापनं पाठनम् अनङ्गविद्यानां वात्स्यायनप्रणीतकामसूत्रादीनां साङ्गानाम् अङ्गसहितानां येन वात्स्यायनशास्त्रं परिपुष्टं तत् कामशास्त्राध्यापनं तस्याध्ययनमिति निर्गलितार्थः। नृत्यम् अङ्गविक्षेपणादिव्यापारः तथा च दशरूपके—"पादविक्षेपमात्रेण सर्वाभिनयवर्जितम्। आङ्गिकोक्तप्रमाणेन नृत्यं नृत्यविदो विदुः॥" इति। गीतं गानं वाद्यं वादित्रं नाट्यं रूपकमभिनयाकृति यावत्, चित्रम् आलेख्यरचनाविधानम् आस्वाद्यानि आस्वादनीयानि द्रव्याणि मिष्टान्नादीनीत्यर्थः। गन्धाः घृष्टचन्दनादि यथाहि शुद्धितत्त्वे—"घृष्टो मलयजो गन्धः" इति। पुष्पाणि तेषां कलाः तत्तद्विरचनघटिताः विद्याः तासु। लिपिज्ञानम् अक्षरसंस्थानप्रणाली वचनकौशलं वाग्विन्यासविधिः तौ आदिर्येषां तेषु सम्यक् साकल्येन विनयनं शिक्षणम्। शब्दः व्याकरणं, हेतुः तर्कशास्त्रं, समयविद्या समयज्ञानप्रबोधिनी विद्या ज्योतिःशास्त्रमित्यर्थः, तासु, वार्त्तामात्रावबोधनं वृत्तान्तमात्रज्ञापनं 'वार्त्ता वार्त्तावबोधन'मिति पाठे सारासारावबोधनमित्यर्थः। "वार्त्ता फल्गुन्यसारेऽपि' इति कोषः। आजीवज्ञाने जीवनोपाये "आजीवो जीविका वार्त्ता" इत्यमरः। ससीयं जीविकेति ज्ञाने इत्यर्थः। क्रीडाकौशले लीलाभाषणनैपुण्ये "क्रीडा लीला च नर्म च" इत्यमरः। सजीवनिर्जीवासु जीवाः प्राणिनः तैः सहितासु यथा कुक्कुटाजादीनां युद्धम्। निर्जीवाः प्राणरहिताः तासु तादृशीषु यथा अक्षक्रीडादि। द्यूतकलासु देवनविद्यासु अभ्यन्तरीकरणं प्रकृष्टरूपेण बोधनम्। अभ्यन्तरकलासु रतसमयक्रियमाणेषु किमपि विज्ञानेषु. यथाहि वात्स्यायनः—

शक्तिशौचत्यागदाक्ष्यदाक्षिण्यशिल्पशीलमाधुर्य्योपपन्नाय कृतन्त्वाय प्रदानम्, (५) अधिकगुणाय अस्वतन्त्राय, प्राप्तमधि अल्पेनापि बहुव्यपदेशेन अर्पणम् अस्वतन्त्रेण वा गान्धर्वसमागमेन तद्गुरुभ्यः शुल्कापहरणम्, अलाभेऽर्थस्य कामम् अस्वीकृते स्वामिन्यधिकरणे च साधनम्, रक्तस्य दुहितैकचारिणीव्रतानुष्ठापनम्, नित्यनैमित्तिकप्रीतिदायकतया हृतशिष्टानां गम्यधनानां चित्रैः उपायैः अपहरणम् अददता

---

"साभ्यन्तरकला यत्तु पृष्ठाङ्गस्पर्शनं रतौ" इति। वैश्वासिकजनात् अतिविश्वस्तभाजनात् प्रयत्नेन अतिशयितचेष्टया प्रयोगग्रहणं प्रयोगः कर्त्तव्यता तस्याः ग्रहणम् आदानम्। आदरातिशयेन रतिकार्य्यशिक्षणमित्यर्थः ।

(५) यात्रेति। यात्रोत्सवादिषु यात्रा लोकयात्रा उत्सवः निरताह्लादजनकव्यापारः तौ आदिर्येषां तेषु आदरप्रसाधितायाः सादरमलङ्कृतायाः स्फीतपरिवर्हायाः स्फीताः समृद्धाः परिवर्हाः परिच्छदाः यस्याः सा तथोक्तायाः। प्रकाशनं स्फुरणम्। प्रसङ्गः सुरतं तदर्थं गूढ़कार्य्यविशेषप्रयोजनायामित्यर्थः, प्रेक्षणार्थनृत्यगीतवाद्यं संगीतं तदादिक्रियायां व्यापारे। पूर्व्वसंगृहीतैः प्रागायत्तीकृतैः ग्राह्यवाग्भिः ग्राह्या ग्रहणीया वाक् वचः येषां तैः शिक्षकैरित्यर्थः। सिद्धिलम्भनं कार्य्यसिद्धिप्रापणम्। दिङ्मुखेषु दिगन्तरालेषु तत्तच्छिल्पवित्तकैः तत्तच्छिल्पकलाभिज्ञैः साङ्गीतिकमौरजिकादिभिरित्यर्थः। यशःप्रज्ञापणं कीर्त्तिप्रसारणम्। कार्तान्तिकादिभिः कृतान्तः मृत्युः तं जानन्तीति णिक्; कार्तान्तिकाः लक्षणज्ञाः ते आदिर्येषां ताभिः। कल्याणलक्षणस्य शुभचिह्नस्य उद्दीपणं ख्यापनम्। चरमुखेनास्याः शुभलक्षणानि प्रकटीकृत्यास्याः परिग्रहे सातन्त्र्यकथामुख्यं घटिष्यतीत्येवं रूपमित्याशयः। पीठमर्द्दः नायकसहायः नायकतुल्यगुणोपेतः तदुक्तं दर्पणे—"दूरानुवर्त्तिनि स्यात्तस्य प्रासङ्गिकेति वृत्ते तु। किञ्चित्तद्गुणहीनः सहाय एवास्य पीठमर्द्दाख्यः" इति। कुपितस्त्रीप्रसाधकः इत्यन्ये। विटविदूषकौ शृङ्गारसहायविशेषौ यदुक्तं तत्रैव "शृङ्गारस्य सहाया विटचेटविदूषकाद्याः स्युः। भक्ता नर्म्मसु निपुणाः कुपितवधूमानभञ्जनाः शुद्धाः। सम्भोगहीनसम्पत विटस्तु धूर्त्तः कलैकदेशज्ञः। वशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठ्याम॥ कुसुमवसन्ताद्यभिधः कर्म्मवपुर्वेशभाषाद्यैः हास्यकरः कलहरतिर्विदूषकः स्यात् सकर्म्मज्ञः॥"

लुब्धप्रायेण च विश्वासनम्, प्रतिहस्तिप्रोत्साहनेन लुब्धस्य रागिणः त्यागशक्तिसन्धुक्षणम्, असारस्य वाक्सन्तक्षणैः लोकोपक्रोशनैः दुहितृनिरोधनैः व्रीडोत्पादनैः अन्याभियोगैः अवमानैश्च अपवाहनम्, अर्थदैः अनर्थप्रतिघातिभिः च अनिन्द्यैः इभ्यैः [अन्यैः] अनुबद्धार्थान् अर्थसंशयान् विचार्य्य भूयो भूयः संयोजनम्' इति (६)। गणिकायाश्च गम्यं प्रति

---

इति। रसरत्नाकरे च—"अङ्गादिवैशवेषाद्यैर्हास्यकारी विदूषकः।" इति। तैः तथोक्तैः। भिक्षुकी श्रमणा सा आदिर्येषां ताभिः। नागरिकाः नगरवासिजनाः तेषां समवायेषु समूहेषु। रूपं निराभरणेनापि भूषणवत् सौन्दर्यम् तदुक्तं—"अङ्गान्य-भूषितान्येव केनचिद्भूषणादिना। येन भूषितवद्भान्ति तद्रूपमिति कथ्यते॥" इति। शीलं सुशीलता शिल्पं कलादिकं कर्म्म सौन्दर्यं तल्लक्षणं यथा—"अङ्गप्रत्यङ्गकानां यः सन्निवेशोयथोचितम्। सुश्लिष्टः सन्धिबन्धः स्यात् तत् सौन्दर्यमुदाहृतम्॥" इति। माधुर्यं लावण्यं "रूपं किमप्यनिर्व्वाच्यं तनोर्म्माधुर्य्यमुच्यते।" इत्युज्ज्वलनीलमणिः। तेषां प्रस्तावेन प्रसङ्गः। युवजनानां तरुणानां मनोरथः अभिलाषः तस्य लक्षभूता दर्शनीया तथाभूतायाः। प्रभूततमेन प्रचुरेण शुल्केन मूल्येन अवस्थापनं स्थिति-रित्यर्थः, तरुणजनस्येत्याशयः। स्वतः स्वभावतः रागः अनुरागः तेन अन्धः परतन्त्रः तस्मै तथोक्ताय। तस्या वेश्यायाः भावः लीला तस्य दर्शनं तेन उन्मादिताय उन्मत्ती-कृताय। जातिः गोत्रं ब्राह्मणत्वादिः रूपं सौन्दर्यं वयः तारुण्यादिः अर्थः धनं शक्तिः सामर्थ्यं शौचं शुद्धता त्यागः परिहारः दात्यं पटुता दाक्षिण्यं परिचितपरित्यागाक्षमत्वं शिल्पं कलाविज्ञानाभिज्ञत्वमित्यर्थः, शीलं चारित्रं माधुर्य्यं मधुरता तैः उपपन्नाय युक्ताय स्वतन्त्राय स्वाधीनाय प्रदानम् अर्पणं रतिमञ्जर्य्याः इति शेषः।

(६) अधिकेति। अधिकगुणाय अत्यन्तगुणयुताय अस्वतन्त्राय स्वाधीनतापरिहीनाय पराधीनायेत्यर्थः। प्राज्ञतमाय विद्वद्वरिष्ठाय अल्पेनापि अत्यल्पधनेनापीत्यर्थः। बहु-व्यपदेशेन प्रचुरप्रत्याशासम्भावनया अस्वतन्त्रेण, अस्वाधीनतया गान्धर्वसमागमेन गान्धर्वविवाहेनेत्यर्थः। तद्गुरुभ्यः तस्य तरुणजनस्य परिजनेभ्यः। शुल्कापहरणं पणग्रहणम्। अलाभे अप्राप्ते अर्थस्य धनस्य कामं पर्य्याप्तम् अस्वीकृते अनस्वीकृते इत्यर्थः, स्वामिनि अधिकारिणि प्रभौ इत्यर्थः, अधिकरणे धर्म्माधिकरणे साधन

सज्जतैव न सङ्गः सत्यामपि प्रीतौ न मातुर्मातृकाया वा वासनातिवृत्तिः। एवं स्थिते अनया प्रजापतिविहितं स्वधर्मम् उल्लङ्घ्य, क्वचित् आगन्तुके रूपमात्रधने विप्रयूनि स्वेनैव धनव्ययेन रममाणया मासमात्रमत्यवाहि। गम्यजनस्य भूयानर्थयोग्यः प्रत्याचक्षमाणयाऽनया प्रकोपितः स्वकुटुम्बकश्च अवसादितम्। 'एषा कुमतिर्न कल्याणी' इति निवारयन्त्यां

---

धनार्थमभियोगकारणम्। रक्तस्य अनुरक्तस्य आसक्तियुक्तस्येत्यर्थः। दुहिता कन्या तस्याः एकचारिणीव्रतम् एकनायकनिष्ठनियमः पातिव्रत्यमित्यर्थः, तस्य अनुष्ठापनम् परिपालनमित्यर्थः, नित्या प्रतिदिनदेया, वर्त्तनादिरूपेण प्रतिमासं व्यवस्थापिता वा, नैमित्तिकी निमित्तकारणोद्भूता यथोत्सवादिव्यापारजन्या या प्रीतिः आनन्दोत्पादकवस्तुप्रदानरूपा तस्याः दायकतया दातृत्वेन हृतशिष्टानां गृहीतावशिष्टानाम्। गम्याः पाल्लविकाः लम्पटा इत्यर्थः, तेषां धनानाम्। "गम्यो विटः पाल्लविकः" इति भागुरिः। चित्रैः नानाप्रकारैः अपहरणम् आयत्तीकरणं शिष्टजनधनस्येति शेषः। लुब्धप्रायेण प्रायशो धूर्त्तेनेत्यर्थः, अददत अर्पयता धनमिति शेषः। विग्रहस्य विरोधस्य आसनं, चेपणम् सुष्ठु तत्सन्निधौ न गमनमित्यर्थः। प्रतिहस्तिनः प्रतिवासिनः तेषां प्रोत्साहनम् उद्दीपनम् तैः तथोक्तैः। प्रतिहस्तग्रामन्नेत्रापतिरित्याचार्य्यपादाः। "प्रतिहस्तौ प्रतिवेश्म" इति वैजयन्ती। लुब्धस्य कृपणस्य रागिणः अनुरागयुक्तस्य। त्यागः परिहारः तस्य सन्धुक्षणम् औज्ज्वल्यजननम्। असारस्य साररहितस्य धनशून्यस्येत्यर्थः, वाक्सन्तक्षणैः वाचां वाक्यानां सन्तक्षणं छेदनं पीड़नमित्यर्थः, तैः तथोक्तैः। वाङ्मात्रेण तस्य प्रतिवादेन विभज्य वचनतिरस्कारैरिति भावः। लोकेषु लोकसमाजेषु उपक्रोशनं गर्हणं तैः तथोक्तैः। दुहितुः कन्यायाः निरोधनं तस्याः समीपे गमनप्रतिशेधं तैः। व्रीडोत्पादनैः लज्जासंजननैः। अन्याभियोगैः अपराभियोगैः राजपुरुषायाख्यापनोपायनिबन्धनैरिति भावः। अवमानैः तिरस्कारादिभिरित्यर्थः। अपवाहनं दूरीकरणम् अर्थदैः धनत्यागिभिः अनर्थप्रतिघातिभिरुपद्रवनिवर्त्तकैः। अनिन्द्यैः कुत्सायुक्तैः शिष्टजनाचरितैरित्यर्थः। इभ्यैः धनाढ्यैः "इभ्य आढ्यो धनी" इत्यमरः। अनुबद्धार्थान् अनुबद्धः संमिलितः अर्थः येषां, तान् तथोक्तान्। अर्थसंशयान् अर्थस्य संशयः सन्देहः तान्। अर्थस्य संशयो येभ्यः सन्देहोऽभिवर्त्तते तानित्याशयः। विचार्य्य निर्णीय पुनः संयोजनं प्रत्यर्पणम्, वेश्यायाः इति शेषः।

मयि, वनवासाय कोपात् प्रस्थिता। सा चेत् इयम् अहार्य्य-निश्चया, सर्वं एष जनोऽत्रैव अनन्यगतिः अनशनेन संस्थास्यते' इति अरोदीत् (७)।

अथ सा वारयुवतिः तेन तापसेन, 'भद्रे! ननु दुःखाकरोऽयं वनवासः, तस्य फलम् अपवर्गः स्वर्गो वा। प्रथमस्तु तयोः प्रकृष्टज्ञानसाध्यः प्रायो दुःसम्पाद एव, द्वितीयस्तु, सर्वस्यैव सुलभः कुलधर्मानुष्ठायिनः, तदयमसद्ग्रहस्त्वादुपरम्य मातुर्मते वर्त्तस्व' इति सानुकम्पम् अभिहिता, 'यदीह भगवत्-

---

(७) गणिकेति। गणिकायाः वेश्यायाः गम्यं गमनयोग्यं प्रति सञ्जाता परिच्छेदादिना सङ्गतिविपर्य्ययेव न सङ्गः सङ्गमः सहवास इत्यर्थः। प्रीतौ अनुरागे सत्यामपि मातुर्जनन्याः मातृकायाः मातामह्याः "मातुर्माता तु मातृका" इति वैजन्ती। अथवा मातेवेति इवार्थे कन्। उपमातृकाया इत्यन्ये व्याख्यातारः। शासनातिवृत्तिः निर्देशत्यागः। एवं स्थिते सर्य्यादायाम् अनया काममञ्जर्य्या प्रजापतिविहितं धात्रा निरूपितं स्वधर्मम् उल्लङ्घ्य वेश्याजनोचितकार्य्यमतिक्रम्य क्वचित् कस्मिन्नपि आगन्तुके अतिथिवदस्थायिनि रूपमेव नान्यदित्यस्यार्थे मात्रच्, रूपमात्रं धनं सम्पत् यस्य तादृशे, विप्रयूनि ब्राह्मणतरुणे स्वेन आत्मनेव धनव्ययेन अर्थव्ययेन रममाणया विहरन्त्या माससार्द्धं माससार्द्धसंख्यकम् अत्यवाहि अतिक्रान्तम्। गम्यजनः विटजनः भूयान् प्रचुरः बहुसंख्यक इत्यर्थः, अर्थलोभ्यः धनप्रदानशक्तः। प्रत्याचक्षमाणया प्रत्याख्यानं विदधत्या अनया काममञ्जर्य्या प्रकोपितः क्रुद्धः स्वकुटुम्बकम् आत्मपरिजनः, दयायां कन्; अवसादितम् अवसन्नतां नीतम्। जीविकार्ज्जनं हि धनमूलत्वात् तदभावे जीविकानिर्वाहादिति भावः। एषा ईदृशी कुमतिः स्वधर्मत्यागरूपा बुद्धिः न कल्याणी शुभकरी निवारयन्त्यां बाधां जनयन्त्यां मयि वनवासाय वने निवसितुं कोपात् रोषात् प्रस्थिता बहिर्गता। सेयं पुरोवर्त्तिनी मद्दुहिता चेत् यदि, अहार्य्यनिश्चया हर्तुमशक्यः अहार्य्यः अहर्त्तव्य इत्यर्थः, निश्चयः दृढप्रतिज्ञा यस्याः सा तथोक्ता। तर्हि एषः समीपतरः अनन्यगतिः तदेकशरणः सर्वजनः परिवारवर्गः अत्रैव आश्रमे अनशनेन निराहारेण संस्थास्यते मरिष्यतीत्यर्थः। इति एवं प्रकारेण उक्त्वेति शेषः। अरोदीत् अक्रन्दीत्।

पादमूलम् अशरणं, शरणमस्तु मम कृपणाया हिरण्यरेता देव एव, इत्युदमनायत। स तु मुनिः अनुविमृश्य गणिकामातरम् अवदत्—'सम्प्रति गच्छ गृहान्, प्रतीक्षस्व कानिचिद्दिनानि, यावदियं सुकुमारी सुखोपभोगसमुचिता सती अरण्यवासव्यसनेन उद्वेजिता भूयोभूयश्च अस्माभिर्विबोध्यमाना, प्रकृतावेव स्थास्यति' इति। (८) 'तथा' इति तस्याः प्रतियाते

---

८। अथेति। तेन तापसेन मरीचिमहर्षिणा सा वारयुवतिः काममञ्जरी सानुकम्पं सादरम् इति अभिहिता कथिता ननु आमन्त्रणे, भद्रे हे कल्याणि, अयं वनवासः वनावस्थितिः दुःखाकरः दुःखोत्पादकः 'दुःखात्प्रातिलोम्ये' इति डाच्प्रत्ययः। तस्य वनवासस्य फलं परिणामः अपवर्गः मुक्तिः तथाच न्यायसूत्रम् "विविधदुःखात्यन्तनिवृत्तिरपवर्गः।" इति। स्वर्गः "यन्नदुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतञ्च तत् सुखं स्वः पदास्पदम्॥" इति। स च दुःखविरोधिसुखविशेषः। तयोः अपवर्गस्वर्गयोर्मध्ये प्रथमः आद्यः अपवर्ग इत्यर्थः, प्रकृष्टज्ञानसाध्यः प्रकृष्टम् अत्यतिशयं ज्ञानं ब्रह्मज्ञानमित्यर्थः, तेन साध्यः सम्पाद्यः। प्रायः बाहुल्येन अतएवेत्यर्थः दुःसम्पादः कृच्छ्रेण सम्पादयितुं शक्यः इत्यर्थः। द्वितीयः स्वर्गः कुलधर्म्मानुष्ठायिनः कुलस्य वंशक्रमागतस्य धर्म्मः तस्य अनुष्ठायिनः स्वकुलोचितकर्म्मकारिणः, तस्य धर्म्मस्य अशक्यारम्भात् असाध्यानुष्ठानात् तपस इत्यर्थः, उपरम्य निवृत्य मातुर्मते जनन्युपदेशितमार्गे वर्त्तस्व तन्मतमाचर इत्यर्थः। यदि यद्यपि इह अधुना भगवत्पादमूलं भगवतः चरणान्तं अशरणम् अनाश्रयः स्यादिति शेषः। तु अवधारणे "तु स्याद्भेदेऽवधारणे" इत्यमरः। हिरण्यरेता अनलो देवः कृपणयाः दीनायाः मम काममञ्जर्य्याः शरणं रक्षिता एव अस्तु, अनलप्रवेशं विधास्यामीत्याशयः। इति उक्त्वेति शेषः। उदमनायत उन्मना इवाचरत् 'कर्त्तुः क्यङ—' इति क्यङ्। स तु मुनिः मरीचिः अनुविमृश्य पश्चात् विविच्य गणिकामातरं काममञ्जर्य्याः जननीम् अवदत् अब्रवीत्। संप्रति अधुना गृहान् भवनं गच्छ याहि। 'गृहाः पुंसि च' इत्यमरानुशासनात् गृहशब्दः पुंसि बहुत्वे एव वर्त्तते इति। कानिचिद्दिनानि कति दिवसानि प्रतीक्षस्व अपेक्षां कुरु। सुखोपभोगसमुचिता सुखस्य उपभोगः व्यवहारः तेन समुचिता अन्विता इयं सुकुमारी अत्यन्तपेशला काममञ्जरीत्यर्थः। अरण्यवासव्यसनेन वनवासजन्यदुःखेन उद्वेजिता उत्पीड़िता, अस्माभिश्च भूयोभूयः पुनः पुनः

स्वजने, सा गणिका, तस्मिन् अलघुभक्तिर्धौतोद्गमनीयवासिनी न अत्याहृतशरीरसंस्कारा वनतरुपोतकालवालपूरणैः देवतार्चनकुसुमोच्चयावचयप्रयासैः नैकविकल्पोपहारकर्मभिः कामशासनार्थं च, गन्धमाल्यधूपदीपनृत्यगीतवाद्यादिभिः क्रियाभिः एकान्ते च, त्रिवर्गसम्बन्धिनीभिः कथाभिः अध्यात्मवादैश्च अनुरूपैः अल्पीयसैव कालेन अन्वरञ्जयत् (८)।

एकदा च रहसि रक्तं तम् उपलभ्य 'मूढः खलु लोको यत्सह धर्मेण अर्थकामावपि गणयति' इति किञ्चित् अस्मयत। 'कथय वत्स! केनांशेन अर्थकामातिशायी धर्मस्तवाभिप्रेतः'

---

विरुध्यमाना अनुरुध्यमाना, रुधः कर्म्मणि शानच्। सती प्रकृतौ स्वावस्थायां स्थास्यति अभिवर्त्तिष्यते।

(८) तथेति। तथा स्वीकारे, "तथा पृष्टोत्तरे वाक्ये समुच्चये विनिश्चये" इति मेदिनी। तस्याः गणिकायाः स्वजने आत्मीयवर्गे प्रतियाते प्रतिगते अलघुभक्तिः दृढाभक्तिरित्यर्थः। धौतं यत् उद्गमनीयम् उपस्थानयोग्यं तत् वसने परिधत्ते सा तद्वासिनी। न अत्याहृतः यत्नेन विहितः आदरित इत्यर्थः, शरीरसंस्कारः देहं प्रति यत्नः यया सा तथोक्ता। सा गणिका काममञ्जरी, वनतरूणां पोतकाः क्षुद्रावयवाः बालवृक्षाः इत्यर्थः, तेषाम् आलवालस् आवापः तस्य पूरणैः जलसेचनैः। देवतानाम् अर्चनं पूजा तदर्थं कुसुमानाम् उच्चयः संघः तस्य अवचयः ग्रहणं तत्र प्रयासाः श्रमाः तैः तथोक्तैः। नैकाः अनेकाः ये विकल्पाः भेदाः उपहाराः उपचाराः तेषां कर्मभिः, बलिकार्य्यानुष्ठानैरित्यर्थः। कामस्य मदनस्य शासनः शास्ता शिवः तदर्थं तत्पूजार्थे इत्यर्थः। यद्वा कामस्य शासनं चरितार्थम् उद्दीपनमित्यर्थः, तदर्थं। गन्धः चन्दनादिः, माल्यं स्रक् धूपः गन्धद्रव्यविशेषोत्थधूमः, दीपः प्रदीपः, नृत्यं तालमानाश्रयसविलासाङ्गविक्षेपः, गीतं गानं, वाद्यं वादित्रम् एते आदयः तैः तथोक्तैः। क्रियाभिः कार्य्यैः, एकान्ते निर्जने, त्रयाणां धर्मार्थकामानां वर्गः समूहः तत् सम्बन्धिनी तत् संक्रान्तः तैः तथोक्तैः कथाभिः वाक्यैः अध्यात्मवादैः आत्मानं परमात्मानमधिकृत्य ये वादाः तत्वबुभुत्सुकथाः तैः। अनुरूपैः योग्यैः अल्पीयसैव बाहुल्येन कालेन समयेन तम् ऋषिं मरीचिम् अन्वरञ्जयत् स्ववशमनयदित्यर्थः।

इति प्रेरिता मरीचिना लज्जामन्थरमारभताभिधातुम्—"इतः किल जनाद्भगवतः त्रिवर्गबलाबलज्ञानम्। अथ वा एतदपि प्रकारान्तरं दासजनानुग्रहस्य। भवतु श्रूयताम्। ननु धर्मादृतेऽर्थकामयोः अनुत्पत्तिरेव, तदनपेक्ष एव स धर्मो निवृत्ति[सु] सुखप्रसूतिहेतुः आत्मनः समाधानमात्रसाध्यश्च सोऽर्थकामवद्वाह्यसाधनेषु नात्यायतते। तत्त्वदर्शनोपबृंहितश्च यथाकथञ्चित् अप्यनुष्ठीयमानाभ्यां नार्थकामाभ्यां बाध्यते

---

(१०) एकदेति। एकदा कदाचित् रहसि एकान्ते रक्ताम् अनुरक्तां तम् ऋषिम् उपलक्ष्य लक्षीकृत्य मूढः ज्ञानहीनः खलु निश्चितं लोकः जनः, यत् यस्मात् धर्म्मेण सह अर्थकामौ अपि गणयति परमार्थेन गृह्णातीत्यर्थः। इति एवम् उक्तेति शेषः किञ्चिदीषत् अस्मयत जहास काममञ्जरीति शेषः। वासु हेबाले, धर्मः केनांशेन भागेन अर्थकामातिशायी अर्थकामौ अतिशेते अतिगुरुत्वेनाक्रम्य वर्त्तते इति। यथा तवाभिप्रेतः अभीष्टः इति कथय विशदीकुरु इत्यर्थः। मरीचिना मुनिना प्रेरिता जिज्ञासिता सती लज्जामन्थरं लज्जया मन्थरं मन्दं यथा तथा अभिधातुं भाषितुम् आरभत आरेभे। इतः ईदृशाज्जनात् मत्त इत्यर्थः, भगवतः सर्वज्ञानवतः भवादृशस्येत्यर्थः, त्रयाणां धर्मार्थकामानां वर्गः समूहः तस्य बलं सामर्थ्यम् अबलम् असामर्थ्यं तयोर्ज्ञानं विस्मयकारणमेतत् यन्मत्तः सर्वथा धर्मपरायणायाः धर्मपरायणस्य तव धर्मबलाबलज्ञानप्रश्नमिति भावः। अथवेति पक्षान्तरमाह एतदपि एतज्जिज्ञासनमपि दासजनानुग्रहस्य दासजने अनुग्रहः त्वयेति शेषः। प्रकारान्तरं प्रकारस्य अवस्थायाः अन्तरं भेदः। भवतु आस्तां तावदित्यर्थः, श्रूयतां यत् पृच्छसि तदाकर्ण्यतामित्यर्थः। ननु अवधारणे। धर्मादृते धर्ममन्तरेणेत्यर्थः, अर्थकामयोः अनुत्पत्तिः उद्भवः न भवत्येव तदनपेक्ष एव अर्थकामनिरपेक्ष एव सधर्मनिवृत्त्या उपरत्या संसारस्य व्यापारादित्यर्थः, यत् सुखं तस्य प्रसूतेः जननस्य हेतुः कारणम्। आत्मनः स्वस्य समाधानं समाधिः तन्मात्रेण साध्यः निष्पाद्यः। सधर्मः अर्थकामवत् बाह्यसाधनेषु बहिरुपायेषु सांसारिकव्यापाररूपोपायेष्वित्यर्थः। नात्यायतते नात्यन्तमधीनो भवतीत्यर्थः। तत्त्वदर्शनेन ब्रह्मज्ञानेन उपबृंहितः वर्द्धितः धर्मः अनुष्ठीय-

बाधितोऽपि च, अभ्यायासप्रतिसमाहितस्तमपि दोषं निर्हृत्य श्रेयसे अनल्पाय कल्पते । तथाहि, पितामहस्य तिलोत्तमाभिलाषः, भवानीपतेर्मुनिपत्नीसहस्रसन्दूषणं, पद्मनाभस्य षोड़शसहस्रान्तःपुरविहारः, प्रजापतेः स्वदुहितर्यपि प्रणयप्रवृत्तिः, शचीपतेः अहल्याजारता, शशाङ्कस्य गुरुतल्पगमनम्, अंशुमालिनो वड़वालङ्घनम्, अनिलस्य केशरिकलत्रसमागमः, बृहस्पतेः उतथ्यस्य भार्याभिसरणं, पराशरस्य दासकन्यादूषणं, पाराशर्यस्य भ्रातृदारसङ्गतिः, अत्रेः मृगीसमागम इति (११) । अमराणाञ्च तेषु तेषु कार्येषु असुरविप्रलम्भानि ज्ञानबलात् न धर्मपीड़ाम् आवहन्ति ॥ धर्मपूते च मनसि, नभसीव न जातु रजोऽनुषज्यते तन्मन्ये न अर्थकामौ

---

कामाभ्याम् आचरिताभ्याम् कर्तृभ्यां अर्थकामाभ्यां यथा कथञ्चिदपि स्वल्पमपीत्यर्थः, न बाध्यते नोद्विज्यते पीड़ां न जनयतीत्यर्थः ।

(११) बाधित इति । बाधितोऽपि बाधायुक्तोऽपि धर्मः अल्पेन क्षुद्रेण आयासेन प्रयासेन प्रतिसमाहितः समाधानं प्रापितः । तमपि दोषम् अर्थकामसंबाधजनितमित्यर्थः, निर्हृत्य निरस्य अनल्पाय अक्षुद्राय श्रेयसे मोक्षायापि कल्पते 'क्लृपि संपद्यमाने च' इति चतुर्थी । एतदेवार्थं द्रढ़यति—तथाहीति, पितामहस्य ब्रह्मणः तिलोत्तमाभिलाषः तिलोत्तमा स्वर्वेश्या "तिलं तिलं समानीय रत्नानां यत् विनिर्मिता । तिलोत्तमेति तत्तस्या नाम चक्रे पितामहः ॥" इति भारतः । तस्याम् अभिलाषः कामानुरागः । भवानीपतेः शिवस्य मुनिपत्नीनां सहस्रस्य सन्दूषणं गमनम् । पद्मनाभस्य विष्णोः षड़धिका दश तस्य सहस्रं षोड़शसहस्रम् अन्तःपुराणि निरोधानि तेषु विहारः लीला, भगवतः नारायणस्य षोड़शसहस्र-गोपाङ्गनाभिः सह विहार इत्याशयः । प्रजापतेः वेधसः स्वदुहितरि आत्मकन्यायां गायत्र्यामित्यर्थः, तथाहि मात्स्ये—"सरस्वत्यथ गायत्री ब्रह्माणी च परन्तप । ततः स्वदेहसम्भूतामात्मजामित्यकल्पयत् ॥ दृष्ट्वा तां व्यथितस्तावत् कामबाणार्दितो विभुः ॥" इति । प्रणयप्रवृत्तिः आसक्तिः । शचीपतेः इन्द्रस्य अहल्यायां गौतमपत्न्यां जारता उपपतित्वम् । शशः मृगविशेषः अङ्के क्रोड़े यस्य स शशाङ्कः चन्द्रः तस्य गुरुतल्पगमनं गुरोः बृहस्पतेः तल्पे भार्यायां गमनम् अभिनिर्याणं

धर्मस्य शततमीमपि कलां स्पृशतः इति। श्रुत्वा एतदपि उदीर्णरागवृत्तिः अभ्यधात् 'अयि विलासिनि! साधु पश्यसि, न धर्मस्तत्त्वदर्शिनां विषयोपभोगेन उपरुध्यत' इति। किन्तु जन्मनः प्रभृति अर्थकामवार्त्तानभिज्ञा वयम्। ज्ञेयौ च इमौ किंरूपौ किं परिवारौ किं फलौ? च' इति। (१२) सा त्ववादीत्—'अर्थस्तावदर्जनवर्द्धनरक्षणात्मकः, कृषिपाशुपाल्य-वाणिज्यसन्धिविग्रहादिपरिवारः तीर्थप्रतिपादनफलश्च। कामस्तु विषयातिसक्तचेतसोः स्त्रीपुंसयोः निरतिशयसुखस्पर्श-विशेषः। परिवारस्त्वस्य यावत् इह रम्यमुज्ज्वलञ्च वस्तु। फलं पुनः परमाह्लादनं परस्परविमर्दजन्म स्मर्य्यमाणमधुरम्,

---

सहवास इत्यर्थः। "तल्पमट्टे कलत्रे च शयनीये च न द्वयोः" इति मेदिनी। अंशुमालिनः सूर्य्यस्य वड़वायाम् अश्वायां लङ्घनं गमनम्। अनिलस्य समीरणस्य, केशरी कोऽपि कपिः तस्य कलत्रं भार्य्या तेन समागमः सहवासः। हनुमतो माता अञ्जनया साकं वायोः सहवास इति रामायणप्रसिद्धम्। बृहस्पतेः देवगुरोः उतथ्यस्य अङ्गिरःपुत्रस्य निजज्येष्ठभ्रातुरित्यर्थः, भार्य्यायाम् अभिसरणम् अभिगमनम्। पराशरस्य व्यासपितुः शक्तिमुनिपुत्रस्येत्यर्थः, दासकन्यादूषणं दासस्य धीवरस्य कन्यायाः दूषणं गमनं परासरमुनेः सत्यवत्याः गमनं भारतप्रसिद्धम्। पराशरस्य अपत्यं पुमान् पाराशर्य्यः द्वैपायनः तस्य भ्रातुः विचित्रवीर्य्यस्य दाराः भार्य्या तेषु सङ्गतिः गमनम्, द्वैपायनात् धृतराष्ट्रपाण्डुविदुराः आसन्निति भारतीया कथा। अत्रिः सप्तर्षिमध्ये ऋषिविशेषः, तस्य मृग्यां हरिण्यां समागमः अभिगमनम्।

(१२) अमराणामिति। अमराणां देवानां तेषु तेषु कार्य्येषु समुद्रमन्थनादिव्यापारेषु; असुराणां दैत्यानां विप्रलम्भनानि विप्रलम्भो नामाङ्गीकृतासम्पादनं प्रतारणमित्यर्थः, तानि। ज्ञानबलात् ज्ञानातिशयादित्यर्थः, धर्म्मपीड़ां धर्म्मव्याघातं न आवहन्ति न जनयन्तीत्यर्थः। नभसि गगने इव धर्मपूते धर्मविशुद्धे मनसि चित्ते रजः रजोगुणः पापमित्यर्थः, धूलिः पांशुश्च वा, जातु कदाचित् न अनुषज्यते अनुषक्तं भवतीत्यर्थः। तत् तस्मादतएवेत्यर्थः, अर्थकामौ धर्मस्य शततमीं शतानां पूरणः तां कलाम् अंशं न स्पृशतः नाक्रामतः इत्यर्थः, इति मन्ये अनुभवामीत्यर्थः। एतत् कथितवचः श्रुत्वा आश्चर्य्यं उद्गीर्णा उद्दीपिता प्रोज्ज्वलितेत्यर्थः, रागवृत्तिः रागानुव्यापारः यस्य स तथोक्तः।

उदीरिताभिमानम्। अनुत्तमं सुखम् अपरोक्षं स्वसंवेद्यमेव। तस्यैव कृते विशिष्टस्थानवर्त्तिनः कष्टानि तपांसि, महान्ति दानानि, दारुणानि युद्धानि, भीमानि समुद्रलङ्घनादीनि च मानवाः समाचरन्ति इति। निशम्य एतत् नियतिबलात् नु, तत्पाटवात् नु, स्वबुद्धिमान्द्यात् नु, स्वनियमम् अनादृत्य तस्याम् असौ प्रासजत् (१२)। सा सुदूरं मूढात्मानञ्च तं प्रवहणेन नीत्वा पुरम्, उदारशोभया राजवीथ्या, स्वभवनम् अनैषीत्। अभूच्च घोषणा 'श्वः कामोत्सवः' इति। उत्तरेद्युः स्नातानुलिप्तम् आरचितमञ्जु[मुण्ड]मालम् आरब्धकामिजनवृत्तं, निवृत्तस्ववृत्ताभिलाषं क्षणमात्रे गतेऽपि तया विना दूयमानचित्तं तमृषिम् ऋद्धिमता राजमार्गेण उत्सवसमाजं नीत्वा, क्वचित्

ऋषिः मरीचिः अभ्याधात् अभ्यभाषत। अयि अनुनये "प्रश्नेऽनुनये त्वयि" इत्यमरः। विलासिनि हे लीलायुते तथा च भरतः "तात्कालिको विशेषस्तु विलासोऽङ्गक्रियादिषु।" तात्कालिकः दयितालोकनादिभवः इति। साधु सम्यक् यथा तथा पश्यसि तथार्थदृष्टिवत्यसीत्यर्थः। तत्त्वदर्शिनां तत्त्वसाक्षात्कारिणां ब्रह्मज्ञानवतामित्यर्थः, विषयाणाम् भोगसाधनद्रव्याणाम् उपभोगः निर्वेशः भोजनातिरिक्तभोगः इत्यर्थः, तेन, धर्मः न उपरुध्यते बाध्यते। किन्तु किम्पुनः जन्मनः प्रभृति आजन्म वयम् अर्थकामवार्त्तानभिज्ञाः अर्थकामयोः वार्त्ता वृत्तान्तं तस्मिन् अनभिज्ञाः अज्ञाः 'युष्मदो ह्वयोश्च' इति बहुवचनम्। ज्ञेयौ ज्ञातव्यौ इमौ अर्थकामौ किंरूपौ कीदृशौ किं परिवारौ परिकरौ तयोः सम्पृक्तविषयाविति भावः। किं फलं ताभ्यां किं परिणामः लभ्यते इत्याशयः।

(१२) सेति। सा गणिका अवादीत् अवोचत्। अर्थः, तावत् अवधारणे, अर्जनम् आयत्तीकरणं, वर्द्धनं कुशीदादिना वृद्धिः, रक्षणं पालनम् एतत् आत्मा रूपं यस्य स तथोक्तः। कृषिः भूम्यादिकर्षणं, कर्म पशुपाल्यं गवाश्वादेः परिपालनं, वाणिज्यं वणिजः कर्म, सन्धिः नृपादीनां षड्गुणान्तर्गतगुणविशेषः, स तु कृष्णादिदानेन बन्धुभिः प्रीत्युत्पादनात् मैत्रीकरणम्; विग्रहः युद्धम् एतानि आदीनि परिवारः परिकरः यस्य स तथोक्तः। तीर्थेषु सत्पात्रेषु प्रतिपादनं दानं फलं स्वरूपं यस्य स तथोक्तः। कामः तु अवधारणे, विषयाः

उपवनोद्देशे युवतिजनशतपरिवृतस्य राज्ञः सन्निधौ समपसदत्, तत्र स्मितमुखेन तेन 'भद्रे ! भगवता सह निषीद' इत्यादिष्टा सविभ्रमकृतप्रणामा सस्मितं न्यषीदत् (१४)। तच कश्चित् उत्थाय बद्धाञ्जलिः उत्तमाङ्गना, 'देव! जितानया अहं, तद्दास्यम् अद्यप्रभृति अभ्युपेतं मया' इति प्रभुं प्राशंसीत्। विस्मयहर्षमूलश्च कोलाहलो लोकस्य उदजिहीत। हृष्टेन च राज्ञा महार्हैः अलङ्कारैः महता च परिवर्हेण अनुगृह्य, विसृष्टा सा वारमुख्याभिः, पौरमुख्यैश्च गणशः प्रशस्यमाना, स्वभवनम्

---

स्रक्चन्दनवनितादयः तेषु अतिसक्ताम् अत्यानुरक्तं चेतः चित्तं ययोः तयोः स्त्रीपुंसयोः योषितः पुंसश्चेत्यर्थः, 'अचतुरः—' इत्यादिनाच निपातनाददन्तता। निर् नास्ति अतिशयं यस्मात् तत निरतिशयं श्रेष्ठं सुखं तस्य स्पर्शविशेषः त्वगिन्द्रियग्राह्यगुणविशेषः। इह अस्मिन् जगति तस्य जनस्य तावत साकल्ये परिवारः परिक[illegible] मनोहारि उज्ज्वलं [illegible]स्वरं वस्तु भाजनम् उद्दीपनविभाव इत्यर्थः। पुन[illegible] [illegible] परस्परविमर्द जन्य अन्योऽन्यालिङ्गनचुम्बनादिजन्यं फलं परिणाम इत्यर्थः, परमाह्लादनम् अतिशयानन्दजनकं स्मर्यमाणं सत् मधुरं मनोज्ञं यदीयस्मरणमपि सुखजनकमिति भावः। उदीरितः उद्दीपितः अभिमानः प्रणयः यस्मिन् तथोक्तम। नास्ति उत्तमं यस्मात् तत् अनुत्तमं सुखम आनन्दम् अपरोक्षं प्रत्यक्षं 'अव्ययपदसमनुभ्योऽक्ष्णः' इत्यव्ययीभावः। स्वेनात्मना संवेद्यं ज्ञेयमेव। तस्यैव कामजनितसुखस्यैव कृते निमित्तं भोगार्थमित्यर्थः, "अर्थे कृते व्ययं तावत् तादर्थ्ये वर्त्तते ह्ययम।" इति कोषसारः। विशिष्य शिष्टं विशुद्धमित्यर्थः तस्मिन् स्थाने तीर्थादौ वर्त्तन्ते तिष्ठन्तीति तथोक्ताः मानवाः नराः। कष्टानि दुःखसाध्यानि तपांसि व्रतचर्यादीनि, महान्ति प्रचुराणि दानानि वितरणानि, दारुणानि भीषणानि भयहेतुकानीत्यर्थः, युद्धानि समराणि, भीमानि भयानकानि समुद्राणां सागराणां लङ्घनादीनि उत्तरणप्रभृतीनि समाचरन्ति विदधतीत्यर्थः, नुरव सर्वत्र वितर्कं बोध्यव्यम्। एतत् वचः निशम्य श्रुत्वा नियतेः दैवस्य बलं सामर्थ्यं तस्मात्। तस्याः काममञ्जर्याः पाटवं पटुत्वं वाग्विन्यासचातुर्यमित्यर्थः, तस्मात। स्वस्य आत्मनः बुद्धेः मत्याः मान्द्यं दौर्बल्यं तस्मात। असौ मरीचिः स्वनियमम् आत्मकृतं मुनिसमयं सायं प्रातः सवनादिकमित्यर्थः, अनादृत्य अगणयित्वा तस्यां गणिकायां प्रसाजत् प्रसक्तोऽभूदित्यर्थः।

अगत्वैव तमृषिम् अभाषत—'भगवन्! अहमञ्जलिः, चिरम् अनुगृहीतोऽयं दासजनः, स्वार्थ इदानीम् अनुष्ठेयः' इति। स तु रागात् अशनिनिहत इव उद्भ्रास्य अब्रवीत् (१५) 'प्रिये! किम् एतत्? कुत इदम् औदासीन्यम्? क्व गतस्तव मयि असाधारणोऽनुरागः'? इति अथ सा सस्मितम् अवादीत्—'भग-

---

(१४) सेति। सा काममञ्जरी मूढात्मानं मूर्खबुद्धिं तं महर्षिं सुदूरमत्यन्तं यथा तथा प्रवहेन कर्णीरथेन "कर्णीरथः प्रवहणम्" इत्यमरः। पुरं नगरं नीत्वा उदारा महती शोभा कान्तिः यस्याः तथाभूतया राजवीथ्या राजमार्गेण स्वभवनं निजागारम् अनैषीत् नीतवती। श्वः आगामिनि दिने कामोत्सवः मदनाङ्गनादिः तथाच स्कान्दे—"मधुमासे तु संप्राप्ते शुक्लपक्षे चतुर्दशी। प्रोक्तामदनभुञ्जीति सिद्धिदा तु महोत्सवे॥ पूजयिष्यन्ति ये मर्त्त्यास्तदङ्गभवपल्लवैः।" इति। इति एवं घोषणाः प्रचारः अभूत, उत्तरेद्युः उत्तरदिवसे स्नातानुलिप्तं पूर्वं स्नातः पश्चादनुलिप्तः गन्धद्रव्येण नरः तथा तम्। आरचिता धृता मञ्जु मनोरमा माला स्रक् येन तादृशम्। मुण्डमाल-मिति पाठे मुण्डे मस्तके वेष्टितस्रजमित्यर्थः। आवद्धं कृतारम्भं कामिजनस्य वृत्तं व्यवहारः येन तथोक्तम्। निवृत्तः दुरापास्तः स्ववृत्ते निजाचरणे यमनियमादियोगाङ्गे इत्यर्थः, अभिलाषः आकाङ्क्षा यस्य तथोक्तम्। तथा गणिकया विना ऋते क्षणमात्रे अत्यल्पक्षणे गते यानेऽपि दूयमानं खिद्यमानं चित्तं चेतः यस्य स तथोक्तम्। तद्दर्शन-मन्तरेण क्षणमात्रमपि नातिक्रमितुं शक्नुवन्तमित्याशयः। तं कामाशक्तम् ऋषिं मरीचिम् ऋद्धिमता समृद्धेन राजमार्गेण राजवर्त्मना उत्सवाय समाजः सभा तं तथोक्तम्। नीत्वा क्वचित् कस्मिन्नपि उपवनोद्देशे कृत्रिमवनप्रदेशे युवतिजनानां शतं तेन परिवृतः युक्तः यस्य राज्ञः नृपस्य सन्निधौ समीपे समासदत् अभ्यगात्, तत्र क्रीडासभायां स्मितमुखेन मन्दहाससहितेनेत्यर्थः, तेन राज्ञेत्यर्थः, भद्रे हे शोभने भगवता महर्षिणा सह निषीद उपविश। इति एवम् आदिष्टा आज्ञप्ता विभ्रमः हावभेदः तेन सह कृतः प्रणामः यया सा तथोक्ता। सस्मितं मन्दहाससहितं न्यषीदत् उपविशत्।

(१५) तत्रेति। तत्र उत्सवसमाजे बद्धाञ्जलिः युक्तपाणिः काचित् कापि उत्तमाङ्गना वरारोहा उत्थाय दण्डायमाना भूत्वा देव हे महाराज, अनया काममञ्जर्या अहम् उत्तमाङ्गना जिता पराभूता। तत् तस्मात् अतएवेत्यर्थः, मया अद्यप्रभृति

वन्! यया अद्य राजकुले भक्तः पराजयोऽभ्युपेतः तस्याश्च मम च कस्मिंश्चित् 'सङ्घर्षे मरीचिम् आवर्जितवतीव श्लाघसे' इति। तया अहम् अधिक्षिप्ता दास्यपणबन्धेन च अस्मिन्नर्थे प्रावर्त्तिषि, सिद्धार्था च अस्मि त्वत्प्रसादात्' इति। स तया तथावधूतो दुर्मतिः कृतानुशयः शून्यवत् व्यवर्त्तिष्ट। यः तया एवं कृतविप्रलम्भो, तमेव मां महाभाग! मन्यस्व। स्व[शक्ति]निषिक्तं रागम् उद्धृत्य तया एव बन्धक्या मह्यं वैराग्यम् अर्पितम्। अचिरात् एव भवद्य आत्मा त्वदर्थसाधनक्षमः कर्त्तुम्। अस्यामेव तावत् वस अङ्गपुर्य्यां चम्पायाम्' इति (१६)।

---

अभ्यागत्य दास्यं दासत्वम् अभ्युपेतम् उपपन्नम् स्वीकृतमित्यर्थः। इति एवं प्रभुं राजानं प्रणम्य प्रणनाम। लोकस्य जनस्य विस्मयः आश्चर्यम् तेन हर्षः आनन्दः स एव मूलं यस्य स तथोक्तः। कोलाहलः कलकलः उदगिहीत उत्तस्थौ। हृष्टेन सन्तुष्टेन राज्ञा नृपतिना महार्हैः महान् अतिशयः अर्हः मूल्यं यस्य तैः तथोक्तैः। अलङ्कारैः भूषणैः महता अतिशयेन परिबर्हेण नृपयोग्यहस्त्यश्वादिपरिच्छदेन अनुगृह्य अनुग्रहं कृत्वा वारमुख्याभिः गणिकाप्रधानाभिः सह सा काममञ्जरी विसृष्टा विसर्जिता। पौरमुख्यैः पुरवासिप्रधानैः गणशः समूहेन प्रशस्यमाना स्तूयमाना स्वभवनं निजगृहम् अगत्वा न यात्वा तमृषिं मरीचिम् अभाषत अवदत्। भगवन् हे मुने, अहम्, अञ्जलिः करसम्पुटः, अयं पुरोवर्त्ती दासजनः सेवकः मल्लक्षण इत्यर्थः, चिरं दीर्घकालावधि यथा तथा अनुगृहीतः अनुग्रहविषयीकृतः, इदानीम् अधुना स्वार्थः तपश्चरणादि: अनुष्ठेयः आचरितं कर्मेत्यर्थः। स तु मुनिः रागात् अनुरागतः अशनिहत इव वज्रसम्भ्रान्तवत् उद्भ्राम्य उद्भ्रान्तो भूत्वा अब्रवीत् अवादीत्।

(१६) प्रिये इति। प्रिये हे दयिते, एतत् लक्षणमित्यर्थः, किम्? कुतः कस्मात् हेतोः इदं प्रत्यवसायम् औदासीन्यं विरागः? तव मयि असाधारणः असामान्यः अनुरागः आसक्तिः क्व कुत्र गतः यातः? अथ अनन्तरम्, सा गणिका सस्मितं स्मितं कृत्वा मन्दहाससहितमित्यर्थः, अवादीत् अब्रवीत्। भगवन् हे महर्षे, अद्य अस्मिन् अहनि राजकुले राजसमीपे यत्तः मानकात् यथा यद्वत् पराजयः पराभवः अभ्युपेतः, कस्मिंश्चित् एकदा तस्याः स्त्रियः मम च सङ्घर्षे वैरे मरीचिं तदाख्यमृषिम्

न्निपततोऽश्रुबिन्दून् अलक्षयम्। अप्राक्षञ्च अन्तिकोपविष्टः— 'कः तपः? क्व च रुदितम्? न चेत् रहस्यमिच्छामि श्रोतुं शोकहेतुम्' इति। सोऽब्रवीत्—'सौम्य! श्रूयताम् अहं अस्यामेव चम्पायां निधिपालितनाम्नः श्रेष्ठिनो ज्येष्ठसूनुः वसुपालितो नाम। वैरूप्यात्तु मम 'विरूपकः' इति प्रसिद्धिः आसीत्, अन्यश्च अत्र 'सुन्दरकः' इति यथार्थनामा कलागुणैः समृद्धो, वसुना नातिपुष्टोऽभवत्। तस्य च मम च वपुः वसूनि निमित्तीकृत्य वैरं वैरोपजीविभिः पौरधूर्त्तैः उदपाद्यत। ते

---

मोहः तस्य स्पर्शात् या भीः भयं तयैव, तत्स्पर्शजनितकलुषभयादिवेत्यर्थः, रविः सूर्यः अस्तम् अस्ताचलम् अगात् गतवान्। ऋषिमुक्तः ऋषिणा मुनिना मुक्तः त्यक्तः रागः गणिकाविषयकानुरागः सन्ध्यात्वेन सान्ध्यारागरूपेणेत्यर्थः, अस्फुरत् प्रकटीबभूव। तस्य मरीचेः कथाः वार्त्ताः ताभिः दत्तं वैराग्यं विषयवैतृष्ण्यं येषां तानि तथोक्तानि इवोत्प्रेक्षायाम्। कमलवनानि पद्मवनानि समकुचन् सङ्कोचमलभन्त। अनुमतं स्वीकृतं मुनेः शासनं निदेशः येन स तथोक्तः। अहम् असुना मुनिनैव सह सन्ध्यां दिनान्तम् उपास्य समासाद्य अनुरूपाभिः तुल्याभिः समयोचिताभिरित्यर्थः, कथाभिः वार्त्ताप्रबन्धैः तम् ऋषिम् अनुशय्य शयित्वा 'तृतीयार्थे—' इत्यनोः कर्म्मप्रवचनीयत्वम्। 'कर्म्मप्रवचनीययुक्ते द्वितीया' तेन सह शयित्वेत्यर्थः, नीता अतिवाहिता रात्रिः येन स तथोक्तः। प्रत्युन्मिषति उदयति सति, उदयः तदाख्यपर्वतः तस्य यः प्रस्थः सानुः तस्मिन् यः दावः दावानलः तस्मादीषदूनः तस्मिन् तथोक्ते। "दावो वनगतोवह्निः" इति [illegible]। कल्पद्रुमः देवतरुः तस्य यः किसलयः पल्लवः तम् अवधीरयति तिरस्करोतीति तथाभूते। अरुणार्चिषि प्रभाकरकरे तं मुनिं नमस्कृत्य नत्वा नगराय चम्पानगर्य्यै नगरं प्रतीत्यर्थः, उदचलम् प्रातिष्ठे प्रचलित इत्यर्थः। मार्गः पन्था तस्य अध्यासे समीपे वर्त्तते इति तथाभूतस्य कस्यापि क्षपणकविहारस्य क्षपणकानां सुगतसन्न्यासिनां विहारः आवसथः तस्य बहिः बाह्ये समीपे इत्यर्थः। विविक्ते विजने रक्ताशोकषण्डे रक्ताशोककदम्बे "कदम्बे षण्डमस्त्रियाम्" इत्यमरः। निषण्णम् आसीनम् अस्पृष्टसमाधिम् अस्पृष्टः अलब्धः समाधिः नियमः येन तम्। आधिभिः मनःपीड़ाभिः क्षीणः दुर्ब्बलः तम्। अनभिरूपाणाम् अप्रतीकाररूपाणां कुरूपा-

एव कदाचिदावयोः उत्सवसमाजे स्वयमुत्पादितम् अन्योन्यावमानमूलम् अधिक्षेपवचनव्यतिकरम् उपशमय्य, 'न वपुः वसु वा पुंस्त्वमूलम्' अपि तु प्रकृष्टगणिकाप्रार्थ्ययौवनो हि यः, स पुमान् । अतो युवतिललामभूता काममञ्जरी यं वा कामयते, स हरतु सुभगपताकाम्' इति व्यवस्थापयन् (१८)। अभ्युपेत्य आवां प्राहिणुव तस्यै दूतान् । अहम् एव किलाऽमुष्याः स्मरोन्मादहेतुरासम् । आसीनयोश्च आवयोः माम् एव उपगम्य सा, नीलोत्पलमयम् इव अपाङ्गदामाङ्गे मम मुञ्चन्ती, तं जनमपत्रपयाऽधोमुखं व्यधत्त । सुभगस्त्रमेन च यया स्वधनस्य,

---

णामित्यर्थः अग्रगण्यं प्रधानं कृपावर्ण्यं दीनवर्णं मनोव्यथया विवर्णमित्यर्थः, कमपि कञ्चित् क्षपणकं बौद्धम् अदर्शम् दृष्टवान् ।

(१८) उरसीति । अस्य क्षपणकस्य उरसि वक्षसि शिथिलिताः द्राविताः मलनिचयाः गात्ररजसः इत्यर्थः, यैः तथोक्तान् । मुखात् वदनात् निपततः क्षरतः अश्रुविन्दून् नेत्रजलकनान् अलक्षयम् अवलोकयमित्यर्थः । अन्तिकोपविष्टः अन्तिके समीपे उपविष्टः स्थितः सन् अपाक्षम् पृष्टवानस्मि, क्व कुत्र तपः तपस्या क्व च कस्मिन् विषये रुदितं क्रन्दितं शोकहेतुं विलापकारणं रहस्यं गोप्यं चेत् यदि न श्रोतुम् अवगन्तुम् इच्छामि अभिलषे । इति वाक्यसमाप्तौ । सः क्षपणकः अब्रवीत् अकथयत सौम्य हे भद्र, श्रूयताम् अवगम्यताम्, अस्यामेव चम्पायां चम्पानगर्याम् निधिपालितनाम्नः तन्नामधेयश्रेष्ठिनः वणिजः अहं ज्येष्ठसूनुः अग्रजात्मजः नाम्ना वसुपालितः । तु किन्तु मम वैरूप्यात् कुरूपात् विरूपक इति प्रसिद्धिः आसीत् । अत्र चम्पानगर्यां अन्यस्य अपरः कलागुणैः शिल्पविद्याप्रभावैरित्यर्थः, समृद्धः युक्तः सम्पन्न इत्यर्थः, वसुना धनेन नातिपुष्टः नात्युपचितः धनहीन इत्यर्थः, सुन्दरक इति यथार्थनामा नाम्नोऽन्वार्थः अभवत् । वैरोपजीविभिः वैरं विरोधः तेन उपजीव्यन्ते यैः तथोक्तैः । पौरधूर्त्तैः नगरवञ्चकैः तस्य सुन्दरकस्य मम च आवयोरित्यर्थः, वपुः शरीरं सौन्दर्य्यमित्याशयः, वसूनि धनानि च निमित्तीकृत्य हेतुमुत्तोल्य वैरं द्वयम् उदपाद्यत उत्पादितमित्यर्थः । कदाचित् एकदा उत्सवसमाजे उत्सवसभायां ते एव पौरधूर्त्ता एव स्वयमात्मना आवयोः तस्य मम च अन्योऽन्यावमानमूलं परस्परावमानकारणम् अधि-

स्वगृहस्य, स्वगणस्य, स्वदेहस्य, स्वजीवितस्य च, संवेश्मो कृता। कृतश्च अहम् अनया मलमल्लकशेषः हृतसर्वस्वतया च अपवाहितः, प्रपद्य लोकोपहासलक्ष्यताम् अक्षमश्च सोढुं धिक्कृतानि पौरवृद्धानाम्, इह जैनायतने मुनिना एकेन उपदिष्टमोक्षवर्त्मा सुकर एष वेशो वेशविनिर्गतानामिति उदीर्णवैराग्यः तदति कौपीनम् अजहाम् (१८)। अथ पुनः प्रकीर्णमलपङ्कः प्रबलकेशलुञ्चनव्यथः, प्रकृष्टतमक्षुत्पिपासादिदुःखः, स्थानासनशयनभोजनेषु अपि द्विप इव नवग्रहो, बलवतीभिः यन्त्रणाभिः उद्वेजितः प्रत्यवामृशम्। 'अहमस्मि द्विजातिः,

---

क्षेपः तिरस्कारः तस्य वचनव्यतिकरं वाक्यप्रसरं स्वयमवतारितं तदुपालम्भवचः समान्ते, मदुपालम्भवचश्च तदन्ते इत्यादिरूपमिति तथोक्तम्। उपशमय्य श्रावयित्वा उत्पादितं कथितम्। वपुः शरीरं, वसु धनं, पुंस्त्वमूलं पुरुषत्वंकारणम्, अपि तु किन्तु प्रकृष्टा उत्तमा तया गणिकया वारनार्य्यां प्रार्थ्यं याच्यं यौवनं यस्य स तथोक्तः। यः स हि निश्चितं पुमान् श्लाघ्यो नर इत्यर्थः। अतः अस्मात् युवतिषु यूनीषु ललामभूता भूषणरूपा श्रेष्ठेत्यर्थः, काममञ्जरी तन्नाम्नी गणिका यं जनं कामयते प्रार्थयति स जनः सुभगपताकां सुभगस्य प्रमदावल्लभस्य पताका चिह्नविशेषः ताम् हरतु प्राप्नोतु। इति एवं व्यवस्थापयन् निरवधारयन् मर्य्यादां चक्रुरित्यर्थः।

(१९) अभ्युपेत्येति। आवां सुन्दरकः अहञ्च अभ्युपेत्य स्वीकृतत्र तस्यै गणिकायै दूतान् वार्त्तावहान् प्राहिणुव प्रेषितवन्तौ। अहमेव, किल वार्त्तायाम्, अमुष्याः गणिकायाः स्मरस्य कामस्य यः उन्मादः औत्सुक्यसन्तापाद्विकारितमनोविपर्य्यासस्समुत्थक्रियाश्रितव्यथाव्यापारः तस्य हेतुः कारणम् आसम् अभवम्। आसीनयोः स्थितयोः आवयोः सा गणिका मां विरूपकं एव उपगम्य नीलोत्पलमयम्, नीलोत्पलेन इन्दिवरेण मयः तुल्यः तम्, इव मम अपाङ्गदामाङ्गे आपाङ्गं नेत्रप्रान्तं तेनावलोकनपरम्परा रूपां मालां मुञ्चन्ती अधिक्षिपन्ती, तं जनं मम प्रतिकूलं सुन्दरकम् अपत्रपया सञ्जातलज्जया "लज्जा सापत्रपान्यतः" इत्यमरः। अधोमुखं नम्रवदनं व्यधत्त कृतवती। आत्मानं स्वं सुभगं शोभनैश्वर्य्यादियुक्तं मनुते यः स तथोक्तः। मया स्वधनस्य निजार्थस्य स्वगणस्य आत्मजनस्य स्वदेहस्य निजवपुषः स्वजीवितस्य आत्मजीवनस्य

क्षपणकधर्म्मो, मम एषः, पाष[ख]ण्डपथावतारः श्रुतिस्मृति-विहितेन एव वर्त्मना मम पूर्व्वजाः प्रावर्त्तन्त मम तु मन्दभाग्यस्य, निन्द्यवेशम् अमन्ददुःखायतनं हरिहर-हिरण्यगर्भादिदेवतापवादश्रवणैरन्तर्थ्यात् प्रेत्यापि निरय-फलम्। अफलं, विप्रलम्भप्रायम् ईदृशम् इदम् अधर्मवर्त्म धर्म्मवर्त्मसमाचरणीयमासीत्' इति प्रत्याकलितस्वदुर्नयः पिण्डी-ष[ख]ण्ड विविक्तम् एतदासाद्य अपर्य्याप्तम् अस्रु मुञ्चामि' इति श्रुत्वा च एतदनुकम्पमानोऽब्रवम् (२०) भद्र! क्षमस्व कञ्चित् कालम्, अत्र एव निवस, निजेन दुःखेन असौ एव वेश्या-

सारागमञ्जरी ईश्वरी अधीश्वरी क्लृता विहिता। अनया गणिकया अहं विरूपकः मल-मल्लकशेषः, मलमल्लकं कौपीनम् शेषः यस्य स तथोक्तः। "आच्छादनं संपिधानं कौपीनं मलमल्लकम्" इति वैजयन्ती। क्लृतः विहितः। हृतसर्वस्वतया च हृतं गृहीतं सर्वस्वं समुदायधनं तया अवाहितः भवनतोबहिष्कृतः, लोकानाम् उपहासः परिहासः तस्य लक्ष्यतां लक्ष्यस्थानतां प्रपद्य प्राप्य, पौरवृन्दानां नागरिकसंख्यानां धिक्कृतानि तिरस्कारवाक्यानि सोढुं मर्षितुम् अक्षमः असमर्थः, इह अत्र जैनायतने जैनानां क्षपणकानाम् आयतनम् आवसथं तस्मिन् वयोक्ते। एकेन केनचित् मुनिना उपदिष्टम् अनुशिष्टं मोक्षस्य मुक्तेः वर्त्म यस्मै स तथोक्तः। वेशविनिर्गतानां विशन्त्यस्मिन् नयनमनांसि यूनामिति विशः घञ्; वेशाः वेश्यानाम् आवासाः तेभ्यः निर्गताः आयाताः तेषाम्। "वेशो वेश्यागृहेऽपि च" इति रभसः। उन्नीर्णवैराग्यः उन्नीर्णम् अधिकृतं वैराग्यं येन सः, एषः प्रत्यक्षायमानः वेशः परिच्छदः सुकरः सुसाध्यः इति हेतोः तदपि कौपीनं संपिधानम् उज्झाम् अत्यजम्।

(२०) अथेति। अथ अनन्तरं पुनर्भूयः प्रकीर्णमलपङ्कः प्रकीर्णः प्रसृतः मलपङ्कः गात्रस्थमलसमूहः यस्य स तथोक्तः। क्षपणकानां गात्रमलनिष्कासननिषेधात् सर्वशरीरगघनीभूतरजोनिचयः इति सूचितम्। प्रबला अतिशया केशानां कुन्तलानां लुञ्चनेन कर्त्तनेन व्यथा वेदना यस्य स तथाभूतः। बौद्धानां केशवपनविधानादिति भावः। प्रकृष्टतमम् अत्यन्तप्रबलं, क्षुत् क्षुधा पिपासा तृष्णा ता आदी येषां तैः दुःखं यस्य स तथोक्तः। भिक्षामात्रोपजीवित्वेन भक्ष्याभावादित्याशयः। स्थानम् अवस्थितिः वसतिरित्यर्थः, आसनं पीठादि शयनं शय्या भोजनं भक्ष्यं तेषु अपि द्विपः इव हस्ती

यथा त्वां योजयिष्यति तथा यतिष्ये, सन्ति उपायाः त्वादृशाः इति आश्वास्य तम्, अभ्युत्थितोऽहं नगरम् आविशन्नेव उपलभ्य लोकवादात् लुब्धसमृद्धपूर्णं पुरमिति अर्थानां नश्वरत्वञ्च प्रदर्श्य, प्रक्षालितान् असून् विधास्यन् कर्णोसुतप्रहीते पथि मतिम् अकारवम्। अनुप्रविश्य च द्यूतसभाम् अक्षधूर्तैः समगंसि (२१) तेषां च पञ्चविंशतिप्रकारासु सर्वासु द्यूताश्रयासु कलासु

---

एव नवः नूतनः ग्रहः ग्रहणं यस्य स तथोक्तः अल्पदिनगृहीत इत्यर्थः। हस्तिपको यथा नवीनं हस्तिनं स्ववशमानेतुं नानोपायैः यतते, तेषु व्यापारेषु च हस्ती निखिलक्लेशमनुभवति तथैवेति भावः। वलवतीभिः प्रबलाभिः यन्त्रणाभिः पीड़ाभिः उद्वेजितः पीडितः प्रतायाम्बषस् विचारितवान्। अहं द्विजातिः वैश्यः अस्मि "द्विजः स्यात् ब्राह्मणक्षत्रवैश्यदन्ताण्डजेषु च" इति मेदिनी। मम एषः अस्वधर्मः न स्वधर्मः अस्वधर्मः, पाषण्डानां वेदबोधितमार्गद्वेषिणां पन्थाः पाषण्डपथः तस्मिन् अवतारः अवतरणम् बौद्धमतानुसरणमित्याशयः। मम पूर्वजाः पूर्वपुरुषाः, श्रुतिः वेदः स्मृतिः मन्वादिशास्त्रं ताभ्यां विहितः प्रतिपादितः तेन एव वर्त्मना पथा प्रावर्त्तन्त: प्रवृत्ताः आसन्। तु किन्तु मन्दं भाग्यम् अदृष्टं यस्य तथोक्तस्य मम निन्द्यः असुन्दरवेशः यस्य तत्। असन्दानाम् अदृष्टानां सहतामित्यर्थः, दुःखानां क्लेशानाम् आयतनं स्थानम्। हरिः नारायणः हरः शङ्करः हिरण्यगर्भः ब्रह्मा ते आदयो देवताः तेषाम् अपवादः निन्दा तस्य श्रवणैरत्यन्तात् अविच्छिन्नश्रवणादित्यर्थः, प्रेत्य अपि अमुत्रापि जन्मान्तरेऽपीत्यर्थः, "प्रेत्यामुत्र भवान्तरे" इत्यमरः। निरयः नरकः फलं परिणामो यत् तदतिथः, अर्थमिव दृश्यते, इदम् दृशः क्विप् ईदृशम्, अर्थतः निष्फलं धर्मवत् धर्म इव विप्रलम्भप्रायं वञ्चनात्मकं "विप्रलम्भो विसंवादो विरहो वञ्चना तथा" इति विश्वः। इदम् अधर्मवर्त्म मार्गः समाचरणीयं व्यवहर्त्तव्यम् आसीत्। इति एवं प्रत्याकलितः भावितः स्वस्य आत्मनः दुर्नयः दुर्व्यवहारः येन स तथोक्तः। क्षुभ्राद्रैरन्तर्वर्त्तित्वेन दुर्नय इत्यत्र च बालम्। पिण्डीनाम अशोकानां षण्डः निचयः तत् तथोक्तम्। "अशोकः पिण्डिकापिण्डी" इति वैजयन्ती। एतत् विविक्तं निर्जनम् आसाद्य प्राप्य अपथ्यात् यथेष्टम् अस्तु नेवास्व सुखानि त्यजामि। इति एवं श्रुत्वा आकर्ण्य एतत् क्षपणकवृत्तान्तमित्यर्थः, अनुकम्पमानः दयाप्रवणः अत्रवम् अवदम्।

कौशलम्, अक्षभ्र[ भू ]मिहस्तादिषु च अत्यन्तदुरुपलक्ष्याणि कूटकर्माणि तन्मूलानि सावलेपानि अधिक्षेपवचनानि, जीवितनिरपेक्षाणि संरम्भविचेष्टितानि, सभिकप्रत्ययव्यवहारान् न्यायबलप्रतापप्रायान् अङ्गीकृतार्थ-[प्रयोजितार्थ]-साधनक्षमान्, बलिषु सान्त्वनानि, दुर्बलेषु भर्त्सितानि, पक्षरचनानैपुण्यम्, उच्चावचानि उपप्रलोभनानि ग्लहप्रभेदवर्णनानि द्रव्यसंविभागौदार्यम् अन्तरान्तरा अश्लीलप्रायान्, कलकलानित्येतानि च अन्यानि च अनुभवन्, न तृप्तिम् अभ्यगच्छम् (२२)। अह-

---

(२१) भद्रेति। भद्र हे श्रेष्ठिन् कञ्चित् कालं कतिचिद्दिनं चमस उहस, तत्र क्षपणकाश्रमे एव निवस अवस्थानं विधेहि, असौ वेश्या काममञ्जरी निजेन स्वकीयेन द्युम्नेन धनेनैव "हिरण्यं द्रविणं द्युम्नम्" इत्यमरः। यथा येन प्रकारेण त्वां भवन्तं योजयिष्यति संघटिष्यति तथा यतिष्ये प्रयत्नं करिष्ये अहमिति शेषः। तादृशाः तत् प्रकाराः उपायाः साधनानि सन्ति। इति एवं तं क्षपणकम् आश्वास्य प्रबोध्य अहम् अभ्युत्थितः संप्रोदितः नगरम् पुरम् आविशन् प्रविशन् एव लोकवादात् जनरवात् लुब्धसमृद्धपूर्णं लुब्धैः वञ्चकैः समृद्धैः महर्द्धिसम्पन्नैः पूर्णं नगरं पुरमिति उपलभ्य ज्ञात्वा अर्थानां धनानां नश्वरत्वम् अनित्यत्वं प्रदर्श्य दर्शयित्वा संकीर्त्य इत्यर्थः, प्रकृतिस्थान् स्वभावस्थान् अमून् लोकान् पुरवासिन इत्यर्थः, विधास्यन् करिष्यन् कर्णीसुतप्रहिते कर्णीसुतः स्तेयशास्त्रकर्त्ता तेन प्रहिते प्रदर्शिते "कर्णीसुतः करटकः स्तेयशास्त्रस्य कारकः" इति वैजयन्ती। पथि वर्त्मनि मतिं चेतः अकरवम् कृतवान्। अक्षधूर्त्तैः पाशकक्रीडानिपुणैः सनिलं सि द्यूतानां पाशकक्रीड़कानां सभा समाजः ताम्, मिलितोऽभवम्।

(२२) तेषामिति। तेषाम् अक्षधूर्त्तानां पञ्चविंशतिप्रकाराः विधाः येषां तासु सर्वासु सकलासु द्यूताश्रयासु द्यूतानाम् अक्षक्रीड़कानाम् आश्रयाः अवलम्बनीयाः तासु कलासु विद्यासु कौशलं नैपुण्यम्, अक्षभ्रमिहस्तादिषु अक्षस्य पाशकस्य भ्रमिषु पूर्णनेषु ये हस्तादयः करकौशलादय इत्यर्थः, तेषु अक्षभूमिहस्तादिषु पाठे अक्षभूमिः अक्षाणां स्थापनस्थानम्। अत्यन्तदुरुपलक्ष्याणि अत्यन्तम् अतिशयं दुर् दुःखेन उपलभ्यन्ते इति तथोक्तानि, कूटकर्माणि कपटप्रबन्धाः तन्मूलानि तस्य कूटकर्मणः मूलानि

सश्च किञ्चित् प्रमादद्त्तशा[रि]रिके क्वचित्कितवे। प्रति कितवस्तु निर्दहन् इव क्रोधताम्रया दृशा माम् अभिवीक्ष्य 'शिक्षयसि रे! द्यूतवर्त्म हासव्याजेन। आस्ताम् अयम् अशिक्षितो वराकः त्वया एव तावद्विचक्षणेन देविष्यामि' इति द्यूताध्यक्षानुमत्या व्यत्यषजत्। मया जितश्चासौ षोडश-सहस्राणि दीनाराणाम् तदर्धं सभिकाय सभ्येभ्यश्च दत्त्वा अर्धं स्वीकृत्य उदतिष्ठम्। उदतिष्ठंश्च तत्र गतानां हर्षगर्भाः प्रशंसा-लापाः। प्रार्थ्यमानसभिकानुरोधाच्च तदगारेऽत्युदारम् अभ्य-वहारविधिम् अकरवम्। यन्मूलश्च मे दुरोदरावतारः स मे

---

कारणानीत्यर्थः, सावलेपानि सगर्वाणि अधिक्षेपवचनानि तिरस्कारात्मककठोरवाक्यानि जीवितं जीवनकालं निरपेक्षन्ते यानि तानि, प्राणनिरपेक्षाणीत्यर्थः। संरम्भः संभ्रमः तेन विचेष्टितानि विगतकायिकव्यापाराः कोपसम्पन्नानीत्यर्थः। सभिकः द्यूतकारकः तस्य प्रत्ययः विश्वासः तद्‌योग्यव्यवहारान् तदुचितानि व्यवहृतकार्याणीत्यर्थः। "सभिकाद्यूतकारकाः" इत्यमरः। न्यायः युक्तिः बलं सामर्थ्यं तयोः प्रतापः प्रभावः प्रायः भूयिष्ठं येषु तथाविधान् अङ्गीकृतार्थः स्वीकृतार्थः तस्य साधने संपन्ने क्षमान् समर्थान्। 'प्रयोजितार्थसाधनक्षमान्' इति पाठे प्रयोजितः संनियोगितः तेषां पणीकृता-नामित्यर्थः, अर्थानां साधने सम्पन्ने संग्रहे इत्यर्थः, क्षमान् समर्थान्। सभिकप्रत्यय-व्यवहारान् इत्यस्य विशेषणं इदं ज्ञेयम्; बलिषु बलवत्पक्षेष्वित्यर्थः, सान्त्वनानि विनय-युक्तवाक्यानि, दुर्बलेषु बलहीनपक्षेषु भर्त्सितानि तिरस्कारयुक्तवाक्यानि पक्षरचनानैपुणं पक्षरचनार्थं स्वपक्षीकरणे नैपुणं दाक्ष्यम्। उच्चावचानि बहुप्रकाराणि, मयूरव्यंस-कादिसमासः। "उच्चावचं नैकभेदं" इत्यमरः। उपप्रलोभनानि उपमोहनानि, ग्लहः पणः तस्य प्रभेदः प्रकारः तस्य वर्णनानि विवरणानि, द्रव्याणि वस्तूनि पणीकृत-द्रव्याणीत्यर्थः, तेषां संविभागं वण्टनं तस्मिन् यत् औदार्यं दाक्ष्यं क्षिप्रहस्ततेत्यर्थः। अन्तरान्तरा मध्ये मध्ये इत्यर्थः। अश्लीलप्रायान् अश्लीलम् असभ्यं तत्प्रायान् प्रायेण तद्बहुलान्। "अश्लीलं ग्राम्यभाषणम्" इति वैजयन्ती। कलकलान् कोलाहलान् इत्येतानि उक्तानीमानीत्यर्थः। अन्यानि अपरविधानि विषयानीत्यर्थः, अनुभवन् ज्ञानविषयीकुर्वन् तृप्तिं सन्तोषं न अध्यगच्छम् प्रापम्।

निमहं को नाम विश्वासान्तरं द्वितीयं हृदयम् आसीत् (२३)। तन्मुखेन च सारतः कर्मतः शीलतश्च सकलमेव नगरम् अवधार्य, धूर्जटिकण्ठकल्माषकालतमे तमसि नीलनिवसनार्द्धोरुक-परिहितो बद्धतीक्ष्णकौक्षेयकः फणिमुखकाकलीसन्दंशक-पुरुषशीर्षकयोगचूर्णयोगवर्त्तिकामानसूत्रकर्कटकरज्जुदीपभाजन-भ्रमरकरण्डकप्रभृत्यनेकोपकरणयुक्तो गत्वा कस्यचित् लुब्धेश्वरस्य गृहे सन्धिं छित्वा, पटभास[हाच]सूक्ष्मछिद्रालक्षिताल्तर्गृहप्रवृत्तिः अव्यथो, निजगृहमिव अनुप्रविश्य, नीवीं

---

(२३) अहममिति। क्वचित् कस्मिंश्चित् कितवे धूर्त्ते प्रमादेन अनवधानतया दत्तः सन्निवेशितः शारः क्षेपणं येन तस्मिन् तथाभूते। "शारः शारिश्च खेलनी" इति महीपः। किञ्चित् मनाक् अहमम् स्मितमकरवमित्यर्थः। प्रतिकितवः प्रतिकूल-द्यूतकारः क्रोधताम्रया क्रोधेन कोपेन ताम्रः आरक्तः इत्यर्थः, तया दृशा दृष्ट्या अरक्तचक्षुषेत्यर्थः। माम् अपहरवर्णाय निर्दहन् भस्मीकुर्वन् इव अभिवीक्ष सम्यक् आलोक्य रे अरे "अव्यांधनेऽङ्ग भोः प्याट् पाट् हे है हंहोऽरे रेऽपि च" इति हेमचन्द्रः। हासव्याजेन हासमिषेण द्यूतवर्त्म द्युतमार्गं द्युतक्रीड़ामित्यर्थः, शिक्षयसि शिक्षितो भवसि। आस्तां तिष्ठतु। अयं पुरोवर्त्ती वराकः शोच्यः "वराकश्चरशुशोच्ययोः" इति वैजयन्ती। अशिक्षितः क्रीड़नव्यापारे अनभिज्ञः त्वया एव तावत् अवधारणे विचक्षणेन शिक्षितेन देविष्यामि क्रीड़िष्यामि। इति एवं द्युताध्यक्षानुमत्या द्युतानाम् अक्षक्रीड़ानाम् अध्यक्षः प्रधानः कार्यनिर्वाहक इत्यर्थः, तस्य अनुमत्या अङ्गाक्रमेण व्यत्यषजत् व्यतिषक्तोऽभूदित्यर्थः। मया असौ द्यूतकारः जितः पराभूतः दीनाराणां व्यवहारिकमुद्राणां "दीनारे व्यवहारार्थं मुद्रादिरूप-रौप्यके" इति समूः। षोड़शसहस्राणि तत्संख्यकानि। सभिकाय द्यूताध्यक्षाय सभ्येभ्यः तत्रत्यसमीचकारिभ्यश्च तदर्द्धं प्राप्तधननामर्द्धं दत्त्वा प्रत्यर्प्य अर्द्धम् अपरार्द्धं स्वीकृत्य गृहीत्वेत्यर्थः, उदतिष्ठम् अभ्युत्थितः। तत्रगतानां तत्रस्थानां हर्षगर्भाः आनन्दपूर्णाः प्रशंसालापाः प्रशंसावाक्यानि उदतिष्ठन् उद्गच्छन्। प्रार्थयमानस्य सभिकस्य द्यूताध्यक्षस्य अनुरोधः उपरोधः तस्मात् तयोक्तात्। तदागारे तस्य-... भवने अत्युदारम् अतिमहत्त्वं यथा तथा अभ्यवहारविधिं भोजन-

सारमहतीम् आदाय निरगाम् (२४)। नीलनीरदनिकरपीवरतिमिरनिविड़पीड़ितायां राजवीथ्यां, झटिति शतह्रदासम्पातमिव क्षणमालोकम् अलक्षयम्। अथ असौ नगरदेवता इव नगरमोषरोषिता निःसम्बाधवेलायां निःसृता सन्निकृष्टा काचिदुन्मिषद्भूषणा युवतिः आविरासीत्। 'काऽसि ? वासु! क्व यासि' इति सदयमुक्ता त्रासगद्गदम् अगादीत्—'आर्य! पुर्य्यामस्याम् अर्य्यवर्य्यः कुवेरदत्तनामा वसति, अस्मि अहं तस्य कन्या। मां जातमात्रां धनमित्रनाम्ने अत्रत्याय एव कस्मैचित्

---

व्यापारम् अकरवम् क्वतवान्। दुरोदरावतारः दुरुदुष्टम् उदरं यस्य तत्, तस्मिन् अवतारः अवतरणं प्रवेशः इति यावत्, "दुरोदरं द्यूतकारे पणे द्यूतेऽपि पासके" इति महीपः। यन्मूलः यस्य कार्य्यस्य मूलः हेतुः स विमर्द्दकोनाम तन्नामधेयः मे मम विश्वासतरं प्रत्ययाप्पदमित्यर्थः, द्वितीयम् अपरम् हृदयम् सुहृत् आसीत् अभवत्।

(२४) तन्मुखेनेति। तस्य विमर्द्दकस्य मुखं तेन सारतः बलात् परमार्थेन वा कर्म्मतः कार्य्येण शीलतः सद्वृत्तेन सकलं सर्वं नगरं नगरवृत्तमित्यर्थः, अवधार्य्य स्थिरीकृत्य, धूर्जटिः शिवः तस्य कण्ठः गलः तस्मिन् यत् कल्माषं कालिमा तद्वत् कालतमः अतिश्यामलः तस्मिन् तथोक्ते। "शितिकरः स्यात् कल्माषम्" इति शाश्वतः। तमसि अन्धकारे, नीलं कृष्णं निवसनं वसनं तस्य अर्द्धोरुकम् अर्द्धोरुपर्य्यन्तं व्याप्नोतीति कन्। अर्द्धोरुकम् अवगुण्ठनवसनं परिहितम् आच्छादितं येन स तथोक्तः। "अर्द्धोरुकं वरस्त्रीणां वासश्चण्डातकः पुमान्" इत्यमरमाला। कुक्षौ उदरे बद्धः 'कुलकुक्षिग्रीवाभ्यः—' इति ढक्; कौक्षेयकः करवालः बद्धः कटौ सन्निवेशितः तीक्ष्णः निशितः कौक्षेयकः येन स तथोक्तः। "कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्" इत्यमरः। फणिनः सर्पस्य मुखमिव मुखं यस्य तत् तथोक्तम्। सेयकर्म्मणि खननकार्य्यसाधनमस्त्रविशेषः, काकली कर्त्तरी, काकचञ्च्वाकारः यन्त्रभेदः। केचित्तु काकली, निद्राति जागर्त्तिवेति बोधनार्थं कोमलमधुरध्वनिवाद्यविशेषः इति। संदंशकः कङ्कमुखः दृढ़लौहकिलादिवन्धारसाधनयन्त्रभेदः, 'सारासी' इति यस्य भाषाख्यातिः। "सन्दंशः कङ्कमुखः स्यात्" इति हेमचन्द्रः। पुरुषशीर्षकं पुरुषस्य शीर्षकं शिरः पुरुषप्रतिकृतिकाष्ठमयं मस्तकम्; सन्धिं खनित्वा अयसः तत्प्रवेशेन गृहस्थलोकानां व्यवहारं

शुभ्यङ्कुसाराय अन्वजानात् भार्यां मे पिता। स पुनः अस्मिन् अत्युदारतया पित्रोः अन्ते वित्तैः निजैः छत्वेवार्थिवर्गात् दारिद्र्यं, दरिद्रति सति अथ उदारक इति च प्रीतलोकाधिरोपितापरश्लाघ्यनामनि वरयति एव तस्मिन्, मां तरुणीभूताम्, अधन इति अदत्त्वा, अर्थपतिनाम्ने कस्मैचित् इतरस्मै यथार्थनाम्ने सार्थवाहाय दिव्सति मे पिता (२५)। तत्

---

निद्रत्वनिद्रत्वञ्च विज्ञाय पश्चात् गृहप्रवेशः शिवं क्षेमकारिणा, तदित्यर्थः। योगचूर्णं योगेन मिश्रणेन नानाजातीयौषधिविशिष्टेत्यर्थः, क्षेयशास्त्रमर्मज्ञाः येन गृहस्थानां परमनिद्राधिवेशान् जनयन्तीति भावः। योगवर्तिका उपायाञ्जनं येन दीपाभावेऽप्यन्धे तमसि आलोकनसहायसाध्यं प्रभवतीति। मानसूत्रं प्रमाणरज्जुः येनाग्मनः परिधिवेधादिपरिमाणेन खननं क्रियते इत्याशयः। कर्कटकः यन्त्रभेदः 'सम्पास' इति यस्य प्रसिद्धिः। रज्जुः सौधोर्द्धतलालम्ब्यावरोहणार्थम्। दीपभाजनं प्रदीपाधारः। भ्रमरेण घूर्णनेन रायते वेधः क्रियते काष्ठम् इति भ्रमरः वेधनयन्त्रविशेषः 'तुर्मीन्' इति यस्य भाषा प्रसिद्धिः, करण्डकं दीपनिर्वाणार्थम् प्रभृतिभिः इत्यादिभिः अनेकैः बहुभिः उपकरणैः स्तेयकर्मसाधनवस्तुभिः युक्तः मिलितः। गत्वा यात्वा कस्यचित् कस्यापि लुब्धेश्वरस्य लम्पटप्रधानस्य गृहे भवने सन्धिं सुरङ्गं छित्वा खनित्वेत्यर्थः, पटभासः प्रेक्षणजालनम्, "प्रटभासः पेत्रवकम्" इति वैजयन्ती। पटलावेति पाठे पटहः वाद्यविशेषः तस्य अपि इति शब्दः तदवत् सूक्ष्मं क्षणं "सूक्ष्मं सूक्ष्मक्ष क्षणं तनुः" इति अविपत् इति गम्यमानान्तः, तद्वत् सूक्ष्मं क्षणं गृहमध्यं प्रहितः ज्ञातः येन शब्दरत्नावली। तेन आलोचिता आसादिता अन्तरं गृहमध्यं प्रहितः ज्ञातः येन स तथोक्तः। न विद्यते व्यथा यस्य अव्यथः व्यथाशून्यः आक्लिष्ट इत्यर्थः। निजगृहमिव आत्मगृहवत् अनुप्रविश्य चूरयित्वा नीवीं वणिजां मूलधनम् "मूलद्रव्यं परिपणो नीवी" इति हेमः। सारमहतीं सारः श्रेष्ठरत्नादिवस्तु तेन महतीं महार्घमूल्यवतीमित्यर्थः, आदाय गृहीत्वा निरगाम् बहिरगच्छम्।

(२५) नीलेति। नीलाः श्यामलाः नीरदाः मेघाः तेषां निकरः समूहः तेन पीवरं घनापुष्टं गाढमित्यर्थः यत् तिमिरम् अन्धकारं तेन निविडम् अतिशयं पीडितायाम् च्छन्नायाम्, राजवीथ्यां राजवर्त्मनि शतह्रदा विद्युत् तस्याः सम्पातमिव समुद्गममिव "सम्पातस्तु समुद्गमः" इत्यमरः। क्षणे क्षणकालम् आलोकम् प्रकाशम् अवचयम्

अमङ्गलम् अद्य किल प्रभाते भावीति ज्ञात्वा, प्रागेव प्रियतम-दत्तसङ्केता, वञ्चितस्वजना निर्गत्य, बाल्याभ्यस्तेन वर्त्मना, मन्मथैकाभिसरा, तदगारम् अभिसरामि तन्मां मुञ्च, 'गृहाण एतद्भाण्डम्' इति उन्मुच्य, मह्यम् अर्पितवती। दयमानस्ता-स्तामब्रवम्—'एहि साध्वि! त्वां नयेयं त्वत्प्रियतमम्' इति त्रिचतुराणि पदानि अचलम्। आपतच्च, दीपिकालोकपरि-लुप्यमानतिमिरभारं यष्टिकृपाणपाणिनागरिकबलम् अनल्पम्। दृष्ट्वा एव प्रवेपमानां कन्यकाम् अवदम्—'भद्रे! मा भैषीः, अस्त्ययम् असिद्वितीयो मे बाहुः। अपि तु, त्वदुः अयमुपायः

---

अवलोकयम्। अथ ततः असौ समीपतरा विद्युत् प्रकाशः इत्यर्थः। काचित् कापि उन्मिषद्भूषणा उन्मिषन्ति प्रस्फुरन्ति भूषणानि आभरणानि यस्याः सा तथोक्ता अत्यु-ज्ज्वलभूषणभूषितेत्यर्थः। युवतिः यूनी नगरमोषरोषिता नगरस्य मोषः चौर्यं तेन रोषिता रुष्टा नगरदेवतेव नगराधिष्ठात्रीदेवीव निःसम्बाधं निःसंकटं तस्य वेलायां समये निभृतसमये इत्यर्थः। "संकटं ना तु संबाधः" इत्यमरः। निःसृता निर्गता आवि-रासीत् समागतवती। वामु हे बाले का असि त्वामिति शेषः। क्व कुत्र यासि गच्छसि इति एवं सदयं दया करुणा तया सह वर्त्तमानं यथा तथा उक्ता कथिता त्रासगद्गदं शङ्काविक्लवम् अगादीत् अवादीत् उक्तवतीत्यर्थः। आर्य्य 'न्यूहलोच्छ्रत' इति ख्यात्। हे भद्र अस्यां पुर्य्यां नगर्य्याम् कुबेरदत्तनामा तन्नामधेयः अर्य्यवर्य्यः अर्य्येषु वर्य्यः श्रेष्ठः। यथाहि निघण्टुः "अर्य्यः स्वामिवैश्ययोः" इति। वसति अध्यास्ते, तस्य वैश्यस्य अहं कन्या पुत्री अस्मि। मे मम पिता जनकः अवत्याय अवनगरवास्तव्याय कस्मैचित् एकस्मै इभ्यकुमाराय धनिसुताय धनमित्रनाम्ने तदाख्याय जातमात्रां सद्योजातां मां भार्य्यां स्त्रियम् अन्वजानात् प्रतिज्ञातवान्। सः मे मम जनकः पुनः भूयः अत्युदारतया अत्यौदार्य्येण वदान्यतयेत्यर्थः, अस्मिन् धनमित्रे पित्रोः मातापित्रोः अन्ते अवसाने मृते इत्यर्थः अर्थिनां याचकानां वर्गः समूहः 'स्वात् निजैः स्वकीयैः वित्तैः धनैः दारिद्र्यं निर्धनत्वं क्रीत्वा परिक्रीणीयेव दरिद्रति सति अर्थिभ्यः अशेषधनं दत्त्वा निर्धनमुपगते सतीत्यर्थः, अथ ततःपरम् प्रीतैः दानशीलतया परितुष्टैः लोकैः अधिरोपितम् अर्पितम् अपरम् अन्यं धनमित्रादन्यदित्यर्थः, श्लाघ्यं प्रशस्तं नाम यस्य तस्मिन् तथोक्ते। उदारक

त्वदपेक्षया चिन्तितः, सोऽयम्, भावितविषवेगविक्रियः। (२६) त्वयापि अमी धाच्याः, 'निशि वयमिमां पुरीं प्रविष्टाः, दष्टश्च मम एष नायको दर्वीकरेण अमुष्मिन् सभागृहकोणे यदि वः कश्चित् मन्त्रवित्, कृपालुः स एनम् उज्जीवयन् मम प्राणान् आहरेत् अनाथायाः' इति। साऽपि बाला, गत्यन्तराभावात्, भयगद्गदस्वरा वाष्पदुर्दिनाक्षी बद्धवेपथुः, कथं कथमपि गत्वा, मदुक्तम् अन्वतिष्ठत्। अशयिषि च अहं भावित-

---

इति एवं तस्मिन् धनमित्रे वयति प्रार्थयमाने एव तरुणीभूतां यौवनाभिगतां माम् अधनः धनशून्यः इति हेतोः अदत्वा इतरस्मै अन्यस्मै कस्मैचित् एकस्मै चर्थपतिनाम्ने तदाख्याय यथार्थनाम्ने नाम्नोऽन्वार्थाय सार्थवाहाय वणिजे दित्सति दातुमिच्छति।

(२६) तदिति। अद्य अस्मिन् प्रभाते प्रत्युषे किल वार्त्तायां, तत् अमङ्गलं भावि भविष्यति इति ज्ञात्वा अवगम्य प्रागेव अयत एव प्रियतमः धनमित्रः तेन दत्तः प्रहितः संकेतः अभिसरनार्थमिङ्गितं यस्यै सा तथोक्ता। वञ्चितस्वजना वञ्चिता प्रतारिता स्वजनाः आत्मीयवर्गाः यया तादृशी। मन्मथः कन्दर्पः एकः अद्वितीयः अभिसरः सहायः यस्याः सा तथोक्ता। "सहायोऽनुचरः समाः" इत्यमरः। बाल्यं शैशवं तस्मिन् अभ्यस्तं परिज्ञातं तेन तथोक्तेन वर्त्मना मार्गेण तदागारं तस्य प्रियतमस्य आगारं भवनम् अभिसरामि गच्छामि। तत तस्मात् मां युवतिं मुञ्च त्यज, एतत् दृश्यमानं भाण्डं भूषणं "भाण्डं भूषणमात्रेऽपि" इति विश्वप्रकाशः। गृहाण आलम्बस्व इति एवम् उक्त्वेति शेषः, उन्मुच्य अङ्गादुत्थाय मह्यम् उपहारवर्म्मणे अर्पितवती प्रददौ। दयते असौ दयमानः कृपावानित्यर्थः, अहम् अपहारवर्म्मा अब्रवम् अकथयम्, साध्वि, हे, पतिव्रते एहि आगच्छ त्वत् तव प्रियतमं दयितं त्वां नयेयम् इति एवम् उक्त्वेति शेषः। त्रीणि चतुराणि तत्संख्यकानीत्यर्थः, पदानि चरणानि अचलम् अगच्छम्। दीपिका हस्तदीपः 'मशाल' इति यस्य ख्यातिः। तेषाम् आलोकेन परिलुप्यमानः विताड्यमानः तिमिरभारः अन्धकारसङ्घः येन तथाभूतम्। "दीपिका हस्तदीपः स्यात्" इति वैजयन्ती। अनल्पं बहुलं यष्टयः दण्डाः कृपाणाः तरवारयः पाणिषु यस्य तथोक्तम्। नगरे भवः नागरिकः तस्य बलं सैन्यं प्रहरिसमूह इत्यर्थः, आपतत् आगच्छदित्यर्थः।

विषवेगविक्रियः। तेषु कश्चित् नरेन्द्राभिमानी मां निर्वर्ण्य मुद्रातन्त्रमन्त्रध्यानादिभिश्च उपक्रम्य अकृतार्थः 'गत एवायं कालदष्टः। तथाहि स्तब्धश्यावमङ्गं रुद्धा दृष्टिः शान्त एवोष्मा। शुचा अलं वास! स्वोऽग्निसात् करिष्यामः। कोऽतिवर्त्तेत दैवम्' इति स्वगृहेतरैः प्रायात् (२७)। उत्थितश्च अहम् उदारकाय तां नीत्वा अब्रवम्—'अहमस्मि कोऽपि तस्करः, त्वद्गतेन एव चेतसा सहायभूतेन, त्वाम् इमाम् अभिसरन्तीम् अन्तरोपलभ्य कृपया त्वत्समीपमनैषम्, भूषणम् इदमस्याः' इत्यंशुपटलपाटितध्वान्तजालं तत् अर्पितवान्। उदारकस्तु तदादाय, सलज्जञ्च सहर्षञ्च ससम्भ्रमञ्च, माम् अभाषत—'आर्य! त्वया

---

दृष्टा संत्रासा एव वेपमानां कम्पमानां कन्यकां कुमारीम् अवदम् अकथयम्। भद्रे हे शोभने मा भैषीः भयं मा कार्षीः 'माङि लुङ्' इति लुङ्। अयं दृश्यमानः असिद्वितीयः असिना कृपाणेन द्वितीयः अपर इत्यर्थः, मे मम बाहुः भुजः अस्ति। अपि तु तथापीत्यर्थः, त्वदपेक्षया तवानुरोधेन अयं मृदुः लघुः उपायः साधनं चिन्तितः भावितः। भाविता सिद्धान्तिता विषस्य सर्पदंशनेन विकृतरक्तस्य वेगेन तीव्रगत्या विक्रिया विकारः यस्य तथाभूतः। सर्पदंशने मृतवत् अभिवर्त्ते इति भावः। अहं मृषे निद्राम् उपगच्छामि।

(२७) त्वयापीति। त्वयापि भवत्यापि अमी पुरुषाः वाच्याः वाचनीयाः त्वम् अहञ्च वयं 'अस्मदो द्वयोश्च' इति द्वयोरपि बहुवचनम्। निशि रात्रौ इमां अवन्त्यां पुरीं नगरीं प्रविष्टाः अभ्यागताः अस्मिन् दृश्यमाने सभागृहकोणे समाजगृहैकांशे दर्व्वीकरेण सर्पेण मम एषः रमोपतरः नाथकः वल्लभः दष्टः संक्रान्तः यदि यद्यपि वः युष्माकं मध्ये इत्यर्थः, कश्चित् कोऽपि मन्त्रवित् मान्त्रिकः मन्त्रशास्त्रज्ञः इत्यर्थः, स कृपालुः कृपाप्रवणः एनं मम वल्लभम् उज्जीवयन् निर्विषीकुर्वन् अनाथायाः गत्यन्तररहितायाः मम प्राणदः जीवनम् आहरेत् दद्यात्। सापि बाला कुमारी गत्यन्तराभावात् उपायान्तरविरहात् भयेन त्रासेन सगद्गदः अस्पष्टः तथाह माधवकरः—"आहत्य वायुः सकफोधमनीशब्दवाहिनी। नरान् करोत्यक्रियकान् मूकमिन्मिनगद्गदान्॥" इति स्वरः कण्ठरवः यस्याः सा तथोक्ता।

एव इयमस्यां निशि प्रिया मे दत्ता वाक् पुनः मम अपहृता, तथाहि न जाने वक्तुम्। त्वत्कर्म एतदद्भुतमिति, ननु ते सुशीलम् अद्भुतवत्प्रतिभाति नैवमन्येन अपि कृतपूर्वमिति प्रतिनियतैव वस्तुशक्तिः न हि त्वयि अन्यदीया लोभादयः। त्वया अद्य साधुतोन्मीलितेति तत् प्रायस्त्वत्पूर्वावदानेभ्यो न रोचते, दृष्टम् इदानीम् औदार्य्यस्य स्वरूपमिति त्वदाशयम् अननुमान्य न युक्तो निश्चयः त्वया अमुना सुकृतेन क्रीतोऽयं दासजन इति असारम् अतिगरीयसा क्रीणासीति स ते प्रज्ञाधिक्षेपः प्रियादानस्य प्रतिदानम् इदं शरीरम् इति तदलाभे निधनोन्मुखम् इदमपि त्वया एव दत्तम्, अथ वा एतावदत्र प्राप्तरूपम् अद्यप्रभृति भर्त्तव्योऽयं

---

वञ्जः जातः वेपथुः कम्पनं यस्याः तथोक्ता। कथंकथमपि येन केनापीत्यर्थः, गत्वा तेषां पुरुषान्तिकमिति शेषः। मदुक्तं मम व्याहृतम् अन्वतिष्ठत् अनुरूपं वर्णयामास। भाविता प्रकटिता विषविक्रिया विषविकारः येन स. तथोक्तः। अहम् अशयिषि शयितवान्। तेषु पुरुषेषु कश्चित् कोऽपि नरेन्द्राभिमानी नरेन्द्रः विषवैद्यः जाङ्गुलिकः इत्यर्थः, तम् आत्मानम् अभिमन्यन्ते इति तथोक्तः। "नरेन्द्रो वार्त्तिके राज्ञि विषवैद्ये च कथ्यते" इति विश्वप्रकाशः। मां निर्वर्ण्य दृष्ट्वेत्यर्थः, मुद्रा सर्पविषघ्नी नागमुद्रामणिविशेषः, तन्त्रं शिवोक्तशास्त्रं तदर्थविधिरिति भावः, मन्त्रं विषप्रतिषेधबीजादिकं, ध्यानं देवादीनां स्वरूपचिन्तनं स्तोत्रादिकमिति भावः; एतैः आदिभिः उपक्रम्य प्रारभ्य चिकित्सित्वेत्यर्थः, अलतार्थः अकृतकार्य्यः अयं पुरोवर्त्तिजनः कालदष्टः कालेन यमेन दष्टः, अतः गत एव पञ्चत्वं गत एव, तथाहि तमेवार्थम् अवगच्छेति भावः। विषप्रवर्णेन शुद्धं निःशेषं श्यावं श्यामलं "श्यावास्यता विषक्षतः" इति माधवाचार्य्यः। विषण्णमित्यर्थः। रुद्धा निमिलिता दृष्टिः दर्शनं उष्मा उत्तापः शान्त एव उपशमं गत एव। वास हे बाले, शुचा शोकेन अलं किं, शोकं परिहरेत्यर्थः। यः आगामिदिने अग्निसात् अग्न्यधीनं करिष्यामः धक्ष्याम इत्यर्थः। कः दैवं भाग्यम् अतिवर्त्तते अतिक्रामति न कोऽपीत्यर्थः। इति एवम् उक्त्वेति शेषः। इतरैः अन्यैः सह सहचरैरित्यर्थः। प्रयात् अपगच्छत्।

दासजनः' इति मम पादयोः अपतत् (२८)। उत्थाप्य च एनम् उरसोपश्लिष्य, अभाषिषि—'भद्र ! काऽस्य ते प्रतिपत्तिः' इति। सोऽभ्यधत्त, न शक्नोमि च एनाम् अत्र पित्रोः अनभ्यनुज्ञया उपयम्य जीवितुम् अतोऽस्याम् एव यामिन्यां देशमिमं जिहासामि, को वा अहं यथा त्वम् आज्ञापयसि' इति। अथ मया उक्तम्, अस्तु एतत्, स्वदेशो देशान्तरमिति नेयं गणना विदग्धस्य पुरुषस्य, किन्तु बालेयम् अनल्पसौकुमार्य्या कष्टाः प्रत्यवायभूयिष्ठाश्च कान्तारपथाः। शैथिल्यमिव किञ्चित्, प्रज्ञासत्त्वयोः अनर्थेन ईदृशेन देशत्यागेन सम्भाव्यते। तत्सह अनया सुखमिहैव वस्तव्यम्, एहि नयावैनां स्वमेव आवासम्' इति।

---

(२८) उत्थितश्चेति। अहम् उत्थितः शयनादिति शेषः। उदारकाय धनमित्रनाम्ने त्वां कन्यां नीत्वा समर्प्य अत्रवम् अकथयम्। अहं कोऽपि कश्चित् तस्करः चोरः अस्मि त्वद्गतेन त्वय्यर्पितेनेव चेतसा चित्तेन त्वां भवन्तम् अभिसरन्तीम् अभिसारिकारीत्या भवदन्तिकमागच्छन्तीमिति भावः। तथाहि दर्पणः "कान्तार्थिनी तु या याति संकेतं साभिसारिका" इति। इमां कन्याम् अन्तरा पथिमध्ये उपलभ्य प्राप्य कृपया दयाप्रवणेनेत्यर्थः, सहायभूतेन साहाय्यकारिणा भूत्वेति शेषः। त्वत् समीपं तवान्तिकम् अनैषम् नीतवान्। अस्याः बालायाः इदम् समीपतरं भूषणम् अलङ्कारः। इति प्रकारे। अंशवः किरणाः तेषां पटलाः चयाः तैः पाटितं विध्वस्तं ध्वान्तजालम् अन्धकारसमूहः येन तथाभूतम्। तत् भूषणम् अर्पितवान् ददौ। उदारकः तदाख्यः वणिक् तत्भूषणम् आदाय गृहीत्वा सलज्जं व्रीडया सहितं स्वरहस्य ज्ञानात्, सहर्षम् आनन्देन सहितं प्रियाः प्राप्तेरित्याशयः। ससम्भ्रमं संत्वरं यथातथा अभाषत अब्रवीत्। आर्य्य हे भद्र, त्वया भवता एव अस्यां निशि रात्रौ इयं प्रिया मे मह्यं दत्ता अर्पिता, पुनः अवधारणे। मम वाक् वाक्यम् अपहृता चोरिता, तथाहि अतएवेत्यर्थः, एतत् तत् कर्म्म तव कार्य्यम् एतस्यां घोरान्धकारायां रात्रौ मे प्रियायाः समर्पणमित्यर्थः। अद्भुतम् आश्चर्य्यम् इति वक्तुं स्वरूपकीर्त्तिं न जाने न समर्थोऽस्मीत्यर्थः। ननु अनुनये, ते तव सुशीलं चरित्रम् अद्भुतवत् आश्चर्य्यकारीव प्रतिभाति द्योतते। अन्येन केनापीत्यर्थः, एवं कर्म्म न कृतपूर्वं न कृतमित्यर्थः, इत्यपि मया वक्तुं न शक्यते

अविचारानुमतेन तेन, सद्य एवैनां तद्गृहम् उपनीय, तयैव अपसर्पभूतया तत्र मृद्भाण्डावशेषम् अचोरयाव (२८)। ततो निष्पत्य क्वचित् मुषितकं निधाय समुच्चलन्तौ, नागरिकपुरुषसम्पाते, मार्गपार्श्वशायिनं कञ्चित् मत्तवारणम् उपरि [पुरुष] पुच्छम् आकृष्य अध्यारोहाव। ग्रैवेयप्रोतपादयुगलेन च मया उत्थाप्यमान एव पातिताधोरणपृथुलोरःस्थलपरिणतः पुरीत-

---

त्वदन्तिके इति शेषः। यतः वस्तुनः शक्तिः सामर्थ्यं प्रतिनियतैव, एकस्य वस्तुनः या शक्तिः सा तद्गतैव, इतरस्य सा शक्तिः न सम्भवति, अतएव नैवमन्येन कृतपूर्वमिति वचनस्यापि अवसरो नासीत्याशयः। त्वयि भवति अन्यदीया इतरपुरुषसम्बन्धीया लोभादयः दुराकाङ्क्षा प्रभृतयः नहि वर्त्तते इति शेषः। अद्य त्वया साधुता वदान्यता उन्मिलिता संसूचिता इति एवं न मया तावन्तं वाच्यमिति शेषः। यतः तत् वचनं प्रायः बाहुल्येन त्वत् तव पूर्ववदान्येभ्यः पूर्वकृतेभ्यः महत्कर्मभ्यः न रोचते न स्वदते। इदानीम् साम्प्रतम् औदार्य्यस्य उदारतायाः स्वरूपं वासवद्रूपमिति दृष्टम्, त्वदाशयं तव अभिप्रायम् अननुमान्य अनुमतिमकारयित्वा निश्चयः निर्द्धारणं न युक्तः न कर्त्तव्यः, भवदाशये इतोऽप्यधिकौदार्य्यस्य समन्वयसम्भवात् मत्प्रार्थ्यं तत् कथमेतस्मिन्नेव कर्म्मणि भवतः औदार्य्यस्य परिमाणनिर्णयः इति तात्पर्य्यम्। त्वया भवता अमुना सुकृतेन सत्कार्य्येण अयं दासजनः मद्रूप पुत्पर्थः, क्रीतः, यतः असारम् अकिञ्चित्करम् अतिगरीयसा बहुतरेण कर्म्मणा मामिति शेषः क्रीणासि भक्षासि इति हेतोः स भवदन्तिके तादृगालापः ते तव प्रज्ञाधिक्षेपः प्रज्ञया मत्या अधिक्षेपः निन्दा, तथा प्रकाटने भवतः बुद्धिनिन्दा स्यादित्याशयः। प्रियादानस्य वल्लभर्त्पणस्य इदं शरीरं देहं प्रतिदानं प्रतिरूपं दानम्, यतः तदलाभे तस्याः वल्लभायाः अलाभे अप्राप्तौ निधनोन्मुखं मरणोद्यतम् इदं शरीरमपि त्वया भवतैव दत्तम् प्रत्यर्पितम्। अथवा किं वैत्यर्थः, अत्र विषये एतावत् वचनं प्राप्तरूपं युक्तिरूपम्। प्रेष्यस्तं प्राप्तमित्यर्थः। अद्यप्रभृति अद्यारभ्य अयं समीपतरः दासजनः मद्रूपजन इत्यर्थः, भर्त्तव्यः पोष्टव्यः इति तस्य पादयोः चरणयोः अपतत् पतितवान्।

(२९) उत्थाप्येति। एनं कन्यानायकम् उत्थाप्य उत्तोल्य उरसा वक्षसा उपश्लिष्य आलिङ्ग्य अभाषि अवादि मयेति शेषः। भद्र, हे सौम्य! अद्य ते तव का प्रतिपत्तिः कर्त्तव्यता? सः धनमित्रः अभ्यधत्त अब्रवीत्, अत्र नगरे पितोः मातुः पितुश्च अभ्य-

सन्तापपरीतदशाकाण्ड: स रचितकवलम् अचिरीत्। अध्यंसयाव च अमुनेव अथ पतिर्भवनम्। अपवाह्य च क्वचन जीर्णोद्याने शाखाग्राहिकया च अवातराव। स्वगृहगतौ च स्नातौ शयनम् अध्यशिश्रियाव (३०)।

---

तुज्ञया अननुमत्या उपयम्य विवाहं कृत्वा जीवितुं प्राणान् धारयितुं न शक्नोमि सत्यां भवामि। अत एव अस्मात् अस्यां यामिन्याम् अद्य रात्रौ इमं देशं नगरं जिहासामि त्यक्तुमिच्छामि को वा अहम् इमम् उपायचिन्तने भवानेव तच्चिन्तने समर्थ इति भाव:। इति समाप्तौ। अथ तत: मया अपहारवर्म्मणा उक्तं व्याहृतम्, अस्तु एतत् भवतु तावदित्यर्थ:, विदग्धस्य चतुरस्य पुरुषस्य स्वदेश: आत्माधिकृत इत्यर्थ:, देशान्तरं भिन्नदेशम् इति इयं गणना न, किन्तु किं पुन: प्रागुक्तिविरुद्धोऽर्थ:। इयं तव वल्लभा वाला कुमारी अनल्पसौकुमार्या अत्यन्तसुकुमारदेहा,कान्तारस्य वनस्य पन्थान: मार्गा: कष्टा: क्लेशकरा:, प्रत्यवाय: वाधकं तेन भूयिष्ठा: बहुला: पूर्णा: इत्यर्थ:, "बाधकं प्रत्यवाय: स्यात्" इत्यजय:। ईदृशेन कुथितरूपेण अनर्थेन अर्थशून्येन देशत्यागेन देशमपहाय द्रावावयोरेव गमनेनेत्यर्थ:, प्रज्ञा बुद्धि: सत्त्वं बलं तयो: किञ्चित् मनाक् शैथिल्यमिव चय इव सम्भाव्यते परिकल्प्यते। अज्ञा: सामर्थ्यरहितायेव एवमाचरन्तीत्याशय:। तत् तस्मादतएवेत्यर्थ:, अनया कामिन्या सह इहैव अत्र नगरे वस्तव्यम् वास: कर्त्तव्य: त्वयेति शेष:। एहि आगच्छ स्वयमेव आत्मना एनां तव वल्लभाम् आवासं गृहं नयाव प्रापयाव आवामिति शेष:। अविचारानुमतेन अविचारेण विचारशून्येन अनुमतम् अनुमति: तेन निर्व्विचारप्रतिपन्नेनेत्यर्थ:। सद्य: तत्क्षणे एव एनां कुमारीं तद्गृहं तस्य कुवेरदत्तस्य गृहम् उपनीय नीत्वा तत्र कुवेरदत्तगृहे अपसर्पभूतया चरभूतया "अपसर्पश्चर: स्पश:" इत्यमर:। तया वल्लभयेव मृदा मृत्तिकया निर्म्मितं भाण्डं भाजनं मृद्भाण्डम् तत् अवशेष: यस्मिन् तत् यथा तथा अवचोरयाव चोरितवन्तौ धनमिव: अहञ्चेति शेष:।

(३०) तत: इति। तत: तस्मात् निष्पत्य निर्गत्य क्वचित् प्रदेशे मुषितकं चोरितद्रव्यजातं निधाय प्रोथित्वा समुच्चलन्तौ समागच्छन्तौ नागरिकाणां नगरसंसर्गीयाणां पुरुषाणां सम्पाते त्वरितावपतने सति मार्गाणां पथां पार्श्व: एकदेश: तस्मिन् शेते य: तं तथोक्तं, कञ्चित् एकं मत्तवारणं मत्तहस्तिनं पुच्छं लाङ्गूलम् आक्रम्य धृत्वा उपरि पृष्ठे अध्यारोहाव अधिरूढौ। उपरि पुरुषमिति पाठे उपरि पुरुषम् आधोरणं आक्रम्य भुवि निपात्येत्यर्थ:। ये वेये कण्ठरज्जौ प्रोतं निवेशितं पादयुगलं चरणद्वयं येन तथोक्तेन।

तावदेव उदगात् उदधेः उदयाचलेन्द्रपद्मरागशृङ्गकल्पं कल्पद्रुमहेमपल्लवापीड़पाटलं पतङ्गमण्डलम् । उत्थाय च धौतवक्त्रौ प्रगेतनानि मङ्गलानि अनुष्ठाय अस्मत्कर्मतुमुलं पुरम् अनुविचरन्तावशृणुव वरवधूगृहेषु कोलाहलम् । अथ अर्थैरर्थपतिः कुबेरदत्तम् आश्वास्य कुलपालिकाविवाहं मासावधिकम् अकल्पयत् । उपह्वरे पुनरिभ्यशिश्वयं धनमित्रम्—'उपतिष्ठ सखे ! एकान्त एव चर्मरत्नभस्त्रिकाम् इमां पुरस्कृत्य अङ्गराजम् आचक्ष्व च जानात्येव देवो नैककोटिसारस्य वसुमित्रस्य मां धनमित्रं नामैकपुत्रं, सोऽहं मूलहरत्वमेत्य अर्थिवर्गात् अस्मि अवज्ञातः (२१)। मदर्थमेव संवर्धितायां कुलपालिकायां

---

"ग्रीवाविभूषणे रज्जौ ग्रैवं ग्रैवेयमित्यपि" इति वैजयन्ती । मया पातितः अधःक्षिप्तः यः आधोरणः हस्तिपकः तस्य प्रथुले विशाले उरःस्थले वक्षसि परिणतः तिर्यग्दन्तप्रहारो गजः "तिर्यक्दन्तप्रहारस्तु गजः परिणतो मतः" इति हलायुधः । परीतल्लता अन्त्रवल्ली तया परीतं वेष्टितं दन्तकाण्डं यस्य स तथोक्तः, उत्थाप्यमानः आरोह्यमाणः एव स गजः रक्षिवलं रक्षिणां नागरिकाणां बलं सैन्यम् अक्षिणोत् क्षपितवान् क्षयमनयदित्यर्थः । अमुना मत्तगजेन अर्थपतेः तन्नाम्नो धनिपुत्रस्य भवनं गृहं अध्वंसयाव: ध्वंसितवन्तौ । क्वचन कस्मिन् जीर्णोद्याने पुराणोपवने अपवाह्य नीत्वा वारणमिति शेषः । शाखाग्राकृष्टया शाखाग्रहणेनेत्यर्थः, अवतराव: अवतीर्णवन्तौ उत्तीर्णावित्यर्थः । स्नातौ अवगाहितौ स्वगृहगतौ आत्मगृहगतौ शयनं शय्याम् अध्यशिश्याव अधिष्ठितवन्तौ ।

(२१) तावदिति । उदधेः समुद्रात् उदयाचलेन्द्रः पर्वतश्रेष्ठः उदयगिरिः तस्य यत् पद्मरागशृङ्गं पद्मरागः लोहितकः रक्तवर्णमणिविशेषः, तन्मयं शृङ्गं शिखरं तत्कल्पं ततः ईषदूनम् । कल्पद्रुमस्य देवतरोः हेमपल्लवाः स्वर्णकिसलयाः तेषाम् आपीड़ः स्रक्, "आपीड़ः शेखरे व्राते" इति वैजयन्ती । तद्वत् पाटलं श्वेतरक्तम् "श्वेतरक्तस्तु पाटलः" इत्यमरः । पतङ्गस्य सूर्यस्य मण्डलं परिधिः "पतङ्गौ पक्षिसूर्यौ च" इत्यमरः । उदगात् उदियाय तावदेव तत्कालेनैव । उत्थाय शयनादिति शेषः, धौतवक्त्रौ प्रक्षालितमुखौ आवामिति शेषः । प्रगेतनानि प्रातःकालोचितानि 'प्राह्णे प्रगेऽव्ययेभ्यः' इति ट्युल् तुट् च । मङ्गलानि शुभसूचककार्याणि अनुष्ठाय विधाय अनुविचरन्तौ विस्रब्धभावेन

महादारिद्र्यदोषात् पुनः कुबेरदत्तेन दुहितरि अर्थपतये दित्सितायाम् उद्वेगात् उज्झितुम् असून्, उपनगरभवं जरद्वनम् अवगाह्य कण्ठन्यस्तशस्त्रिकः केनापि जटाधरेण निवार्य्य एवमुक्तः —'किं ते साहसस्य मूलम्' ? इति, मयोक्तम्—'अवज्ञासोदर्य्यं दारिद्र्यम्' इति। स पुनरेवं कृपालुः अन्वग्रहीत्—'तात ! मूढोऽसि, न अन्यत् पापिष्ठतमम् आत्मत्यागात्। आत्मानम् आत्मनानवसाद्यैव उद्धरन्ति सन्तः। सन्ति उपाया धनार्जनस्य बहवः, नैकोऽपि छिन्नकण्ठप्रतिसन्धानपूर्वस्य प्राणलाभस्य, किमनेन ? सोऽस्मि अहं मन्त्रसिद्धः। साधिता इयं लक्षग्राहिणी चर्मरत्नभस्त्रिका, चिरम् अहमस्याः प्रसादात् कामरूपेषु कामप्रदः, प्रजानामवात्सम्। मत्सरिण्यां जरसि भूमिस्वर्गम् अतोदेशे प्रवेक्ष्यन् आगतः, ताम् इमां प्रतिगृहाण, मदन्यत्र च इयं वणिग्भ्यो वारमुख्याभ्यो वा दुग्धे इति हि तद्गता

---

भ्रमन्तौ आवाम् तस्मिन्निति शेषः। वरवधूनां श्रेष्ठस्त्रीणां गृहेषु भवनेषु अस्माकं कर्म, चौर्य्यकार्य्यं तैः तुमुलम् व्याकुलरवं "तुमुलो व्याकुलरवः" इति हेमचन्द्रः। पुरं नगरं कोलाहलं कलकलं शब्दपूर्णमित्यर्थः, अशृण्व आकर्णितवन्तौ। अथ ततःपरम्, अर्थपतिः तदाख्यः वणिक् अर्थैः धनैः कुबेरदत्तं तन्नामानम् आश्वास्य सान्त्वयित्वा कुलपालिकायाः तदाख्यायाः कन्यायाः विवाहं पाणिग्रहणं मासावधिकं मासः अवधिः सीमा यस्य तथोक्तम्, अद्यप्रभृति मासमध्ये यस्मिन् कस्मिन्नपि दिवसे पाणिपीडनीयमिति अकल्पयत् अवधारयामास। उपह्वरे रहसि "रहोऽन्तिकमुपह्वरे" इत्यमरः। पुनः भूयः धनमित्रं तन्नामधेयं अश्विनयम् शिक्षयामास। सखे भोः धनमित्र ! उपतिष्ठ भजस्व एकान्ते निर्जने एव इमां पुरोवर्त्तिनीं चर्मरत्नस्य उत्तमचर्म्मणः भस्त्रिका अग्निदीपकचर्म्मनिर्म्मितयन्त्रविशेषः, तां तथोक्ताम्, पुरस्कृत्य अग्रे धृत्वा अङ्गराजम् अङ्गाधिपम् आचक्ष्व कथय, देवः महाराजः नैककोटिसारस्य नैककोट्यः अनेककोटिसंख्याः साराः मूलधनानि यस्य तादृशस्य वसुमित्रस्य तत्संज्ञकस्य एकपुत्रं सुतं धनमित्रं नाम मां जानाति अवगच्छति एव स धनमित्रः अहं मूलहरत्वं विलुप्तमूलधनत्वम् एत्य प्राप्य अर्थिवर्गात् प्रार्थिसमूहात् अवज्ञातः अनादृतः अस्मि भवामि।

प्रतीतिः (३२)। किन्तु यस्मकाशात् अन्यायावप्तं, तत् तस्मै प्रत्यर्पणीयं, न्यायार्जितन्तु, देवब्राह्मणेभ्यः त्याज्यम्। अथ इयं देवता इव शुचौ देशे निवेश्य अर्च्यमाना प्रातः प्रातः सुवर्ण-पुर्णेन दृश्यते। 'स एष कल्पः' इति बद्धाञ्जलये मह्यम् एनां दत्त्वा किमपि गावच्छिद्रं प्राविशत्। इयञ्च रत्नभूता चर्म-

(३२) मदर्थमिति। मह्यं दानार्थमेव मदर्थमेव, सम्वर्द्धितायां परिपोषितायां कुलपालिकायां कन्यायां "कन्या तु कुलपालिका" इत्यमरः। अथवा तन्नामवत्याम्। कुवेरदत्तेन तन्नामधेयेन मद्दारिद्र्यदोषात् निर्द्धनत्वात् अर्थपतये तन्नाम्ने पुनः दुहितरि सुतायां दित्सितायां दातुमिष्टायाम् उद्वेगात् विरक्तजन्यदुःखात् नगरस्य समीपम् उपनगरं तस्मिन् भवं स्थितं जरद्वनं जीर्णोद्यानम् प्रचाररहितमित्यर्थः, अवगाह्य प्रविश्य असून् प्राणान् उज्झितुं त्यक्तुं कण्ठन्यस्तशस्त्रिकः कण्ठे गले न्यस्ता अर्पिता शस्त्रिका छुरिका येन स तथोक्तः। केनापि चन्द्रानाम्ना जटाधरेण जटामण्डितशिरसा सन्न्यासिनेत्यर्थः, निवार्य निषिद्ध्य एवं वक्ष्यमाणरूपम् उक्तः कथितः। ते तव साहसस्य एतादृशोद्योगस्य मूलं कारणम् किम् इति, मयोक्तम् मया कथितम्। अवज्ञा अनादरः तस्याः सोदर्या सहोदरा यस्य तादृशं तत्तुल्यमित्यर्थः, दारिद्र्यं निर्धनत्वम् इति, कृपालुः दयाप्रवणः सः जटाधरः पुनः एवं वक्ष्यमाणरूपम् अन्वग्रहीत् सदयमुवाच तात, हे अर्भक, लघुवुद्धे इत्यर्थः, "तातस्तु वालकेऽर्भके" इति केशवः। मूढः मूर्खः असि, आत्मत्यागात् प्राणपातात् अन्यत् अपरं पापिष्ठतमम् अतिपातकं न विद्यते इति शेषः। सन्तः सज्जनः आत्मना स्वेन आत्मानम् अनवसाद्य अविनाश्यैव उद्धरन्ति वाधन्ते। धनार्ज्जनस्य अर्थागमस्य वहवः अनेके उपायाः साधनानि सन्ति विद्यन्ते, छिन्नः कर्त्तितः यः कण्ठः गलः तस्य प्रति-सन्धानं पुनः सम्बन्धः योजनमित्यर्थः, तत्पूर्वस्य प्राणलोभस्य जीवनप्राप्तेः न एकोऽपि उपायः इत्यर्थः, अनेन जीवनत्यागेन किं, न किमपीत्यर्थः, सोऽहम् प्रसिद्धः मन्त्रसिद्धः मन्त्राराधनेनाष्टसिद्धैश्वर्य्यवानित्यर्थः, अस्मि भवामि। लक्षवाहिणी लक्षं लक्षसंख्यकं रवं वाहयितुं शीलं यस्याः सा प्रतिदिनलक्षमुद्राप्रसविणीत्यर्थः, इयं प्रदृश्यमाणा चर्मभस्त्रिका साधिता सिद्धीकृता। अहं कामरूपेषु स्वनामप्रसिद्धप्रदेशेषु प्रजानां जनानाम् अस्याः भस्त्रायाः प्रसादात् अनुग्रहात् धामप्रदः वाञ्छितप्रदाता सन् चिरं वहुदिनम् अनामसम् वसतिमकरवम्। मत्सरिण्यां द्वेषकारिण्यां जरसि वार्द्धके सत्यां अत एतद्देशे प्रदेशे भूमिस्वर्गे भूम्यां स्वर्ग इव स्वर्गः तम्, प्रविचन् अवलोकयन् आगः

भस्त्रिका देवाय अनिवेद्य न उपजीव्या इत्यानीता, परन्तु देवः प्रमाणम्' इति। राजा च नियतम् एवं वक्ष्यति—'भद्र! प्रीतोऽस्मि' गच्छ यथेष्टम् एनाम् उपभुङ्क्ष्व' इति। भूयश्च ब्रूहि—'यथा न कश्चित् एनां मुष्णाति, तथा अनुगृह्यताम्' इति। तदपि अवश्यम् असौ अभ्युपैष्यति (२२)। ततः स्वगृहमेत्य यथोक्तम् अर्थत्यागं कृत्वा, दिने दिने वरिवस्यमानां

---

समुपस्थितः, तां प्रसिद्धाम् इमां प्रत्यक्षीभूतां भस्त्रां प्रतिग्रहाय ग्रहणं स्वीकुरु, इयं मम मदन्यत्र मत्तः भिन्नः मां विहायान्यत्रेत्यर्थः, वणिग्भ्यः वैश्येभ्यः वारमुख्याभ्यः वाराङ्गनाभ्यः वा दुग्धे लक्षमुद्राः प्रसूते, मदन्ये वाराङ्गनासु वैश्येषु च लक्षमुद्राः सूते नान्येभ्यः इति भावः। हि निश्चितम्, "हि हेतावधारणे" इत्यमरः। इति एवं तद्गता चर्मभस्त्रिकानिष्ठा प्रतीतिःख्यातिः।

(२२) किन्त्विति। किन्तु परन्तु यत् सकाशात् यस्यान्तिकात् अन्यायेन प्रवञ्चनया अपहृतं गृहीतं तत् धनं तस्मै धनिने प्रत्यर्पणीयं प्रदातव्यम्, न्यायार्जितं तत्तु विधिनोपार्जितन्तु देवब्राह्मणेभ्यः देवतोद्देशे ब्राह्मणोद्देशे चेत्यर्थः, त्याज्यम् अर्पणीयम्। अथ ततःपरम्, सत्पात्रादिषु दानानन्तरमित्यर्थः। देवता इव इयं चर्मभस्त्रिका शुचौ देशे गूढप्रदेशे निवेश्य स्थापयित्वा अर्च्यमाना पूज्यमाना प्रातः प्रातः वीप्सायां द्विर्वचनम्। प्रतिप्रातः इत्यर्थः, सुवर्णपूर्णा हेमप्रपूरिता एव भस्त्रेत्यर्थः, दृश्यते अवलोक्यते, स एव कल्पः प्रकारः। इति एवम् उक्तेति शेषः। बद्धाञ्जलये युक्तपाणये मह्यं एनां चर्मभस्त्रां दत्त्वा समर्प्य किमपि किञ्चन यत्किञ्चिद् छिद्रं गिरिविवरम् "अद्रिगोत्रगिरिग्रावाचलशैल शिलोच्चयाः" इत्यमरः। प्राविशत् अन्तर्जगाम। इयं रत्नभूता अस्य इद्रूपा चर्मभस्त्रिका देवाय महाराजाय अनिवेद्य अननुज्ञाप्य न उपजीव्या भोक्तव्या इति हेतोः आनीता महाराजस्य समीपं प्रापितेत्यर्थः, परन्तु किन्तु देवः महाराजः प्रमाणं सदसत् निर्णयेन प्रमाता। राजा महाराजः नियतम् अवश्यम् एवं वक्ष्यमाणरूपं वक्ष्यति वदिष्यति। भद्र हे सौम्य, प्रीतः सन्तुष्टः अस्मि, अतः गच्छ स्वाभीष्टदेशं याहि, यथेष्टम् इच्छानुरूपम् एनां चर्मभस्त्रिकाम् उपभुङ्क्ष्व स्वायत्ताधीनं कुरु इत्यर्थः। भूयः पुनश्च ब्रूहि वदति, यथा येनप्रकारेण कश्चित् कोऽपि एनां चर्मभस्त्रिकां न मुष्णाति चोरयति, तथा तद्वत् अनुगृह्यतां कृतार्थीक्रियताम् इति, असौ राजा तदपि कथितानुरूपमित्यर्थं, अवश्यं निश्चितम् अभ्युपैष्यति अङ्गीकरिष्यति।

स्तेयलब्धैः अर्थैः नक्तमापूर्य्य प्राह्णे लोकाय दर्शयिष्यसि। ततः कुबेरदत्तस्तृणाय मत्वार्थपतिम् अर्थलुब्धः, कन्यकया स्वयमेव त्वाम् उपस्थास्यति। अथ कुपितोऽर्थपतिः व्यवहर्तुम् अर्थगर्वात् अभियोक्ष्यते, तच्च भूयिष्ठैः उपायैः कौपीनावशेषं करिष्यावः। स्वकञ्च चौर्य्यम् अनेनैव अभ्युपायेन सुप्रच्छन्नं भविष्यति' इति। हृष्टश्च धनमित्रो यथोक्तम् अन्वतिष्ठत्। तदहरेव मन्नियोगाद्विमर्दकोऽर्थपतिसेवाभियुक्तः तस्योदारके वैरम् अभ्यवर्द्धयत्। अर्थलुब्धश्च कुबेरदत्तो निराकृत्य अर्थपतिं धनमित्राय एव तनयां सानुनयं प्रादित्सत्। प्रत्यवभ्रात् च अर्थपतिः (२४)।

---

(२४) ततः इति। ततः अनन्तरं स्वगृहम् आत्मभवनम् एत्य यात्वा यथोक्तं कथितानुरूपम् अर्थत्यागम् अर्थस्य दानं कृत्वा दिने दिने प्रत्यहं स्तेयलब्धैः स्तेयेन चौर्य्येण लब्धैः प्राप्तैः अर्थैः धनैः वरिवस्यमानां सेव्यमानाम् एनां भस्त्रामिति शेषः। "वरिवस्या तु शुश्रूषा" इत्यमरः। नक्तं रात्रौ आपूर्य्य पूरयित्वा प्राह्णे प्रातः लोकाय जनाय दर्शयिष्यसि अवलोकयिष्यसि। ततः ततःपरम्, अर्थलुब्धः धनगृध्नुः कुबेरदत्तः अर्थपतिं तन्नामानं वणिजं तृणाय लघुत्वाय मत्वा ज्ञात्वा ('मन्यकर्म्मण्यनादरे विभाषाप्राणिषु' इति मनः योगे चतुर्थी।) स्वयमेव आत्मनैव कन्यया तव वल्लभया सह त्वां भवन्तम् उपस्थास्यति आराधयिष्यति। अथ अनन्तरम् अर्थगर्वात् धनमदात् कुपितः क्रुद्धः अर्थपतिः व्यवहर्तुं "विवाद" कर्त्तुम् ("विवादः व्यवहारः स्यात्" इत्यमरः)। अभियोक्ष्यते उद्योक्ष्यते द्वेषं करिष्यतीत्यर्थः। तम् अर्थपतिं भूयः पुनः चित्रैः बहुधैः उपायैः साधनैः कौपीनं चीरम् अवशिष्य इति तथा करिष्यावः। स्वकम् आत्मीयं चौर्य्यं स्तेयं अनेनैव कथितरूपकृतेन अभ्युपायेन साधनेन सुप्रच्छन्नं सुगुप्तं भविष्यति इति। हृष्टः प्रीतः हर्षं प्राप्त इत्यर्थः, धनमित्रः तदाख्योवणिक् यथोक्तं कथितानुरूपं अन्वतिष्ठत् कथितानुरूपमाचचार। तदहरेव तस्मिन्नेव दिने मन्नियोगात् मम नियोगः निदेशः तस्मात् विमर्द्दकः मद्धूर्तसुहृत्, अर्थपतेः सेवायां शुश्रूषणे अभियुक्तः सम्बद्धः तस्य अर्थपतेः उदारके धनमित्रे वैरं द्वेषम् अभ्यवर्द्धयत् अभिवर्द्धितवान्। अर्थलुब्धः अर्थगृध्नुः कुबेरदत्तः कन्यापिता अर्थपतिं निराकृत्य पराकृत्य धनमित्राय तनयां एव

एषु एव दिवसेषु काममञ्जर्याः स्वसा यवीयसी राग-मञ्जरी नाम पञ्चवीरगोष्ठे सङ्गीतकम् अनुष्ठास्यति इति सान्द्रादरः समागमत् नागरजनः। स च अहं सह सख्या धन-मित्रेण तत्र सन्यधिषि। प्रवृत्तनृत्यायाश्च तस्यां द्वितीयं रङ्गपीठं मम अभूत् मनः। तद्दृष्टिविभ्रमोत्पलवनकृतचापाश्रयश्च पञ्चशरो भावरसानां सामग्र्यात् समुदितबल इव माम् अतिमात्रम् अव्यथयत्। अथ असौ नगरदेवतेव नगरमोषरोषिता लीलाकटाक्षमालाशृङ्खलाभिः नीलोत्पलपलाशदामश्यामलाभिः मामबध्नात् (२५)। नृत्योत्थिता च सा स्निग्धशोभिनी,—

---

सानुनयं विनयपूर्वकं तनयां सुतां प्रादित्सत् दातुमैच्छत् अर्थपतिः प्रत्यवध्नात् प्रतिबन्धं चकार।

(२५) एष्विति। एषु एव दिवसेषु एतावत्सु दिनेषु काममञ्जर्याः गणिकायाः यवीयसी कनिष्ठा स्वसा भगिनी रागमञ्जरी नाम तन्नामधेया पञ्चवीरगोष्ठे जानपद-सभायां "तत् पञ्चवीरगोष्ठन्तु यत् जानपदं सदः" इति कोषकारः। सङ्गीतकं गीतवाद्यनृत्यादिकं यदाह सङ्गीतपारिजाते—"गीतवादित्रनृत्यानां त्रयं सङ्गीतमुच्यते। मानस्याच प्रधानत्वात् तत् सङ्गीतकमुच्यते॥" इति अनुष्ठास्यति अन्वाचरति। सान्द्रादरः गाढ़ानन्दः नागरजनः नागरिकोजनः समागमत् समुपागतवान्। सोऽहम् अपहारवर्मा धनमित्रेण सख्या सुहृदा सह तत्र सभायां सन्यधिषि सन्निधानमकार्षम्। प्रवृत्तम् आरब्धं नृत्यं लास्यं यया तथोक्तायाम् तस्यां रागमञ्जर्यां मम मनः चित्तं द्वितीयम् अपरं रङ्गपीठं नृत्यस्थानम् अभूत्। नृत्यसभायां तामीक्षमाणेनानिशं अत्यैसाचलत्वात् मन्मनः रङ्गस्थानमिवेति भावः। तत् तस्याः रागमञ्जर्याः दृष्टेः ईक्षणस्य विभ्रमः विपर्ययः एव उत्पलवनम् इन्दीवरमाला सत् उत्कृष्टम् चापं धनुः आश्रयः अवलम्बनं यस्य स तथोक्तः। पञ्चशरः कामः, भावाः विभावादयः तथाहि दर्पणे—"निर्विकारात्मके चित्ते भावः प्रथमविक्रिया" इति। त एव रसाः शृङ्गारादयः तथा च—"शृङ्गारवीर-करुणहास्यवीरभयानकाः। बीभत्सरौद्रे च रसाः" इति। तेषां सामग्र्यात् सम्यगाविर्भावात् समुदितबलः इव सम्पूर्णसामर्थ्यमिव माम् अतिमात्रं निर्भरम् अव्यथयत् आपीड़यत्। अथ ततः असौ रागमञ्जरी नगरदेवतेव नगराधिष्ठात्री देवीव नगरस्य मोषः चौर्यं तेन रोषिता रुष्टा तादृशी, नीलोत्पलानाम् इन्दिवराणां

किं विलासात्, किम् अभिलाषात्, किम् अकस्मादेव वा, न जाने—असकृत् मां सखीभिः अपि अनुपलक्षितेन अपाङ्ग-प्रेक्षितेन सविभ्रमारेचितभ्रूलतम् अभिवीक्ष्य सापदेशञ्च किञ्चित् आविष्कृतदशनचन्द्रिकं स्मित्वा लोकलोचनमानसानुयाता प्रातिष्ठत। सोऽहं स्वगृहमेत्य दुर्निवारयोत्कण्ठया दूरीकृताहारस्पृहः शिरःशूलस्पर्शनम् अपदिशन् विविक्ते तल्पे लुलितैः अवयवैः अशयिषि। अतिनिपुणतस्य मदनतापे माम् अभ्युपेत्य धनमित्रो रहसि अकथयत्—'सखे! सैव धन्या गणिकादारिका, यामेवं भवन्मनोऽभिनिविशते। तस्याश्च मया सुलक्षिता भावप्रवृत्तिः तामपि अचिरात् अयुग्मशरः शरशयने शाययिष्यति। स्थानाभिनिवेशिनोश्च वाम् अयत्नसाध्यः समागमः (२६)। किन्तु सा किल वारकन्यका गणिकास्वधर्म-प्रतीपगामिना भद्रोदारेण आशयेन समगिरत—'गुणशुल्काहं

---

पलाशानि पत्राणि तेषां दाम समूहः तस्य श्यामेला: नीला: ताभिः तथोक्ताभिः। लीला शृङ्गारभावचेष्टा तथाहि दर्पणः—"अङ्गैर्वेशैरलङ्कारैः प्रेमभिर्वचनैरपि। प्रीति-प्रयोजितैर्लीलां प्रियस्यानुकृतिं विदुः॥" इति। तथा कटाक्षाणि अपाङ्गदर्शनानि तेषां माला: श्रेण्यः तासां शृङ्खला: क्रमबन्धनानि ताभिः, माम् अबध्नात् बबन्ध।

२५। नृत्येति। सिद्धेः मनोरथीभूतार्थस्य लाभेन शोभते प्रद्युम्यतीति तथा भूता वाञ्छितार्थ-लाभहृष्टेत्यर्थः। नृत्याय लास्याय उत्थिता उद्युक्ता सा गणिका किं विलासात् विलासमाह भरतः "यौवनभ्रमं चानुगतो विकारोगत्यासनस्थानविलोकनेषु। तथा स्यु तं भ्रोधवमतञ्जनी च विकुलन चात्मगतं विलासः॥" इति। अभिलाषात् आकाङ्क्षायाः, अकस्मात् सम्भ्रमात् वा नजाने वेद्मि, सखीभिः वयस्याभिरपि किमन्यैरिति भावः, अपाङ्गेन नयनप्रान्तेन यत् प्रेक्षणम् अवलोकनं तेन, असकृत् वारं वारं मां सविभ्रमं सविलासम् आरेचिता वक्रीकृता भ्रूलता यस्मिन् तत् यथा तथा अभिवीक्ष्य संवीक्ष्य सापदेशं सव्याजं किञ्चित् अल्पम् आविष्कृता प्रकाशिता, दशनानां दन्तानां चन्द्रिका ज्योत्स्ना यत्र तत् यथा तथा स्मित्वा हसित्वा लोकानां लोचनानि नेत्राणि तैः मानसैः अन्तः-करणैश्च अनुयाता अनुगता प्रातिष्ठत् अभिवर्त्तत। सोऽहं स्वगृहम् आत्मावासम् एत्य

न धनशुल्का, न च पाणिग्रहणादृते अन्यभोग्यं यौवनम्" इति। तच्च मुहुः प्रतिसिध्याक्रतार्थो तद्भगिनी काममञ्जरी माता च माधवसेना राजानम् अश्रुकण्ठ्यो व्यजिज्ञपताम्—'देव! युष्मद्दासी रागमञ्जरी रूपानुरूपशीलशिल्पकौशला पूरयिष्यति मनोरथानित्यासीत् अस्माकमतिमहत्याशा, साद्य मूलच्छिन्ना, यत् इयमतिक्रम्य स्वकुलधर्मम् अर्थनिरपेक्षा गुणेभ्य एव स्वं यौवनं विचिक्रीषते कुलस्त्रीवृत्तमेव अनुतिष्ठासति, सा चेत् इयं देवपादाज्ञयापि तावत्प्रकृतिम् आपद्येत, तदा पेशलं भवेत्' इति (२७)। राज्ञा च तदनुरोधात् तथानुशिष्टा सत्यपि

---

यात्वा दुर् दुःखेनापि वारयितुमशक्या तया तथोक्तया उत्कण्ठया कामादिजन्मत्येत्यर्थः, दूरीकृता संत्यक्ता आहारस्य स्पृहा अभिलाषः यस्य सः तथोक्तः। शिरसः शूलं व्यथाविशेषः, तस्य स्पर्शम् उत्पत्तिरित्यर्थः, अपदिशन् ख्यापयन् विविक्ते विजने तल्पे शय्यायां सुप्तैः निहितैः अवयवैः अङ्गैः अशयिषि शयितवान् मदनस्य कामस्य तन्त्रं शास्त्रं तस्मिन् "तन्त्रं कुटुम्बकृत्ये स्यात् कारणे च परिच्छदे। शास्त्रे प्रधाने सिद्धान्ते" इति विश्वः। अतिनिष्णातः अतिनिपुणः "निष्णातो निपुणाभिज्ञः" इति वैजयन्ती। धनमित्रः रहसि निर्जने माम् अभ्युपेत्य आगत्य अकथयत् अब्रवीत्। सखे, अपहारवर्मणः सम्बुद्धिः। सा गणिकादारिका वेश्याकन्या एव धन्या श्लाघनीया, यां दारिकाम् 'अभिनिविश्य' इति कर्मत्वम्। एवम् एतेन प्रकारेण भवतः मनः चेतः अभिनिविशते अभिनिविष्टो भवतीत्यर्थः। मया तस्याः गणिकायाः भावप्रवृत्तिः अनुरागावेशः सुलक्षिता पर्यवेक्षिता, प्रद्युम्नशरः पञ्चशरः काम इत्यर्थः, अचिरात् अधीनेन तां गणिकामपि शरशयने बाणशयने शाययिष्यति गमयिष्यतीत्यर्थः। स्वान्ताभिनिवेशिनोः युक्तानुरूपप्रवृत्तयोः वां युवयोः समागमः समुपस्थितिः अयत्नसाध्यः अक्लेशकरणीयः।

(२७) किन्त्विति। किन्तु परन्तु सा वारकन्यका वारवधूः किल वार्त्तायाम्, गणिकानां वेश्यानां यः स्वधर्मः शुल्काद्युपयोगरूपः, येन केनापि विटप्रतारणरूपोदा तेन प्रतीपगामिना अननुकूलवर्त्तिना, भद्रं शोभनं साधु इत्यर्थः, तेन उदारः सरलः तेन आशयेन अभिप्रायेन समगिरत अब्रवीत्। अहं गुणशुल्का गुणः शुल्कः पण्यादिदेयम् 'माशुल' इति भाषा; यस्य तादृशी, न धनशुल्का धनाभिलाषा गुणिनः गुणमेव मे वरणीयं न त्वर्थमिवस्पृहणीयमिति भावः। पाणिग्रहणं परिणयः तस्मात् ऋते विना

अनाश्रवैव सा यदासीत्, तदास्याः स्वसा माता च रुदित-निर्बन्धेन राज्ञे समगिरतां—'यदि कश्चित् भुजङ्गोऽस्मदिच्छया विना एनां बालां विप्रलभ्य भाययिष्यति स तस्करवद्वध्यः' इति। तदेवं स्थिते धनाहृते न तत्स्वजनोऽनुमन्यते, न तु धनदाय असौ अभ्युपगच्छतीति विचिन्त्योऽत्राभ्युपायः' इति। अथ मया उक्तम्—'किमत्र चिन्त्यम्? गुणैः ताम् आवर्ज्य-गूढमर्थैः तत्स्वजनं तोषयाव' इति (३८)।

---

न च अन्यभोग्यम् अपरसेव्यं यौवनं तारुण्यम्, वारनार्याः द्रव्यार्थविनिमयेन मे यौवनं विक्रीय्य नोपजीवितव्यम्, किन्तु कुलवधूरिवेत्याशयः। तस्याः रागमञ्जर्याः भगिनी काममञ्जरी तत् प्रतिज्ञावाक्यं मुहुः पुनः पुनः प्रतिषिद्धा प्रतिवारिता अकृतार्था अकृतकार्या माता माधवसेना च अश्रुकण्ठी अश्रूणि वाष्पाणि कण्ठे ययोः ते, राजानं व्यजिज्ञपताम् विज्ञापयामासतुः। देव हे महाराज, रूपस्य सौन्दर्यस्य अनुरूपं तुल्यं यत् शीलं स्वभावः शिल्पेषु गीतवाद्यादिषु कौशलं नैपुण्यं यस्याः सा तथोक्ता। युष्माकं दासी सेविका रागमञ्जरी तन्नाम्नी अस्माकं मनोरथान् अभीष्टान् पूरयिष्यति पूर्णं नयिष्यति इति, एवं महती आभी आकाङ्क्षा आसीत्। अथ अथाहे सा इयं रागमञ्जरी भूलच्छिन्ना मूलं गणिकास्वधर्मरूपं तस्मात् छिन्ना विश्लिष्टा भ्रष्टा इत्यर्थः, यत् यस्मात् स्वस्य आत्मनः कुलधर्मः शुल्कादिग्रहणरूपं तं तथोक्तम्, अर्थनिरपेक्षया धनानपेक्षया गुणेभ्यः एव गुणानाहर्तुमित्यर्थः, 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति चतुर्थी। स्वम् आत्मनः यौवनं तारुण्यं विचिक्रीषते विक्रेतु-मिच्छति, कुलस्त्रीनां कुलवधूनां वृत्तं चरितम् एव अनुतिष्ठासति अनुष्ठातुमिच्छति। सा इयं गणिका चेत् यदि देवपादानां महाराजानाम् आज्ञा निदेशः तया तयोक्तया, अपि तावत् अवधारयेत्, प्रकृतिं स्वभावम् आपद्येत लभेत, तदा तर्हि पेशलं सुकुमारं कल्याणमित्यर्थः, भवेत्।

(३८) राज्ञेति। राज्ञा अङ्गराजेन तास्वं रागमञ्जर्याः आत्मीयादीनाम् अनु-रोधात् उपरोधात् तथा तद्वत् अनुशिष्टा उपदिष्टा सती अपि यदा यर्हि अनाश्रवैव अनङ्गीकृताज्ञैव "वचने स्थित आश्रवः" इत्यमरः। सा रागमञ्जरी आसीत्, तदा तर्हि तस्याः गणिकायाः स्वसा भगिनी माता जननी च रुदितस्य क्रन्दितस्य निर्बन्धेन अतिशयेन अत्यधिकरोदनपूर्वकमित्यर्थः। राज्ञे अङ्गराजाय समगिरतां विज्ञापितवत्यौ। यदि

ततश्च काञ्चित् काममञ्जर्याः प्रधानदूतीं धर्मरक्षितां नाम शाक्यभिक्षुकीं चीवरपिण्डदानादिना उपसंगृह्य तन्मुखेन तया बन्धक्या पणबन्धम् अकारयम्—'अजिनरत्नम् उदारकात् मुषित्वा मया तुभ्यं देयं, यदि प्रतिदानं रागमञ्जरी' इति। सोऽहं तथेति संप्रतिपन्नायाञ्च तस्यां तथा तमर्थं सम्पाद्य मद्गुणोन्मादितायाः रागमञ्जर्याः करकिसलयम् अग्रहीषम्। यस्याञ्च निशि चर्मरत्नस्तेयवादस्तस्याः प्रारम्भे कार्यान्तरापदेशेन समाहूतेषु मुख्येष्वेव नागरमुख्येषु मत्प्रणिधिः विमर्दकोऽर्थपतिगृह्यो नाम भूत्वा धनमित्रम् उल्लङ्घ्य बह्वतर्जयत्। उक्तश्च धनमित्रेण—'भद्र! कस्तवार्थः, यत् परस्य हेतोर्माम् आक्रोशसि न स्मरामि स्वल्पमपि तव अपकारं मत्कृतम्' इति (३८)। स भूयोऽपि तर्जयन्निव अब्रवीत्—'स एष धन-

---

यद्यपि कश्चित् कोऽपि भुजङ्गः विटः "भुजङ्गोऽहिविलासिनोः" इति विश्वः। अर्थाकम् इच्छा आकाङ्क्षा तया तथोक्तया विना च्युते एनां बालां गणिकां विप्रलभ्य प्रतार्य नाशयिष्यति अदर्शनं नयिष्यति, स तस्करः चोरः वध्यः वधयोग्यः महाराजेनेति शेषः। तत् तस्मात् एवं एवम्प्रकारेण स्थिते जाते धनात् च्युते अर्थं विना तत् तस्याः स्वजनः मात्रादिः न अनुमन्यते नाभिवाञ्छति तु परन्तु असौ गणिका धनदाय वित्तदायिने न अभ्युपगच्छति वित्तदसमीपं नागमिष्यतीत्यर्थः। इति एवं विचिन्त्य संभाव्य अत्र अस्मिन् विषये अभ्युपायः निर्णयः क्रियतामिति शेषः। अथ एतत् श्रवणानन्तरम्, मया अपहारवर्मणा उक्तम् कथितम्। अत्र अस्मिन् विषये चिन्त्यं भावनीयं किम्, न किमपीत्यर्थः। गुणैः दाक्षिण्यादिभिः तां गणिकाम् आवर्ज्य वशीकृत्वा तस्याः रागमञ्जर्याः स्वजनं मात्रादिः तम् गूढमर्थैः गोप्यधनैः तोषयावः तुष्टिं नयावः आवामिति शेषः।

(३९) तत इति। ततः अनन्तरम्, काममञ्जर्याः गणिकायाः धर्मरक्षितां नाम एतन्नाम्नीं शाक्यभिक्षुकीं बौद्धसंन्यासिनीं काञ्चित् एकां प्रधानदूतीं प्रशस्तदूतीं चीवरं भिक्षुवस्त्रं "चीवरं भिक्षुवस्त्रं स्यात्" इत्यमरादिकोषः। पिण्डमन्नं तयोर्दानं तदादिना उपसंगृह्य वशीकृत्य तन्मुखेन तस्या भिक्षुक्याः मुखेन, तया बन्धक्या कुलटया

मर्दो नाम, यत्परस्य भार्य्यां शुल्कक्रीतां पुनस्तत्पितरौ द्रव्येण विलोभ्य स्वीचिकीर्षसि, ब्रवीषि च—'कस्तवापकारो मत्कृतः' इति, ननु प्रतीतमेव एतत् 'सार्थवाहस्य अर्थपतेर्विमर्दको बहिश्चराः प्राणाः' इति। सोऽहं तत्कृते प्राणान् अपि परित्यजामि, ब्रह्महत्यामपि न परिहरामि। 'मम एकोरात्रिजागरप्रतीकारः तवैष चर्मरत्नापहारदाहज्वरः' इति। तथा ब्रुवाणश्च पौरमुख्यैः सामर्षं निषिध्य अपवाहितो गतोऽभूत्। इयञ्च वार्ता छचिमार्त्तिना धनमित्रेण चर्मरत्नाशम् आदौ एव उपक्षिप्यपार्थिवाय निवेदिता (४०)। स च अर्थपतिम् आहूय

---

काममञ्जर्या सहेति शेषः, पणबन्धं शुल्कव्यवस्थाम् अकरवम् कृतवान्। यदि रागमञ्जरी, 'मह्यं दीयते तर्हि, इति शेषः, मया उदारकात् धनमित्रात् अजिनरत्नं चर्मभस्त्रिकाम् उपलिला चोरयित्वा तुभ्यं प्रतिदानं विनिमयः देयं प्रत्यर्पणीयम्। सः प्रसिद्धः अहं तथा तद्वत् इति संप्रतिपन्नायां सम्यगङ्गीकृतायां तस्यां काममञ्जर्यां तथा तेन प्रकारेण तमर्थः चर्मभस्त्रिकार्पणरूपं संपाद्य विहित्य मम गुणः तेन उन्मादिता औत्सुक्यसन्तापादिकारितमनोविपर्य्यासस्समुत्थप्रियाश्रितहथाव्यापारः तस्याः तयोक्ताशाः। रागमञ्जर्याः गणिकायाः करकिसलयं करपल्लवम् अग्रहीषम् गृहीतवान्। यस्यां निशि रात्रौ चर्मरत्नस्य अभ्रंशे तस्य स्तेयः चौर्य्यं तस्य वादः प्रवादः परस्परवाक्यं तस्याः रात्रेः प्रारम्भे अगतः कार्य्यान्तरापदेशेन अन्यकार्य्यमिषेण समाहृतेषु आकारितेषु अन्वतसु अनुगतेषु नागरमुख्येषु नागरिकप्रधानेषु एव मत्प्रणिधिः मम गूढपुरुषः विमर्दको नाम अर्थपतिगृह्यः अर्थपतेः पक्षस्थः भूत्वा धनमित्रम् उदारकनामधेयम् उल्लङ्घ्य अतिक्रम्य अवमत्येत्यर्थः, बहु मया तथा अतर्जयत् अनिन्दयदित्यर्थः। भ्रनमित्रेण उक्तम् कथितं भद्र हे साधो, तवार्थः तव विषयः कः? यत् यस्मात् परस्य अर्थपतेः हेतोः तदर्थमित्यर्थः, 'षष्ठी हेतु प्रयोगे' इति षष्ठी। माम् आक्रोशसि निन्दसि, तव मत्कृतं मया विहितं स्वल्पमपि क्षुद्रमपि अपकारम् अनिष्टं न स्मरामि नस्मृतिपथं नयामित्यर्थः।

(४०) स इति। सः विमर्दकः भूयः पुनरपि तर्जयन् भर्त्सयन् इव परमार्थेन न तर्जयन्नित्यर्थः, अब्रवीत् अवदत्। स एष धनगर्वः धनस्य हेतोः गर्वः अहङ्कारः

उपह्वरे पृष्टवान् 'अङ्ग किमस्ति कश्चित् किमर्दको नाम अत्र-भवतः' इति ? तेन च सूढ़ाललना—'अस्ति देव ! परं मित्रं, कस्य तेनार्थः' इति ? कथिते राज्ञोक्तम्—'अपि शक्नोषि तमाह्वातुम्' इति। 'बाढ़मस्मि शक्तः' इति निर्गत्य स्वगृहे वेशवाटे द्यूतसभायाम् आपणे च निपुणम् अन्विष्यन् न उपलब्धवान्। कथं वा उपलभ्येत स वराकः ? स खलु विमर्दको मत्प्राहितत्वदभिज्ञानचिह्नो मन्नियोगात् त्वदन्वेषणाय उज्जयिनीं तदहरेव प्रातिष्ठत। अर्थपतिस्तु भ्रमन् तम् अदृष्ट्वा तत्कृतमपराधम् आत्मसम्बन्धं मत्वा मोहात् भयाद्वा प्रत्याख्याय पुनः धनमित्रेण विभावितेन[न] कुपितेन राज्ञा निगड़बन्धनम् अनीयत (४१)।

---

नाम सम्भावनायाम्, यत् यस्मात् परस्य अर्थपतेः शुल्कक्रीतां शुल्केन अर्थेन क्रीताम् आयत्तीकृतामित्यर्थः, भार्यां पत्नीं कुबेरदत्तकन्यामित्यर्थः, पुनः भूयः तत् पितरौ तस्याः कन्यायाः पितरौ मातापितरौ द्रव्येण धनेन विलोभ्य लोभं जनयित्वेत्यर्थः, स्वीचिकीर्षसि स्वीकर्तुमिच्छसि, ब्रवीषि वदसि च मत्कृतः मया विहितः अपकारः अनिष्टः कः इति ? ननु अवधारणे, सार्थवाहस्य वणिजः एतत् प्रतीतं प्रसिद्धम् एव विमर्दकः अर्थपतेः एतन्नाम्नः श्रेष्ठिनः बहिश्चराः बाह्याः प्राणाः, यथा प्राणान् ऋते यन्तवः न जीवन्ति तथेति भावः। सोऽहं तस्य प्रधानान्तरङ्ग इत्याशयः, तत्कृते तस्य निमित्तायेत्यर्थः, प्राणान् जीवनमपि त्यजामि परिहरामि, ब्रह्महत्यामपि पञ्चविध-महापातकेषु श्रेष्ठपापमपीत्यर्थः, न परिहरामि परित्यजामि। तव एषः चर्मरत्नस्य भस्त्राश्रेष्ठस्य यः अहङ्कारः गर्वः तस्य दाहज्वरः उष्णज्वर इत्यर्थः, मम एकरात्रजागरः प्रतीकारो यस्य स तथोक्तः, इति। एकरात्रजागरणेन चर्मरत्नं चोरित्वा तव दाहज्वरं शमयामीति भावः। तथा तद्वत् ब्रुवाणः कथयन् पौरमुख्यैः नगरप्रधानजनैः सामर्षं सक्रोधं निषिध्य वारयित्वा अपवाहितः निराकृतः सन् गतोऽभूत् परियायौ। कृत्रिमः कपटः आर्त्तिः पीड़ा तेन तथोक्तेन। धनमित्रेण चर्मरत्नाश्रयं चर्मरत्नचौर्यरूपम् इयं वक्ष्यमाणरूपा वार्त्ता वृत्तान्तम् आदौ प्रागेव उपदिश्य प्रस्ताव्य "प्रस्तावः स्यादुपक्षेपः" इति वैजयन्ती। पार्थिवाय राज्ञे निवेदिता विज्ञापिता।

(४१) स इति। स च राजा उपह्वरे रहसि अर्थपतिम् वणिजम् आहूय आकार्य

तेषु एक दिवसेषु विधिना कल्पोक्तेन चर्मरत्नं दोग्धुकामा काममञ्जरी पूर्वदुग्धं क्षपणीभूतं विरूपकं रहसि उपसृत्य ततोऽपहृतं सर्वम् अर्थजातं तस्मै प्रत्यर्प्य सप्रत्ययञ्च अनुनीय प्रत्यागमत्। सोऽपि कथञ्चित् निर्ग्रन्थिकग्रहमोचितात्मा मदनुशिष्टो हृष्टतमः स्वधर्मेनैव प्रत्यपद्यत। काममञ्जर्य्यपि कतिपयैरेव अहोभिः अश्मन्तकशेषम् अजिनरत्नदोहाशया स्वमभ्युदयम् अकरोत्। अथ सम्प्रयुक्तो धनमित्रः पार्थिवं श्रियो व्यज्ञापयत्—'देव! येयं गणिका काममञ्जरी लोभोत्कर्षात् लोभमञ्जरीति लोकोपक्रोशपात्रम् आसीत्, साद्य सुमहोल्लेखानि अपि निरपेक्षं त्यजति। तन्मन्ये मच्चर्मरत्नलाभं हेतुम्, तस्य खलु कल्पस्ताद्दशः, वणिग्भ्यो वारमुख्याभ्यश्च वा दुग्धेन अन्वेष्य इति, हि तद्गता प्रतीतिः। अतोऽमुष्याम्

---

दृष्टवान् जिज्ञासयामास। अङ्गेति अर्थपतेः सम्बुद्धिपदम्, "अङ्ग हे है भोः" इत्यमरः। अत्रभवतः पूज्यस्य तवेत्यर्थः, विमर्दकः तन्नामधेयः कश्चित् कोऽपि किम् अस्ति? इति मूढात्मना मूर्खेण तेन अर्थपतिना, देव हे राजन्, परमम् अतिशयं मित्रम् तेन मित्रेण विमर्दकेनेत्यर्थः, कोऽर्थः प्रयोजनम्, इति कथिते उक्ते राज्ञा अङ्गराजेन उक्तं व्याहृतम्, अपि प्रश्ने "अपि सम्भावना प्रश्नः" इति मेदिनी। तं विमर्दकम् आख्यातुम् आकारयितुं शक्नोषि समर्थो भवसीत्यर्थः, बाढमङ्गीकारे "भृशं प्रतिज्ञयोर्बाढम्" इत्यमरः। शक्तः समर्थः अस्मि इति निर्गत्य बहिर्गत्वा स्वगृहे पानभवने, वेशवाटे वेश्यागृहे, द्यूतसभायां द्यूतसमाजे, आपणे पण्यवीथिकायां निपुणं पुङ्खानुपुङ्खभावेनेत्यर्थः, अन्विष्यन् मृगयिष्यन् न उपलब्धवान् न प्राप्तवान्। वराकः अनुकम्प्यार्हः सः अर्थपतिः कथं केन उपलभ्येत प्राप्नुयात्। मम नियोगः आज्ञा तस्मात् तस्करेण तस्मिन्नेव दिने खलु निश्चये, मया अपहारवर्मणा याचितम् स्वीकृतं त्वत् तव राजवाहनस्य अभिज्ञानचिह्नं प्रत्ययज्ञानलक्षणं यस्मै स तथोक्तः। स विमर्दकः त्वत् तव अर्थे पथाय मृगयितुमित्यर्थः, उज्जयिनीं विशालानगरीं प्रातिष्ठत प्रस्थितवान्। तु परन्तु अर्थपतिः भ्रमन् अटन् तं विमर्दकम् अदृष्ट्वा अनवलोक्येत्यर्थः, तेन विमर्दकेन कृतं विहितम् अपराधं दोषम् आत्मसम्बन्धम् स्वकीयं मत्वा स्थिरीकृत्य मोहात् अमात्

अस्ति मे शङ्का' इति (४२)। सा सद्य एव राज्ञा सह जनन्या समाहूयत। व्यञ्जितवर्णेन इव मया उपह्वरे कथितम्—'नूनमार्ये! सर्वस्वत्यागात् अतिप्रकाशात् आशङ्कनीयचर्मरत्नलाभा, तदनुयोगाय अङ्गराजेन समाहूयसे, भूयोभूयश्च निर्बन्धया त्वया नियतमस्मि तदागतित्वेन अहमपदेक्ष्यः, ततश्च मे भावी चित्रवधः। मृते च मयि न जीविष्यति एव ते भगिनी, त्वञ्च निःस्त्रीभूता, चर्मरत्नञ्च धनमित्रमेव प्रतिभजिष्यति, तत् इयम् आपत् समन्ततोऽनर्थानुबन्धिनी तत् किमत्र प्रतिविधेयम्' इति? तया तज्जनन्या च अश्रुणि विसृज्य उक्तम्—'अस्त्वेवैतत् अस्मद्वाक्छिद्रात् निर्भिन्नप्रायं रहस्यम्। राज्ञश्च निर्बन्धात् द्वित्रिचतुर्निह्नुत्यापि नियतम् आगतिः अपदेश्यैव चोरि-

---

भयात् त्रासात् वा प्रत्याख्याय विपरीतमुक्त्वा "प्रत्याख्यानं निरसने विपरीतविज्ञप्तिते" इत्यजयः। पुनः भूयः धनमित्रेण एतन्नाम्ना विभाविते निवेदिते तस्मिन् विषये प्रमाणीकृते इत्यर्थः, कुपितेन क्रुद्धेन राज्ञा भूपतिना निगडस्य धृत्वा निगडबन्धनं शृङ्खलितम् चरणबन्धनमित्यर्थः, अनीयत प्राप्यत।

(४२) तेष्विति। तेषु दिवसेषु दिनेषु एव कल्पोक्तेन चर्मरत्नस्य नियमोक्तेन विधिना विधानेन चर्मरत्नं भस्त्राश्रेष्ठं दोग्धुकामा चर्मरत्नात् सुवर्णप्रसवार्थिनी काममञ्जरी पूर्वदुग्धं पूर्वापहृतधनमित्यर्थः, श्रपणीभूतं बौद्धसन्न्यासिभावापन्नं विरूपकं तन्नामानं क्षेपिणं रहसि निर्जने उपसृत्य गत्वा ततः तस्मात् विरूपकादित्यर्थः, परहृतं चोरितम् सर्वं समस्तम् अर्थजातम् अर्थसमूहं तस्मै विरूपकाय प्रत्यर्प्य प्रत्यादाय सप्रत्ययं सशपथं यथा तथा "प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु" इत्यमरः। 'सप्रश्रयम्' इति पाठे सविनयमित्यर्थो बोद्धव्यः। बहु अनेकम् अनुनीय प्रत्यागमत प्रत्यावर्त्तत। तदनुशिष्टः तया अनुशिष्टः प्रतिबोधितः सः विरूपकोऽपि कथञ्चित् निर्ग्रन्थः श्रमणः तस्यायमिति ठक्, निर्ग्रन्थिकः स एव कल्पः श्रमणाचारः तस्मात् मोचितः च्छेदितः आत्मा यस्य सः तथोक्तः। "निर्ग्रन्थोऽर्हः क्षपणकः श्रमणोजिन इत्यपि" इति वैजयन्ती। हृष्टतमः अत्यन्तानन्दितः सन् स्वधर्मम् आत्मकुलक्रमागतधर्मं प्रत्यपद्यत प्रत्यलभत। काममञ्जरी तन्नाम्नी वणिकापि चर्मरत्नस्य दोहः स्वर्णोत्पादनरूपः तस्मिन् आशा तया तथोक्तया।

तस्य, त्वयि (४३)। त्वयि च व्यपदिष्टे सर्वम् अस्मत्कुटुम्बम् अवसीदेत्। अर्थपती च तदयशो रूढम्, अङ्गपुरप्रसिद्धञ्च तस्य कीनाशस्य अस्माभिः सङ्गतम्, अमुनैव तत् अस्मभ्यं दत्तमिति अपदिश्य वरमाला गोपायितुम्' इति मत्म् अभ्युपगमय्य राजकुलम् अगमताम्। राज्ञानुयुक्तौ च 'नैष न्यायो वेशकुलस्य, यत् दातुः अपदेशः। न हि अर्थैः न्यायार्जितैः एव पुरुषा वेशमुपतिष्ठन्ति' इति असकृत् अतिप्रणुद्य कर्णनासाच्छेदो-

---

कतिपयैः अल्पैरेव अहोभिर्दिनैः 'अपवर्गे तृतीया' इति तृतीया। अश्मान्तकं चुल्लिः यस्मिन् तथा भूतम्। "अश्मन्तमुद्धानमधिश्रयणी चुल्लिरन्तिका" इत्यमरः। स्वमात्मीयम् अभ्युदयं सम्पदम् अकरोम कृतवती। अथ ततःपरम्, मत्प्रयुक्तः मयोपदिष्टः धनमित्रः तदाख्यः..मिथः रहसि पार्थिवं राजानं व्यज्ञापयत् न्यवेदयत्। देव हे राजन्,लोभोत्कर्षात् लाभसाधिक्यात् येयं गणिका वेश्या लोभमञ्जरी अत्यन्तलुब्धा इति लोकानाम् उपक्रोशस्य निन्दायाः पात्रं भाजनम् आसीत्, सा गणिका अद्य अधुना मुशलाः अयमुखायाणि, उलूखलम् ऊर्ध्वं खं शून्यमस्येति प्रसोदरात् साधु। तानि अपि निरपेक्षं निःनास्ति अपेक्षा विचारणादिः यस्मिन् तत् यथा तथा त्यजति परिहरति। तत् तस्मादतएवेत्यर्थः, मच्चर्मरत्नलाभं मम चर्मरत्नं तस्य लाभः तं हेतुं कारणं मन्ये अनुभवामि। तस्य चर्मरत्नस्य खलु निश्चितम्, तादृशः तत्प्रकारः कल्पः प्रकारः। वणिग्भ्यः श्रेष्ठिभ्यः वारमुख्याभ्यः गणिकाप्रधानाभ्यश्च दुग्धे रत्नं प्रसूतवतीत्यर्थः, न अन्येभ्यः जनेभ्यः इति एवं हि अवधारणे, तद्गता चर्मरत्नगता प्रतीतिः ख्यातिः। अतः अस्मात् अमुष्यां गणिकायां मे मम शङ्का अस्ति विद्यते इति।

(४३) सेति। राज्ञा अङ्गराजेन सा काममञ्जरी सद्यः सपदि एवं "सद्यः सपदि तत्क्षणे" इत्यमरः।. जनन्या मात्रा सह समाहूयत आकार्यत। उपह्वरे एकान्ते मया व्यथितवर्णेनेव दुःखिताकारिणेनेव कथितम् उक्तम् काममञ्जार्य्यादीनां समीपे इति शेषः। नूनं तर्के। "नूनं तर्केऽर्थनिश्चये" इत्यमरः। आर्य्ये हे माननीये, अङ्गराजेन राज्ञा सर्वस्वत्यागात् स्वर्वस्वानां धनरत्नादीनां त्यागः, परिहारः तस्मात् अतिप्रकाशात् अतिमात्रप्रकटनात् आशङ्कनीयः सम्भावनीयः चर्मरत्नस्य लाभः यस्यां तादृशी त्वमिति शेषः। तदनुयोगाय तस्मै अनुयोगः प्रश्नः तस्मै नूनं तर्के, तर्कयामीत्यर्थः,

पक्षेपभीषिताभ्यां दग्धमन्धकीभ्यां स एव तपस्वी तस्करत्वेन अर्थपतिः अग्राह्यत। कुपितेन च राज्ञा तस्य प्राणेषु उद्यतो दण्डः। प्राञ्जलिना धनमित्रेण एव प्रत्यषिध्यत—'आर्य्य! मौर्य्यदत्त एष वरो वणिजाम्, ईदृशेषु अपराधेषु नास्ति असुभिः अभियोगः, यदि कोपितोऽसि, हृतसर्व्वस्वो निर्व्वासनीयः पाप एषः' इति (४४)। तन्मूला च धनमित्रस्य कीर्त्तिः अप्रथत

---

आर्य्ये हे माननीये, अङ्गराजेन राज्ञा सर्वस्वानां धनरत्नानां त्यागात् परिहारात् अतिप्रकाशात् अतिमात्रप्रकटनात् तदनुयोगाय तस्य अनुयोगः प्रश्नः तस्मै "प्रश्नोऽनुयोगः पृच्छा च" इत्यमरः। आशङ्कनीयः सम्भावनीयः चर्म्मरत्नलाभः यस्याः तादृशी, समाह्वयसे आकारयसे त्वमिति शेषः। भूयोभूयः पुनः पुनः वीप्सायां द्विर्भावः। निर्बन्धया आग्रहेण पृष्टया त्वया सदागतित्वेन तस्य चर्म्मरत्नस्य आगतित्वेन प्राप्तिहेतुत्वेन अहम् अपदेश्यः कथनीयः नियतं निश्चितम् अस्मि भवामि। ततश्च तस्मात् मे मम चित्रवधः चित्रः नानाप्रकारः वधः विनाशः भावि भविता, राजाधिकरणिकैः विविधोपायेन मां संपीड्य वधिष्यते इति भावः। मयि मृते विनष्टे ते तव भगिनी रागमञ्जरी न जीविष्यति प्राणान् न धारयिष्यति एव। त्वं भवती च निःस्वीभूता चर्म्मरत्नं भस्त्राग्रेष्ठं धनमित्रं तन्नामानं वणिजम् एव प्रतिभजिष्यति संगमिष्यति। तत् तस्मात् इयम् आपत् अनर्थः समन्ततः सर्वतः अनर्थानुबन्धिनी अनिष्टकारिणी तत् तस्मात् अत्र विषये किं प्रतिविधेयम् करणीयम् इति। तया काममञ्जर्य्या तज्जनन्या तस्याः काममञ्जर्याः जनन्या मात्रा च अश्रूणि बाष्पाणि विसृज्य त्यक्त्वा उक्तं कथितम्। अस्माकं वालिश्यं मूर्खत्वं तस्मात् तथोक्तात् "मूर्खवैधेयबालिशाः" इत्यमरः। निर्भिन्नप्रायं प्रकटितप्रायम् एतत् रहस्यं गोप्यम् अस्ति एव। राज्ञः अङ्गराजस्य निर्बन्धात् अनुरोधात् द्विविचतुरेवारान् इति, द्वित्रिचतुः 'द्वित्रिचतुर्भ्यः सुच्' इति सुच्, 'रात् सस्य' इति सलोपः। निह्नुत्यापि गोपयित्वापि त्वयि भवद्विषये नियतं निश्चितं चोरितस्य वस्तुनः आगतिः आगमनकारणम् अपदेश्या वक्तव्या।

(४४) त्वयीति। अप्रतकुटुम्बम् अस्माकं कुटुम्बं बान्धवं त्वयि भवति व्यपदिष्टे कीर्त्तिते सर्व्वं समस्तम् अवसीदेत् नश्येत्। अर्थपतौ तन्नाम्नि वणिजि तत् भस्त्राप- हरणजम् अयशः अकीर्त्तिः रूढं व्याप्तम्, कीनाशस्य कृपणस्य "कीनाशः कृपणे दृढ़

अप्रीयत च भर्त्ता। पटच्चरछेदशेषः अर्थपतिः अर्थमत्तः सर्वपौरजनसमक्षं निरवास्यत, तदुद्रव्याणान्तु, केनचित् अवयवेन सा वराकी काममञ्जरी चर्मरत्नमृगत्वथिकापविद्धसर्वस्वा सानुकम्पं धनमित्रामिनोदितेन भूपेन अन्वगृह्यत। धनमित्रश्च अहनि गुणिनि कुलपालिकाम् उपायंस्त। तदेवं मित्रसङ्कल्पो रागमञ्जरीमहं हेमरत्नपूर्णम् अकरवम् (४५)।

---

कदर्य्याकारयोरपि" इत्यजयः। तस्य अर्थपतेः अस्माभिः सह सन्ततं मैत्री अङ्गपुरप्रसिद्धश्च एतस्मिन्नगरे प्रख्यातम्। अमुना अर्थपतिना एव तत् चर्मरत्नम् अस्मभ्यं दत्तं प्रत्यर्पितम् इति अपदिश्य मिथ्यां प्रकटीकृत्य वरं मनाक् आत्मा गोपायितुं रक्षितुम् इति एवं माम् अभ्युपगमय्य बोधयित्वा राजकुलं राजसमीपम् अगमताम् अयाताम्। राज्ञा अङ्गराजेन अनुयुक्ते जिज्ञासिते सतीत्यर्थः, वेशकुलस्य वेश्याजनस्य एषः न न्यायः न रीतिः यत् यतः दातुः दानकर्तुः अपदेशः नामकथनम्। पुरुषाः जनाः न्यायार्जितैः विधानोपार्ज्जितैः एव वेशं वेश्यागृहं नहि उपतिष्ठति नहि भजन्ते इति एवम् अचकृत् वारं वारम् अतिप्रयत्य उक्त्वा कर्णयोः नासाग्रस्य छेदः कर्त्तनं तस्य उपक्षेपः प्रस्तावः तस्मात् भीषिताभ्यां वासिताभ्यां दग्धमन्यकाभ्यां विनष्टभाग्यवेश्याभ्यां, तपस्वी अनुकम्प्याहः स एव अर्थपतिः तस्करत्वेन चौर्य्येण अग्राह्यत ग्राहितः। प्रकुपितेन क्रुद्धेन राज्ञा तस्य अर्थपतेः प्राणेषु दण्डः राज्ञोनीतिविशेषः, उद्यतः आज्ञप्तः। प्राञ्जलिना बद्धपाणिना धनमित्रेण तन्नाम्ना एव प्रथविष्यत प्रत्यवाप्येत। आर्य हे महाराज, वणिजां श्रेष्ठिनां मौर्य्यदत्तः सुरासा एतदाख्यायाः अपत्यं पुमान् मौर्य्यः चन्द्रगुप्तः तेन दत्तः अर्पितः। अथवा मौर्य्यः राज्ञः नयशास्त्रप्रणेता तेन दत्तः। एषः वरः अभयम् ईदृशेषु अपराधेषु चौर्य्यदोषेषु अस्मत्तः प्राणेः अभियोगः प्राणदण्डः न अस्ति। यदि चेत् कुपितः क्रुद्धः असि तर्हि एषः पापः पापाचारी हृतसर्व्वस्वः हृतं गृहीतं सर्व्वस्वं यस्य सः तथोक्तः। निर्व्वासनीयः पुरात् बहिष्कृतः, इति।

(४५) तन्नूत्तेति। धनमित्रस्य तस्य ला तस्य वणिजः प्राणानां रक्षणमूला रक्षणहेतुरूपा कीर्त्तिः यशः अप्रथत प्रख्यातः अभूदित्यर्थः, भर्त्ता राजा अप्रीयत प्रीतः बभूवेत्यर्थः। पौरजनानां पौरवासिनां समक्षं प्रत्यक्षं पटच्चरं जीर्णवस्त्रं तस्य छेदः खण्डः शेषः यस्य स तथोक्तः "पटच्चरं जीर्णवस्त्रम्" इत्यमरः। अर्थमत्तः धनगर्व्वितः

अस्मिंश्च पुरे लुब्धसमृद्धवर्गः तथा मुषितः, यथा कपालपाणिः स्वैरेव धनैः मद्विश्राणितैः समृद्धीकृतस्य अर्थिवर्गस्य गृहेषु भिक्षार्थम् अभ्रमत्। न हि अलमतिनिपुणोऽपि पुरुषो नियतिलिखितां लेखाम् अतिक्रमितुं, यतोऽहमेकदा रागमञ्जर्याः प्रणयकोपप्रशमनाय सानुनयं पायितायाः पुनः पुनः प्रणयसमर्पितमुखमधुगण्डूषम् आस्वादं आस्वादम् मदेनास्पृश्ये। शीलं हि मदोन्मादयोः अमार्गेण अपि उचितकर्मस्वेव प्रवर्त्तनम्। यदहम् उपोढ़मदः 'नगरमिदमनयैकयैव शर्वर्या निर्धनीकृत्य त्वद्वनं पुरयेयम्' इति। प्रव्यथितप्रियतमाप्रणामाञ्जलिशपथशतातिवर्त्ती मत्तवारण इव रभसच्छिन्नशृङ्खलः कयापि धात्र्या शृगालिकाख्ययानुगम्यमानो नातिपरिकरोऽसिद्वितीयो रंहसा परेण उदचलम् (४६)। अभिपततोऽपि नागरिक-

---

अर्थपतिः निरवास्यत पुरात् बहिष्कृतः। तु परन्तु धनमित्रेण अभिनोदितः निवेदितः, तेन भूपेन राज्ञा तद्व्याणां तस्यार्थपतेरर्थानां केनचित् अवयवेन अंशेन चर्म्मरत्नम् एव मृगतृष्णिका मरीचिका दुराकाङ्क्षा इत्यर्थः, तथा अपविद्धम् अर्पितं सर्व्वस्वं यया सा तथोक्ता। सा वराकी तपस्विनी काममञ्जरी सानुकम्पं सदयम् अन्वगृह्यत अनुगृहीता धनमित्रः गुणिनि गुणयुक्ते शुभे इत्यर्थः, अहनि दिवसे कुलपालिकां कुबेरदत्तवणिजः कन्याम् उपायंस्त परिणीतवान्। तत् ततः एवम् एवंप्रकारेण सिद्धसङ्कल्पः, सिद्धः पूर्णः सङ्कल्पः अभिलाषः यस्य सः तथोक्तः, अपहारवर्म्मा रागमञ्जरीगृहं काममञ्जर्याः सोदरायाः भवनम् हेमरत्नपूर्णं हेमा तेन स्वर्णेन पूर्णम् अकवरम् कृतवानस्मि।

(४६) अस्मिंश्चेति। अस्मिन् अङ्गपुरे नगरे लुब्धाः लम्पटाः, तेषां समृद्धाः अधिकार्थाः तेषां वर्गः वृन्दः। तथा तद्वत् मुषितः चोरितः सर्व्वस्वापहृतः इत्यर्थः, मद्विश्राणितैः मद्दत्तैः स्वैरेव आत्मीयैरेव धनैः अर्थैः समृद्धीकृतस्य असमृद्धः समृद्धो भवतीति अभूततद्भावार्थे च्विः। अर्थिवर्गस्य याचितस्य गृहेषु भवनेषु यथा कपालपाणिः कपालं घटखण्डं पाणौ यस्य तथा भूतः "शिरोऽस्थिनि कपालोऽस्त्री घटादेः सकलेऽपि च" इति रुद्रः। भिक्षार्थं याचनार्थम् अभ्रमत् आटत्। अतिनिपुणः अतिप्रवीणः

पुरुषान् अशङ्कमेव विगाह्य तस्कर इति तैः अभिहन्यमानोऽपि नातिकुपितः क्रीडन्निव सदावसन्नहस्तपातितेन निस्त्रिंशेन द्वित्रान् एव हत्वा अवघूर्णमानताम्रदृष्टिः अपतम्। अनन्तर-मार्त्तरवान् विसृजन्ती शृगालिका मम अभ्यासम् अगमत्, अबध्ये च अहम् अरिभिः। आपदा तु मदापहारिण्या सद्य एव बोधितस्तत्क्षणोपजातया प्रतिभया व्यचीचरम्—'अहो! मम इयं मोहमूला महती आपत् आपतिता। प्रष्टतरश्च सख्यं मया सह धनमित्रस्य, मत्परिग्रहत्वञ्च रागमञ्जर्याः, मदेनसा च तौ प्रोर्णुतौ श्वो नियतं निग्राहयिष्यते (४७)।

---

अपि पुरुषः नियतिलिखितां भाग्याङ्कितां लेखाम् न हि अतिक्रमितुं प्रोज्झितुम् अलं समर्थः। यतः यस्मात् अहम् अपहारवर्म्मा एकदा एकस्मिन् समये मदेन मत्ततया पायितायाः पानं कारितायाः रागमञ्जर्य्याः मद्द्यितायाः प्रणयस्य प्रीतेः कोपः कलहः तस्य प्रशमनं दूरीकरणम् तस्मै तयोक्ताय। पुनः पुनः भूयोभूयः प्रणयेण प्रीत्या समर्पितं दत्तं सुखमधु सुखमद्यं तस्य गण्डूषं पीतशेषं तत् तयोक्तम्। "पीतशेषं तु गण्डूषम्" इति हलायुधः। आस्वादम् आस्वादं पुनः पुनरास्वाद्य, पेसुम्। अस्पृश्यं पृष्टवानस्मि। मदः सुरापानजनितमत्तता उन्मादः चित्तविभ्रमः तयोः शीलं स्वभावः हि यतः असामर्थ्या अनुचितपथेन अपि उचितानि अभ्यस्तानि कर्म्माणि क्रियाः तेषु तथोक्तेषु "अभ्यस्तेऽप्यार्जितेनाप्यम्" इति वैजयन्ती। एव निश्चितं प्रवर्त्तनम् अनुष्ठानम्। यत् यस्मात् अहम् उपोढमदः उपोढः प्राप्तः मदः येन सः। अनया एकया अवस्था रात्र्या एव इदम् अङ्गदेशीयनगरं पुरं निर्द्धनीकृत्य अधनं कृत्वेत्यर्थः, लम्बन्नं तव गृहं पूरयेयम् परिपूर्णं नयेयम्। इति प्रकर्षेण व्यथिता क्लिष्टा प्रियतमा रागमञ्जरी तस्याः प्रणामाञ्जलिना बद्धाञ्जलिना शपथशतं शतसंख्यकानुरोधम् अतिवर्त्तते ताच्छिल्ये-नातिक्रामतीति तथाभूतः। कयापि एकया धात्र्या उपमात्रा शृगालिका आख्या यस्याः तया अनुगम्यमानः पश्चात् याचमानः मत्तवारणः मत्तगजः इव रभसेन वेगेन छिन्नः कर्त्तितः शृङ्खलः बन्धनरज्जुः येन सः तथाभूतः। नातिपरिकरः असंगृहीत-परिवारः असिद्वितीयः कृपाणसहायः परेण अतिशयेन रंहसा वेगेन उदचलम् उच्चलितः।

(४७) अभिपतत इति। अभिपततः निकटमागच्छतः नागरिकपुरुषान् नगररक्षि-

तत् इयमिह प्रतिपत्तिः यया अनुष्ठीयमानया सखियौमतस्तौ परित्रास्येते, माञ्च कदाचित् अनर्थादितः तारयिष्यति' इति कमपि उपायमात्मनैव निर्णीय शृगालिकाम् अगादिषम्—'अपेहि जरठ्ठिके ! यत्ताम् अर्थलुब्धां दग्धगणिकां रागमञ्जरिकामजिनरत्नमत्तेन शत्रुणा मे मित्रच्छद्मना धनमित्रेण सङ्गमितवती, सा हतासि। तस्य पापस्य चर्मरत्नमोषात् दुहितुश्च ते साराभरणापहारात्, अहमद्य निःशल्यमुत्सृजेयं जीवितम्' इति। सा पुनः उद्घटितज्ञा परमधूर्त्ता साश्रुगद्गदम् उदञ्जलिस्तान् पुरुषान् सप्रणामम् आसादितवती, सामपूर्वं मम पुरस्तात् अयाचत—'भद्रकाः ! प्रतीक्ष्यतां कञ्चित्कालं, यावत्

---

वर्गान् अपि अशङ्कं शङ्कारहितं यथा तथा विघट्य युद्धं विहितं तैः पुरुषैः तस्कर इति अभिहन्यमानोऽपि ताड्यमानोऽपि नातिकोपितः नात्यन्तक्रुद्धः मदेन मत्ततया अवसन्नः शिथिलः यः हस्तः तेन पातितेन च्छिन्नेन निस्त्रिंशेन खड्गेन "करवालनिस्त्रिंशकृपाणखड्गाः" इति हैमः। क्रीडन् खेलन् एव 'संख्याया अल्पीयस्याः' इति द्वित्राः तान् पुरुषान् हत्वा व्यापाद्य अवघूर्णमाना विह्वला ताम्रा अरुणा दृष्टिर्यस्य स तथोक्तः। अपतम् पतितवान्। अरिभिः शत्रुभिः अहं अबध्ये बद्धः, अनन्तरं ततः शृगालिका तन्नाम्नी आर्त्तरवान् पीड़ितस्वरान् विसृजन्ती मुञ्चन्ती मम अभ्यासं समीपं आगमत् आययौ। तु किन्तु सत्वापहारिण्या मतिनाशिन्या आपदा विपदा तस्मिन् क्षणे उपजातया उत्पन्नया प्रतिभया प्रज्ञया "प्रज्ञा नवनवोल्लासशालिनी प्रतिभा मता" इति भरतः। सद्यः सपदि एव बोधितः ज्ञापितः व्यचीचरम् विचारितवान्। अहो विस्मये, "अहो ही च विस्मये" इत्यमरः। इयं मोहमूला अज्ञाननिबन्धना महती अतिमात्रा आपत् विपत् आपतिता आगता। मया सह धनमित्रस्य तन्नाम्नः वणिजः प्रख्याततरं विख्याततरं सख्यं सौहृद्यं रागमञ्जर्याः सत्परिग्रहत्वञ्च मम पत्नीत्वञ्च, मदेनसा मत् मम एनसा पापेन "कलुषं वृजिनैनोऽघम्" इत्यमरः। श्वः परदिने सा रागमञ्जरी स धनमित्रौ तौ 'त्यदादीनि सर्वैर्नित्यम्' इत्येक शेषः। प्रोषितौ अभिभूतौ नियतं निश्चितं नियाहयिष्येते नियन्त्रयिष्येते। 'नियाहीष्येते' इति पाठे निगृहीतौ भविष्यत इत्यर्थः।

अस्मात् अस्मदीयं सर्वं मुषितमर्थजातम् अवगच्छेयम्' इति (४८)। 'तथा' इति तैः प्रतिपन्ने पुनः मत्समीपम् आसाद्य, 'सौम्य! क्षमस्वास्य दासीजनस्य एकम् अपराधम्, अस्तु स कामं त्वत्कलत्राभिमर्शी वैरास्पदं धनमित्रः, स्मर्तुं चिरज्ञातां ते परिचर्याम् अनुग्रहीतुम् अर्हसि दासीं रागमञ्जरीम्। आकल्पसारो हि रूपाजीवा जनः, तद्ब्रूहि क्व निहितम् अस्या भूषणम्?' इति पादयोः अपतत्। ततो दयमान इव अह-

---

(४८) तदिति। तत् तस्मात् इह अत्र विषये इयं वक्ष्यमाणरूपा प्रतिपत्तिः इतिकर्त्तव्यतेत्यर्थः। मम नियोगः निर्देशः स्यात्। अनुष्ठीयमानया सम्यगाचरितया यया प्रतिपत्त्या तौ रागमञ्जरी धनमित्रौ परित्रास्येते परिरक्षितौ भविष्यत इत्यर्थः। कदाचित् जातु पक्षान्तरेणेत्यर्थः। इतः अस्मात् अनर्थात् अनिष्टात् मां च तारयिष्यति उद्धरिष्यति इति आत्मना स्वेनैव कथमपि निर्णीय स्थिरीकृत्य शृगालिकां तन्नाम्नीं दासीम् समादिक्षम् अवदम्। जरतिके हे स्थविरे, अपेहि अपगच्छ दूरमपसरेत्यर्थः। यः त्वं ताम् अर्थलुब्धां धनलालसान्वितां दग्धगणिकां नगण्यवेश्यां रागमञ्जरिकाम् अजिनरत्नमत्तेन अजिनलाभगर्वेण मे मम मित्रच्छद्मना कपटमित्रेण अधुना द्विषता धनमित्रेण सह सङ्गमितवती सम्बन्धं जनयितवती सा त्वं हता विनष्टा असि भवसि। अद्य अस्मिन्नहनि अहं पापस्य दुर्वृत्तस्य तस्य धनमित्रस्य चर्मरत्नमोषात् अजिनश्रेष्ठस्य चौर्यात्, ते तव दुहितुः कन्यायाः रागमञ्जर्याः इत्यर्थः, साराणि उत्कृष्टरत्नानि आभरणानि अलङ्कारादीनि तेषाम् अपहरणं स्तेयः तस्मात्। निःशल्यं बन्धनरहितं जीवितं जीवनम् उत्सृजेयम्। उद्घटितज्ञा उद्घटिता स्फुटमाविर्भूतबोधिताज्ञा बुद्धिः यस्यास्तथोक्ता। "सूचनमुद्घट्टनं बोधिः" इत्यजयः। परमधूर्ता अत्यन्तचतुरा सा शृगालिका पुनः एव "स्युरेवन्तु पुनर्वैवेत्यवधारणवाचकाः" इत्यमरः। उद्धाञ्जलिः बद्धाञ्जलिः सती साश्रुगद्गदम् अश्रुणा सह गद्गदम् अस्पष्टोच्चारणं यस्य तथा तान् पुरुषान् नागरिकान् समप्रणामं यथा तथा आसादितवती प्राप्तवती मम पुरस्तात् अग्रतः सामपूर्वं सान्त्वपुरःसरं सविनयमित्यर्थः, अयाचत प्रार्थितवती। भद्रकाः मङ्गलास्पदरूपाः कञ्चित् कालं अभ्युपपत्त्या प्रतीक्षताम्, यावत् यावत्कालम् अस्मात् जनात् अस्मदीयं मामकं सर्वं मोषितं चोरितम् अर्थजातम् धनसमूहम् अवगच्छेयम् जाने।

सब्रवम्—'भवतु मृत्युहस्तवर्त्तिनः किं मम अमुष्याः वैरानुबन्धेन?' इति तद् ब्रुवन्निव कर्णे एवैनाम् अशिक्षयम्—'एवमेवं प्रतिपत्तव्यम्' इति। सा तु प्रतिपन्नार्थेव 'जीव चिरं, प्रसीदन्तु ते देवताः, देवोऽपि अङ्गराजः पौरुषप्रीतो मोचयतु त्वाम्, एतेऽपि भद्रमुखास्तव दयन्ताम्' इति क्षणात् अपासरत्। आनीये च अहमारक्षिकनायकस्य शासनात् चारकम् (४८)।

---

(४८) तथेति। तैः पुरुषैः तथा यथा याचितं तथेत्यर्थः, इति प्रतिपन्ने स्वीकृते पुनः भूयः मत्समीपं मसान्तिकम् आसाद्य आगत्य, सौम्य हे भद्र, तस्य दासीजनस्य माहश्याः किङ्कर्य्याः एकम् अपराधम् अकार्य्यजनितं दोषं क्षमस्व मर्षय। तव कलत्रं वणिता रागमञ्जरी ताम् अभिमर्षतीति तथा त्वत्स्त्रीगामीत्यर्थः, वैरास्पदं शत्रुस्थानं स धनमित्रः कामं वाढ़म् अस्तु भवतु। तु परन्तु चिरकृतां वहुकालाचरितां परिचर्य्यां सेवां स्मरन् भावयन् दासीं सेविकां रागमञ्जरीम् अनुगृहीतुम् अनुग्रहकर्तुम् अर्हसि योग्यो भवसि। हि यतः आकल्पसारः आकल्पः वेशः भूषणमित्यर्थः, सारः प्रधानं यस्य तथाभूतः। "आकल्पवेशौनेपथ्यम्" इत्यमरः। रूपाजीवा रूपेण सौन्दर्य्येण जीवतीति रूपाजीवा जनः वेश्याजनः, अस्याः गणिकायाः भूषणम् अलङ्कारं क्व कुत्र निहितं रचितं तत् त्रुहि कथय इति पादयोः चरणयोः अपतत् पतितवती। ततः ततःपरम्, दयतेऽसौ दयमानः सदयः इव अहम् अब्रवम् अवदम्। भवतु श्रुयतां वार्त्तार्थकवर्त्तमानविषयमव्ययम्। "भवत्वन्तरसंवादे निर्द्धारणस्मरणेऽपि च" इत्यनयः। मृत्युः कृतान्तः तस्य हस्तौ तयोः वर्त्तते यः तथोक्तस्य, मम अमुष्याः रागमञ्जर्य्याः वैरानुबन्धेन प्रतिकूलाचरणेन तत् पूर्व्वोक्तवाक्यं ब्रुवन् उच्चारयन् इव कर्णे श्रुतौ एव अशिक्षयम् शिक्षितवान्। एवम् वक्ष्यमाणरूपं प्रतिपत्तव्यम् कर्त्तव्यम्। तच्चानुपदमेव व्यक्तीभवति। तु परन्तु सा शृगालिका प्रतिपन्नार्थेव बोधितार्थेव चिरं दीर्घकालं वाप्येत्यर्थः, जीव प्राणान् धारय। देवताः ते तुभ्यं प्रसीदन्तु प्रसन्नाः भवन्तु। देवः राजा, अङ्गराजः अङ्गाधिपतिः पौरुषप्रीतः पौरुषेण पुरुषकारेण प्रीतः सन्तुष्टः त्वां भवन्तं मोचयतु मुक्तिं ददातु। एते सम्मुखवर्त्तिनः अपि भद्रमुखाः कल्याणास्पदाः तव दयन्तां त्वाम् अभिरक्षन्तु, 'अधीगर्थदयेशां कर्म्मणि' इति कर्म्मणि षष्ठी। इति क्षणात् क्षणकालमाश्रित्य अल्पक्षणेनेत्यर्थः,

अथ उत्तरेद्युः आगत्य दृप्ततरः सुभगमानी सुन्दरम्मन्यः पितुः अत्ययात् अचिराधिष्ठिताधिकारः तारुण्यमदात् अनतिपक्वः कान्तको नाम नागरिकः किञ्चिदिव भर्त्सयित्वा माम् अभ्यधत्त—'न चेत् धनमित्रस्य अजिनरत्नं प्रतियच्छसि, न चेत् वा नागरिकेभ्यश्चोरितकानि प्रत्यर्पयसि, द्रक्ष्यसि, पारम् अष्टादशानां कारणानाम् अन्ते च मृत्युमुखम्' इति। मया तु स्मयमानेन अभिहितम्—'सौम्य! यद्यपि दद्याम् आजन्मनो मुषितं धनं, न तु अर्थपतिदारापहारिणः शत्रोर्मे मित्रमुखस्य धनमित्रस्य चर्मरत्नप्रत्याशां पूरयेयम्, अदत्त्वैव तत् अयुतमपि यातनानाम् अनुभवेयम्, इयं मे साधीयसी सन्धा' इति। तेन च क्रमेण वर्त्तमाने सान्त्वनतर्जनप्राये प्रतिदिनम् अनुयोगव्यतिकरेऽनुगुणान्नपानलाभात् कतिपयैः एवाहोभिः विरोपितव्रणः प्रकृतिस्थोऽहमासम् (५०)।

---

अपासरत् अपसृता। आरक्षिकाः नगररक्षणकारकाः तेषां नायकः नेता तस्य शासनात् नियोगात् अहं चारकं बन्धनगृहम् आनीये आनीतः राजपुरुषैरिति शेषः।

(५०) अथेति। अनन्तरम्, उत्तरेद्युः परदिवसे, तरुणस्य भावः तारुण्यं तदेव मदः गर्व्वः तस्मात्, दृप्ततरः अत्युद्धतः "गर्वितो दृप्तउद्धतः" इति वैजयन्ती। सुभगमानी आत्मानं सुभगं सर्वोन्नतत्वं मन्यते इति तथाभूतः। तथाहि दिवाकरः "सर्वोन्नतत्वं सौभाग्यं तद्वान् सुभग उच्यते।" इति। सुन्दरं मन्यः आत्मानं सुन्दरं मन्यते इति तथोक्तः, सौन्दर्य्याभिमानीत्यर्थः। पितुः जनकस्य अत्ययात् विनाशात् अचिरेण अत्यल्पदिनेन अधिष्ठितः प्राप्तः अधिकारः स्वामित्वं येन स तथोक्तः। अनतिपक्वः अनतिपरिणतः कान्तको नाम तन्नामधेयः नागरिकः कारापतिः "कारापतिर्नागरिकः" इति वैजयन्ती। आगत्य समुपेत्य किञ्चित् ईषत्स्वल्पमिव भर्त्सयित्वा तिरस्कृत्य माम् अभ्यधत्त अभिहितवान्। धनमित्रस्य अजिनरत्नं भस्त्राश्रेष्ठं चेत् यदि न प्रतियच्छसि, प्रत्यर्पयसि चेत् यदि वा नागरिकेभ्यः नगरवासिजनेभ्यः दानार्थधातोर्योगे चतुर्थी। चोरितकानि चौर्य्यद्रव्यानि न प्रत्यर्पयसि न ददासि, अष्टादशानां तत्संख्यकानां कारणानां तीव्रयातनानां "तीव्रा तु वेदना पीड़ा यातना कारणा च सा" इति

अथ कदाचित् अच्युताम्बरपीतातपत्विषि पयोधि धाम्नि हृष्टवर्णा शृगालिका उज्ज्वलेन वेशेन उपसृत्य दूरस्थानुचरा माम् उपश्लिष्य अब्रवीत्—'आर्य्य! दिष्ट्या वर्द्धसे, फलिता तव सुनीतिः। यथा त्वयादिष्टे, तथा धनमित्रमित्य अब्रवम्—'आर्य्य! तदेवमापन्नः सुहृदित्युवाच—'अहमद्य वेशसंसर्ग-सुलभात् पानदोषाद्बद्धः, त्वया पुनः अविशङ्कम् अद्यैव राजा विज्ञापनीयः—'देव! देवप्रसादात् एव पुरापि तत् अजिन-रत्नम् अर्थपतिमुषितम् आसादितम्। अथ तु भर्त्ता रागमञ्जर्य्याः कश्चित् अवधूर्त्तः कलासु कवित्वेषु लोकवार्त्तासु च अतिवैच-क्षण्यात् मया समसृज्यत। तत्सम्बन्धाच्च वस्त्राभरणप्रेषणा-दिना तद्भार्य्यां प्रतिदिनम् अन्ववर्त्ते, तत् असावपश्चिष्ट निकृष्टाशयतया कितवः। तेन च कुपितेन हृतं तत् चर्म-

---

वाचस्पतिः। तासामष्टादशप्रकारत्वं नयशास्त्रे परिस्फुटितं नेहोक्तं विस्तरभयात्। भरतस्तु "कारणा यमयातना" इति। पारम् अन्तं गच्छसि। अन्ते यातनानामवसाने मृत्युमुखं प्राणदण्डमित्यर्थः, द्रक्ष्यसीत्यनेनान्वयः। तु परन्तु अवमानेन किञ्चिद्धसता मया अभिहितं कथितम्। सौम्य हे भद्र, यद्यपि आजन्मनः जन्मारभ्य मुषितं चोरितं धनम् अर्थं दद्याम् अर्पयेयम् तु किन्तु मे मम धनेः अरिणः अर्थपते. तन्नाम्नः वणिजः दारान् पत्नीं हरति यः सः तथोक्तस्य छिन्नमुखस्य कृत्रिममित्रस्य "मुखन्तु वदने मुख्ये ताद्ये छद्मनि वा पुमान्" इति भागुरिः। धनमित्रस्य वणिजः चर्म्मरत्नस्य अजिनप्रधानस्य प्रत्याशा भूयः लाभेच्छा ताम् तथोक्ताम्। न पूरयेयम् पुरणं न कुर्य्यामम्। तत् अजिन-रत्नम् अदत्त्वा एव अयुतमपि अयुतसंख्यकमपि यातनां वेदनाम् अनुभवेयम् अनुभवि-ष्यामीत्यर्थः। मे मम इयं साधीयसी दृढतरा सन्धा प्रतिज्ञा "सन्धास्थितौ प्रतिज्ञायाम्" इति विश्वः। इति एवं प्रतिदिनं प्रत्यहं तेन काराध्यक्षकान्तकेन सान्त्वनं सामोपायः तर्जनं भर्त्सनं तयोः प्राये बाहुल्ये, अनुयोगव्यतिकरे प्रश्नप्रकारे वादानुवादे इत्यर्थः, वर्त्तमाने युक्तं अनुगुणान्नपानलाभात् अनुकूलाशनपानप्राप्तेः कतिपयैः अहोभिः कति-चित् दिनैः एव विरोपितव्रणः विरोपितः चिकित्सितः व्रणः यस्य सः "विरोपित उपाध्यात्मचिकित्सितः" इति वोपालितः। अहं प्रकृतिस्थः स्वस्थतामापन्नः आसम् अभवम्।

रत्नम्, आभरणसमुद्गकञ्च तस्याः (५१)। स तु भूयस्तेयाय भ्रमन् अग्रह्यत नागरिकपुरुषैः। आपन्नेन च अमुना अनुसृत्य मदत्ये रागमञ्जरीपरिचारिकायै शृगालिकायै पूर्वप्रणयानुवर्त्तिना तद्भाण्डनिधानोद्देशः कथितः। स्म अपि चर्मरत्नम् उपायोपक्रान्तः, यदि प्रयच्छेदिह देवपादैः प्रसादः कार्य्यः' इति। तया निवेदितश्च नरपतिः अमुष्मिः मामवियोज्य उपच्छन्दनैः एव स्वं ते दापयितुं प्रयतिष्यते ततः पथ्यम्' इति। श्रुत्वैव च त्वदनुभावप्रत्ययात् अनति बस्तुना तेन तत् तथैव सम्पादितम्। अथ अहं त्वदभिज्ञानप्रत्यायिताया रागमञ्जर्य्याः सकाशात् यथेप्सितानि वस्तूनि लभमाना राजदुहितुः अम्बालिकाया धात्रीं माङ्गलिकीं त्वदादिष्टेन मार्गेण अन्वरञ्जयम्

---

(५१) अथेति। अथ अनन्तरं कदाचित् एकदा अच्युतः नारायणः तस्य अम्बरं वसनं तद्वत् पीता गौरा आतपानां प्रकाशानां त्विट् प्रभा यस्मिन् तथाभूते, चरमेऽपि अय- मुपगते वासरे दिने गोधूलिसमये इति भावः। उज्ज्वलेन दीप्तेन वेशेन अलङ्कारादि- रचनशोभया हृष्टवर्णा प्रफुल्लाकारा शृगालिका रागमञ्जर्य्याः सेविका उपसृत्य आगत्य दूरस्थाः अनुचराः सेवकाः यस्याः तादृशी सती माम् उपश्लिष्य सन्निकृष्य अब्रवीत् अवदत्। आर्य्य हे देव, दिष्ट्या आनन्देन "दिष्ट्याशमुपजोषं चेत्यानन्दे" इत्यमरः। वर्द्धसे वृद्धिं नय, शुभं ते भूयादित्यर्थः। तव सुनीतिः शोभननयः फलिता फलमस्या- जातमितीतच्प्रत्ययः, सञ्जातफलेत्यर्थः। त्वया भवता यथा यद्वत् आदिष्टं आदिष्टम् तथा तद्वत् धनमित्रं तन्नामवणिजम् एत्य अब्रवम् अवदम्। आर्य्य हे भद्र, तव एव सुहृत् मित्रम् आपन्नः आपत्प्राप्तः इति उवाच कथयामास। अथ अहं वेशसंसर्गसुलभात् वेशानां वेश्यानां संसर्गेण सम्बन्धेन सुलभः अनायासप्राप्तः तस्मात् पानदोषात् पानस्य यः दोषः तस्मात् मदिरापानादिति भावः। मत्तः पानमत्तः, अद्यैव त्वया अविमृश्य शङ्कापरिरहितं पुनः एव राजा विज्ञापणीयः निवेदितव्यः। देव, हे महाराज, देवप्रसादात्, तवानुग्रहात् एव पुरापि अयमोऽपि अर्थपतिसुषितम् अर्थपतिना चोरितं तत् अजिनरत्नं अस्मार्थे क्षम् आछादितं प्राप्तम्। अय तु इतोमध्ये इत्यर्थः। मया धननिवेश रागमञ्जर्य्याः तन्नाम गणिकायाः कश्चित् कोऽपि आचधूर्त्तः अवनिपुणः भर्त्ता

(५२)। तामेव च संक्रमीकृत्य रागमञ्जर्य्याश्च शृगालिकायाः सख्यं परमवीवृधम् अस्यां च नवनवानि प्राभृतानि उपहरन्ती कथाश्चित्राः चित्तहारिणीः कथयन्ती तस्याः परं प्रसादपात्रम् आसम्। एकदा च हर्म्यगतायाः तस्याः स्थाननिहितमपि कर्णकुवलयं स्रस्तम् इति प्रतिसमादधती प्रसभमेव प्रच्याव्य पुनः उत्क्षिप्य भूमौ स्तेन उपकन्यकापुरं कारणेन केनापि भवनाङ्गनं प्रविष्टस्य कान्तकस्योपरि प्रवृत्तकुक्कुरपारावतत्रासनापदेशात् प्रहसन्ती प्राहार्षम् सोऽपि तेन धन्यम्मन्यः किञ्चित् उन्मुखः स्मयमानो मत्कर्मप्रहासितायाः राजदुहितुः विलास-

---

प्रभुः कलासु नृत्यगीतवादित्रादिषु कवित्वेषु पाण्डित्येषु लोकवार्त्तासु लोकव्यवहारिकशास्त्रविषयेष्वित्यर्थः, अतिवैचक्षण्यात् अतिनैपुण्यात् समसृज्यत संमिलितः मैत्रीभावेनेत्याशयः। तत् सम्बन्धात् तस्य मे बन्धोः सम्बन्धः सम्पर्कः। तस्मात्। तद्भार्य्यां तस्य बन्धोः भार्य्यां स्त्रीं रागमञ्जरी नाम, वस्त्रानाम् आभरणानां प्रेषणं प्रेरणं तद् आदिः तेन, प्रतिदिनं प्रत्यहम् अन्ववर्त्ते समगच्छे। शिष्टो यथोपढौकनादिना बन्धुकुटुम्बिनीं तोषयति तथेति फलितार्थः। निकृष्टाशयतया शङ्कोचान्तः करणेन असौ कितवः धूर्त्तः अधाङ्क्षिष्ट शङ्कितवान्। तेन हेतुना तेन धूर्त्तेन वा कुपितेन क्रुद्धेन तत् चर्म्मरत्नम् अजिनरत्नं हृतं चोरितम्। तस्याः रागमञ्जर्य्याः आभरणसमुद्गकः आभरणानाम् अलङ्काराणां समुद्गकः संपुटकश्च हृत इति। "समुद्गकः सम्पुटकः" इत्यमरः।

(५२) स इति। तु परन्तु सः मद्बन्धुः भूयस्तथाय पुनः क्षुधिताय भ्रमन् अटन् नागरिकपुरुषैः नगरपालकैः अगृह्यत धृतः। पूर्वप्रणयानुवर्त्तिना प्राक्प्रणयानुरोधिना आपन्नेन आपत्पतितेन अमुना अथधूर्त्तेन अनुसृत्य अनुगत्य कदर्य्ये क्रन्दितवर्त्ते रागमञ्जर्य्याः परिचारिका सेविका तस्यै तथोक्तायै, शृगालिकायै तदाख्यायै तस्याः रागमञ्जर्य्याः भाण्डं भूषणम् तस्य निधानोद्देशः स्थापनस्थानं "भाण्डं भूषणमात्रेऽपि भाण्डं मूलवणिक्धने" इति विश्वः। कथितः उक्तः। यदि यद्यपि देवपादैः महाराजैः प्रसादः अनुग्रहः कार्य्यः करणीयः इह अत्राधिकरणे इत्यर्थः, मम अपि चर्म्मरत्नम् अजिनरत्नम् उपायैः साधनैः उपक्रान्तः वशीकृतः आयत्तीकृत इत्यर्थः, "उपक्रमो वशीकारे समारम्भे चिकित्सने" इति वैजयन्ती। प्रयच्छेत् दद्यात्। तथा कथिताङ्कुरूपं निवेदितः विज्ञापितः नरपतिः राजा असुभिः प्राणैः माम् अवियोज्य

प्रायस् आकारमात्राभिलाषमूलमिव यथा सङ्कल्पयेत्तथा मया अपि संश्रयैव किमपि चतुरम् आचेष्टितम् (५२)। आकृष्टधन्वना च मनसिजेन विद्धः सन् दिग्धफलेन पत्रिणातिमुग्धः कथं कथमपि अपासरत्। सायञ्च राजकन्याङ्गुलीयकमुद्रितां वासताम्बूलवरांशुकयुगलभूषणावयवगर्भाञ्च पेटिकां कयाचिद् बालिकया ग्राहयित्वा रागमञ्जर्या इति नीत्वा कान्तकस्यागारम् अगाम्। अगाधे च रागसागरे मग्नो नावमिव माम् उपलभ्य परमहृष्यत। अवस्थान्तराणि च राजदुहितुः मुदावहानि व्यावर्णयन्त्या मया स दुर्मतिः सुदूरम् उदमाद्यत।

---

जीवमदग्धुनङ्कात्वा उपच्छन्दनैः सान्त्वनैः एव "सान्त्वनोपच्छन्दने च समावनुनये" इति केशवः। ते तुभ्यं स्वं स्वकीयं चर्म्मरत्नमित्यर्थः दापयितुं प्रत्यर्पयितुं प्रयतिष्यते प्रयत्नपरो भविष्यतीत्यर्थः, तत् ततः नः अस्माकं पथ्यं हितं "हितं पथ्यै गते धृते" इति मेदिनी। भविष्यतीति शेषः। अनतिवक्तुना नातिभीतेन 'एसिग्धि—' इति सुः, तेन धनमित्रेण तव अनुभावः प्रभावः तस्य प्रत्ययः विश्वासः तस्मात्, इति एवं श्रुत्वेव आकर्ण्यैव तत् कथितानुरूपं सम्पादितं विहितम्। अथ ततः अहं, मृगालिका तव अभिज्ञानं चिह्नं तेन प्रत्यायितायाः विश्वाससम्बोधितायाः। रागमञ्जर्याः सकाशात् सान्निध्यात् यथेप्सितानि यथाभिलषितानि वस्तूनि द्रव्याणि लभमाना आसादिता राजदुहितुः राजकन्यायाः अम्बालिकायाः तदाख्यायिकायाः धात्रीम् उपमातरं त्वदादिष्टेन तव कथितानुरूपेण मार्गेण उपायेन अन्तरङ्गयम् अनुरञ्जितवती। मया अर्थेन माङ्गलिकी वश्यमानीतेति भावः।

(५२) तामेवमिति। तां माङ्गलिकीम् एव संक्रमीकृत्य उपायीकृत्य द्वारीकृत्येत्यर्थः, "प्रत्युपाये संक्रमे च निःश्रेण्यां संक्रमो मतः" इत्युत्पलिनी। रागमञ्जर्याः गणिकायाः अम्बालिकायाः राजकन्यायाः मध्यं सौहृद्यं परमम् अतिशयम् अविभ्रमम् अवर्धयम्। अहरहश्च प्रतिदिनं नवनवानि नूतनानि उपायनानि उत् कोचान् "उत्कोचमुपायनम्" इति त्रिकाण्ड शेषः। उपहरन्ती प्रत्यर्पयन्ती चित्तहारिणीः हृदयग्राहिणीः चित्राः अद्भुताः कथा आख्यायिकाः कथयन्ती कीर्त्तयन्ती तस्याः राजदुहितुः परम् अतिशयं कलाद्भावम् अनुग्रहभाजनम् आसम् अभवम्। एकदा कदाचित् हर्म्यमिष्टकाधि-

मत्प्रार्थिता च अहं त्वत्प्रियाप्रहितमिति मम एव मुखताम्बूलोच्छिष्टानुलेपनं निर्माल्यं मलिनांशुकञ्च अन्वेभ्यः उपाहरम्। तदीयानि च राजकन्यार्थमिति आदाय छन्नमेव अपोढ़ानि (५४)। इत्थञ्च सन्धुक्षितमन्मथाग्निः स एव एकान्ते मया उपमन्त्रितोऽभूत्—'आर्य्य ! लक्षणानि एव तव अविसंवादीनि, तथाहि मत्प्रातिवेश्यः कश्चित् कार्त्तान्तिकः 'कान्तकस्य हस्ते

---

रचितधवलगृहमित्यवदत्तः। तस्यां गतायाः स्थितायाः तस्याः अम्बालिकायाः स्थानस्थितमपि यथास्थानस्थितमपि कर्णकुवलयं कर्णस्थितं नीलोत्पलं स्रस्तं च्युतम्, इति हेतोः प्रतिसमादधती यथास्थानसन्नयती प्रमत्तेव अनवहितेव प्रच्याव्य प्रच्युतं कृत्वा कर्णतः इति शेषः। पुनर्भूयः भूमिः भुवः उत्क्षिप्य उत्तोल्य केनापि कारणेन हेतुना उपकन्यकापुरं कन्यान्तःपुरसमीपं भवनाङ्गनं भवनस्य गृहस्य अङ्गनं चत्वरं "अङ्गनं चत्वराजिरे" इत्यमरः। प्रविष्टस्य आगतस्य कान्तकस्य काराध्यक्षस्य उपरि प्रवृत्तं प्रारब्धं कुहरं सुरतं येन तादृशस्य पारावतस्य कपोतस्य त्रासनं भयप्रदर्शनं तदेव अपदेशः छलं तस्मात् तयोक्तात् "कुहरं शुषिरे दम्भे नागलोके रतेऽपि च" इत्यजयः। प्रहिण्वती क्षिपं कुर्वन्ती तेन कर्णकुवलयेन प्राहर्षम् प्रहृतवती। सः कान्तकः अपि तेन कर्णकुवलय-प्रहारेण धन्यम्मन्यः आत्मानं धन्यं श्लाघ्यं मन्यते इति धन्यम्मन्यः किञ्चिदीषत् उन्मुखः ऊर्द्धोत्क्षिप्ताननः अथतेऽसौ तथा मन्दं मन्दं हसन्नित्यर्थः, मम कर्मणा उत्पलप्रहार-रूपेण प्रहासितायाः प्रकृष्टहासं कुर्व्वन्त्या राजदुहितुः राजकन्यायाः विलासप्रायं विलासबहुलम् आकारं तादृशरूपम् आत्माभिलाससमूलमिव साभिलाषनिबन्धनमिव यथा सङ्कल्पयेत् चिन्तयेत्, तथा मयापि संज्ञया एव हसितेनैव किमपि चतुरं नैपुण्यं यथा तथा आवेष्टितं विलसितम्।

(५४) आकृष्टेति। आकृष्टम् आकर्षितं धनुः येन तयोक्तेन 'धनुर्धन्वन् नाविवा' इति धन्वनादेशः। मनसिजेन कामेन 'तत्पुरुषे कृति बहुलम्' इत्यलुक्समासः। दिग्धफलेन दिग्धं विषाक्तं फलं फलकं शल्यमित्यर्थः, यस्य तादृशेन "विषाक्ते दिग्धलिप्तकौ" इत्यमरः। पत्रिणा शरेण अतिमुग्धः अतिमात्रं विह्वलः बिद्धः भिन्नः सन् कथं कथमपि कष्टसृष्टेन अपासरत्, उपागच्छत्। सायं दिनान्ते "दिनान्ते पुंसि सायः स्यात् सायाह्ने सायमव्ययम्" इति शब्दार्णवः। कयाचित् बालिकया सेविकया राजकन्यायाः अङ्गुलीयकं हस्ताभरणं तेन मुद्रिताम् अङ्किताम् वासः नम्वद्वयं ताम्बूलं

राज्यमिदं पतिष्यति तादृशानि तस्य लक्षणानि' इत्यादिवत्। तदनुरूपश्चैव च त्वाम् इयं राजकन्यका कामयते, तदेकापत्यश्च राजा तया त्वां समागतम् उपलभ्य कुपितोऽपि दुहितुर्मरण-भयात् न उच्छेत्स्यति, प्रत्युत प्रापयिष्यति एव यौवराज्यम्। इत्यञ्च अयमर्थोऽर्थानुबन्धी। किमिति तात! न आराध्यते? यदि कुमारीपुरप्रवेशाभ्युपायं न अवबुध्यसे, ननु बन्धनागार-भित्तेर्व्यामत्रयमन्तरालम् आरामप्राकारस्य, केनचित् तु हस्त-वर्तिकागारिकेण तावतीं सुरङ्गां कारयित्वा प्रविष्टस्य उपवनं तव उपरिष्टात् अस्मदायत्तैव रक्षा (५५)। रक्षतरो हि तस्याः

---

पर्णं वरं श्रेष्ठम् अंशुकयुगलं वस्त्रयुग्मं भूषणावयवाः कतिचित्भूषणानि गर्भे अन्तरे यस्याः तथोक्तां पेटिकां पेटकम्। क्वचित् वञ्जरिकामिति पाठः। तत्र वञ्जरिका वेत्र-पटिका 'झापी' इति प्रसिद्धिः "वञ्जरी वेत्रपुटिका" इति वैजयन्ती। तां तथोक्ताम्। ग्राहयित्वा उद्वाह्य अत्र वहतेर्णिजन्तात् क्त्वा। रागमञ्जर्यां इति नीत्वा, अत्र सम्बन्ध-विवक्षायां षष्ठी यद्वा रागमञ्जर्य्यै इति तादर्थ्ये चतुर्थी, सन्धौ यकारलोपः। नयते द्विकर्मकत्वात् पेटिकाम् इति च कर्म्म द्रयूम्। कान्तकस्य काराध्यक्षस्य आगारं गृहम् अगाम् अयासीषम् अहमिति शेषः। अगाधे अतलस्पर्शे रागसागरे रागः अनुरागः स एव सागरः समुद्रः तस्मिन्, मग्नः अन्तःप्रविष्टः नावमिव तरीमिव ताम् उपलभ्य आसाद्य परमम् अतिशयम् अद्वयत हर्षम् अलभत। राजदुहितुः राजकन्यायाः सुदारुणानि दुःसहानि अवस्थान्तराणि कामजदशान्तर्गतदशाविशेषान् व्यावर्णयन्त्या वि-विशेषेण, आ-सम्यक् वर्णयन्त्या ख्यापयन्त्या मया शृगालिकया दुर्मतिः नीचप्रवृत्तिः सः कान्तकः सुदूरमतिशयम् उन्मादित उन्मत्तीकृतः। तत्प्रार्थिता तेन कान्तकेन प्रार्थिता याचिता सती कर्द तव प्रिया दयिता तया प्रहितं प्रेरितम् इति एवं सम एव मुखताम्बूलं मुखचर्वितं ताम्बूलं पर्णम् उच्छिष्टानुलेपनम् आत्मभुक्तावशिष्टाङ्गरागम्, निर्माल्यं देवोच्छिष्टद्रव्यम्, तथाहि गारुडे—"अर्व्वाक् विसर्ज्जनाद्द्रव्यं नैवेद्यं सर्व्वमुच्यते। विसर्ज्जिते जगन्नाथे निर्माल्यं भवति क्षणात्॥" इति। अथवा निर्माल्यं भुक्तोज्झितपुष्पम्, मलिनांशुकं परिहितवस्त्रम् च अन्येद्युः अपरेहनि उपायनम् उपायनीकृतम्। तदीयानि कान्तकसम्बन्धीयानि द्रव्याणीति शेषः, राजकन्यायै राजकन्यायाः निमित्ताय इति एवम् उक्त्वेति शेषः, आदाय गृहीत्वा स्वयमेव सुगृहीत

परिजनो न रहस्यं भेत्स्यति' इति । सोऽब्रवीत्—'साधु भद्रे ! दर्शितम् । अस्ति कश्चित् तस्करः खननकर्मणि सगरसुतानामिव अन्यतमः स चेत् लब्धः चणेनैतत्कर्म साधयिष्यति' इति । कतमोऽसौ ? किमिति न लभ्यते ? इति मयोक्ते येन तद्वनमित्रस्य चर्मरत्नं मुषितमिति त्वामेव निरदिक्षत् । 'यदि एवम् एहि, त्वया अस्मिन् कर्मणि साधिते चित्रैः उपायैः त्वामहं मोचयिष्यामीति शपथपूर्वं तेन सन्धाय सिद्धेऽर्थे भूयोपि निगड़यित्वा 'योऽसौ चौरः स सर्वथा उपक्रान्तो न तु धृष्टतमः

---

अपोढ़ानि त्यक्तानि । अपाविद्धमिति पाठे पर्य्यत्यजमिति । "अपोढमपविद्धञ्च विस्पष्टंत्यक्तमित्यपि" इति वैजयन्ती ।

(५५) इत्थञ्चेति । इत्थम् अनेनप्रकारेण मया एकान्ते निर्जने स एव कान्तक एव सन्धुक्षितः वृद्धिं प्रापितः प्रज्वालित इत्यर्थः, मन्मथाग्निः कामानलः यस्य स तथोक्तः, उपमन्त्रितः उपदिष्टः अभूत् । आर्य्य हे कान्तक, तव लक्षणानि चिह्नानि एव अविसंवादीनि विसंवादरहितानि सत्यानीत्यर्थः, तथाहि तद्दैवेत्यर्थः । मतप्रातिवेश्यः मम प्रतिवेशी "प्रतिवेशे चरति यः प्रातिवेश्यः स उच्यते' इति वैजयन्ती । कश्चित् कोऽपि कार्त्तान्तिकः कृतान्तं दैवं वेत्तीति ठक्, "कार्त्तान्तिकः लक्षणज्ञः" इति वैजयन्ती । तस्य कान्तकस्य आराध्यस्य हस्ते इदं राज्यं राष्ट्रं पतिष्यति आयास्यति तादृशानि लक्षणानि चिह्नानि इति एवम् आदिक्षत् अवोचत् । तत् तस्मात् अनुरूपमेव युक्तमेव इयं राजकन्या त्वां भवन्तं कामयते प्रार्थयते सा राजकन्या एकम् अपत्यं सन्तानः यस्य स तथोक्तः, कुपितोऽपि क्रुद्धोऽपि राजा अङ्गराजः तया कन्यकया त्वां भवन्तं समागतं संगतं उपलभ्य ज्ञात्वा दुहितुः कन्यायाः मरणभयात् मृत्युत्रासात् न उच्छेत्स्यति न हनिष्यति त्वामिति शेषः । प्रत्युत वस्तुतः यूनां राजा युवराजः तस्य भावः यौवराज्यं प्रापयिष्यति एव । इत्थम् अनेन प्रकारेण अयम् अर्थः उपायः अर्थानुबन्धी विशेषप्रयोजनसाधकः । तातेत्यामन्त्रणमत्यन्तात्मीयतासूचकम् । किमिति कथमेव न आरभ्यते न आसेव्यते । यदि यद्यपि कुमार्य्याः राजदुहितुः पुंस्कृटं तत्रिम् प्रवेशः अन्तर्गमनं तस्य उपायः साधनं त्वं तथोक्तम् । न बुध्यते न ज्ञायते । ननु अनुज्ञायाम् । बन्धनागारस्य कारागृहस्य भित्तेः कुड्यस्य आरामप्रकारस्य प्रमदवनप्राचीरस्य वामत्रयं वामः परिमाणविशेषः 'वाँय' इति यस्य ख्यातिः । तस्य त्रयम् । "व्यामव्यायामन्यग्रोधास्तोर्य्यक् बाहुप्रसारिती"

प्रकृष्टवैरः तत् अजिनरत्नं दर्शयिष्यति' इति राज्ञे विज्ञाप्य विक्रमेण घातयिष्यसि। तथा च सति अर्थः सिध्यति रहस्यञ्च न स्रवति' इति मया उक्तो सोऽतिहृष्टः प्रतिपद्य मामेव त्वदुपप्रलोभने नियुज्य बहिरवस्थितः, प्राप्तरूपम् इतःपरं चिन्त्यताम्' इति (५६)। प्रातश्च मया उक्तम्—'सदुक्तमल्पं, त्वन्नय एव अत्र भूयात्, आनयैनम्' इति। अथ आनीतेन अमुना मन्मोचनाय शपथः कृतः, मया च रहस्यानिर्भेदाय। विनिगडीकृतश्च स्नानभोजनविलेपनानि अनुभूय नित्यान्धकारात् काराभित्तिकोणात् आरभ्योरगास्येन सुरङ्गाम् अकरवम्। अचिन्तयञ्चैवम्—'हन्तुमनसैव अमुना मन्मोचनाय शपथः कृतः तत् अमुं

---

इति हेमचन्द्रः। अन्तरालं व्यवहितम् तिर्यक्कृतयोः स्वकरयोर्हस्तयोर्मध्यस्थानमित्यर्थः। तु अवधारणे, केनचित् हस्तवता चिप्रहस्तकारिणा ऐकागारिकेन चौरेण तावतीं तत्प्रकारां सुरङ्गां सन्धिः 'सेंध' इति यस्य प्रसिद्धिः। कारयित्वा प्रविष्टस्य बाह्यादभ्यन्तरगतस्य तव उपरिष्टात् उद्धतः अस्मदायत्तेव अस्मदधीनेव "अधीनो निघ्न आयत्तः" इत्यमरः। रक्षा पालनीयाः। वयमेव तस्याः रक्षणे नियुक्ताः सुतरां तव ते क्वापि शङ्कानास्तीति भावः।

(५६) रक्तेति। तस्याः कुमार्य्याः परिजनः सेवकजनः हि निश्चितम्, रक्ततरः अत्यनुरक्तः अतः रहस्यं गोप्यं न भेत्स्यति भेदं न घटयिष्यति। सः कान्तकः अब्रवीत् अवोचत् भद्रे हे कल्याणि, साधु शोभनं दर्शितं ज्ञापितमित्यर्थः। खननकर्मणि सन्धिभेदकर्मणि सगरसुतानामिव सूर्य्यवंशीयानां केषाञ्चित् राजतनयानामिव कश्चित् कोऽपि अन्यतमः एकः तस्करः चोरोऽस्ति। चेत् यदि स तस्करः लब्धः प्राप्तः क्षिप्रेणाल्पकालेन एतत् कर्म्म कार्य्यं साधयिष्यति सिद्धिं नयिष्यति। असौ तस्करः कतमः कः? किमिति न लभ्यते कथं न प्राप्यते इत्यर्थः, इति एवं मयोक्ते कथिते, येन अनेन धनमित्रस्य तत् चर्म्मरत्नम् अजिनश्रेष्ठं मुषितं चोरितम् इति त्वमेव भवानेव निरदिक्षत् निर्द्दिष्टवान्। यदि यद्यपि एवम् एहि आगच्छ। त्वया भवता अस्मिन् कर्म्मणि कार्य्ये सुरङ्गखननरूपे इत्यर्थः, साधिते सम्पन्ने अद्य चिह्नैः अद्भुतैः उपायैः साधनैः कौशलैरित्यर्थः, त्वा मोचयिष्यामि कारामुक्तं करिष्यामि इति एवं शपथपूर्वम्

हत्वापि नामत्यवाददोषेण स्पृशे' इति। निष्पततश्च मे निगडजाय प्रसार्यमाणपाणिस्तस्य पादेन उरसि निहत्य पतितस्य तस्यैव धसिधेन्वा शिरो व्यकृन्तम्। अकथयच्च शृगालिकाम्—'भण भद्रे! कथम्भूत: कन्यापुरसन्निवेश: ? महानयं प्रयासो मा वृथैवभूत्, अमुत किञ्चित् चारयित्वा निवर्त्तिष्ये' इति (५७)। तदुपदर्शितविभागश्च अवगाह्य कन्यान्त:पुरं प्रज्वलत्सु मणिप्रदीपेषु नैकक्रीडाखेदसुप्तस्य परिजनस्य मध्ये महित-महार्घरत्नप्रसुप्तसिंहाकारदन्तपादे हंसतुलगर्भकोमलशय्योप-

---

अङ्गीकृत्य तेन चौरेण सह सन्धाय प्रतिज्ञाय सिद्धे निष्पन्ने अर्थे प्रयोजने भूयोऽपि पुनरपि निगडयित्वा बद्धा संयम्येत्यर्थ:, योऽसौ चौर: तस्कर: स: सर्व्वथा सर्व्वप्रकारेण उपकाल चिकित्सित: नयोपदेशेन स्वभावं नीत: इत्यर्थ:, तु किन्तु धृष्टतम: अतिप्रगल्भ: प्रकृष्टचौर: अतिनिपुणतस्कर: तत् अजिनरत्नं चर्म्मभस्त्राप्रधानं न दर्शयिष्यति न प्रकाशयिष्यति इति राज्ञे अङ्गाधिपतये विज्ञाप्य निवेद्य एनं चौरं निग्रहम् अनेकप्रकारं यातयिष्यामि हनिष्यामि। तथा तादृशे मति अर्थ: प्रयोजनं सिध्यति सम्पन्नो भवति रहस्यं गुप्तं कुमारिकाप्रणयरूपव्यापारे सुरङ्गखननमित्यर्थ:, नो भवति न प्रकटीभवति। इति एवं मया उक्ते कथिते अतिहृष्ट: अत्यन्तानन्दित: स: कान्तक: मामेव प्रतिपाद्य अभ्युपगम्य तत उपप्रलोभनं वशीकरणं तस्मिन् तयोर्नौ। नियुज्य सन्निवेश्य वहि: बाह्ये अवस्थित: अभिरत: संस्थित इत्यर्थ:, इत: परम्, अनन्तरम्, प्राप्तरूपं युक्तरूपं युक्तियुक्तमित्यर्थ: चिन्त्यताम् भाव्यताम्।

(५७) प्रीतेनेति। प्रीतेन परितुष्टेन मया उक्तं कथितम्। मया यदुक्तं तदित्यर्थ:, अल्पं स्तोकम् अकिञ्चित् करमित्यर्थ:, अत्र अस्मिन् विषये त्वत्र तव नय: नीति: एव भूयान् महान्, एनं कान्तकम् आनय प्रापयेत्यर्थ:। अथ अनन्तरम् सम्मोचनाय मम बन्धनमोचनाय आनीतेन प्राप्तेन अमुना कान्तकेन शपथ: अङ्गीकार: कृत: विहित:, मया अपहारवर्म्मणा च रहस्यानिर्भेदाय गोप्यस्याप्रकटीकरणाय अङ्गीकृत:। विनिगडीकृत: निगडात् मोचित: अहं, स्नानं मज्जनं भोजनं भक्षणं विलेपनं गन्धद्रव्यादिस्वरूपं तानि तथोक्तानि, अनुभूय उपभुज्येत्यर्थ:, नित्यान्धकारात् सततिमिराच्छन्नात् कारागारबन्धनगृहस्य भित्ति: कुड्यं तस्या: कोण: गृहस्यैकदेश: तस्मात् तथोक्तात्, आरभ्य तत यावत् उरगास्येन सर्पमुखाकारखनन साधनेन यत्र

धामशालिनि कुसुमलवच्छुरितपर्य्यन्ते पर्य्यङ्कतले दक्षिणपाद-पार्ष्ण्यधोभागानुवेल्लितेतरचरणाग्रपृष्ठम् ईषद्विवृत्तमधुरगुल्फ-सन्धि, परस्पराश्लिष्टजङ्घाकाण्डम्, आकुञ्चितकोमलोभयजानु, किञ्चिद्वेल्लितोरुदण्डयुगलम् अधिनितम्बन्यस्तमुक्तैकभुजलताग्र-पेशलम् अपाश्रयान्तनिमिताकुञ्चितेतरभुजलतोत्तानतलकर-किसलयम्, आभुग्नश्रोणिमण्डलम्, अतिश्लिष्टचीनांशुकान्त-रीयम्, अनतिवलिततनुतरोदरम्, अणुतरनिःश्वासारम्भकम्प-मानकठोरकुचकुड्मलम्, (५८) आतिरश्चीनबन्धुरशिरोधरादेश-

---

फणिमुखाकारखननास्त्रविशेषेण सुरङ्गां सन्धिम् अकरवम् कृतवान्। अचिन्तयं चैवम् एवं वक्ष्यमाणरूपं भावितवान्। हन्तुमनसैव वधार्थचिन्तनेनैव अमुना कान्तकेन मन्मोचनाय मम बन्धनमुक्तये शपथः अङ्गीकारः कृतः विहितः, तत् तस्मात् एतद-वेत्यर्थः, अमुं कान्तकं हत्वापि विनाश्यापि असत्यदोषेण शपथभङ्गपापेन न स्पृशे न संश्लिष्टीभवामीत्यर्थः। सो मम निगडनाय बन्धनाय निष्पततः कारागृहात् बहिरागतः इत्यर्थः, प्रसार्य्यमाणः विस्तार्य्यमाणः पाणिर्येन तथोक्तस्य तस्य कान्तकस्य उरसि वक्षसि पादेन चरणेन निहत्य निपात्य पतितस्य भूमौ च्युतस्य तस्य कान्तकस्यैव असिधेन्वा क्षुरिकया "क्षुरिका चासिधेनुका" इत्यमरः। शिरः मस्तकं न्यकृन्तम् निकृन्तवान् अस्मि। शृगालिकाम् अकथयम् उक्तवान्, भद्रे हे कल्याणि, कन्यापुरस्य कन्यकान्तःपुरस्य सन्निवेशः संस्थानं "संस्थानं सन्निवेशे च स्वरूपे च निगद्यते" इति वररुचिः। कथम्भूतः किं स्वरूपः इति भण ब्रूहि। अयं महान् सुरङ्गः प्रयासः सुरङ्गाकरणश्रमः वृथैव निष्फलं माभूत् 'न माङ्योगे' इत्यडागमनिषेधः। अमुत्र कन्यकान्तःपुरे किञ्चित् स्तोकं चोरयित्वा मुषित्वा निवर्त्तिष्ये प्रतिनिवृत्तो भविष्यामि।

(५८) तदुपेति। तया शृगालिकया उपदर्शितः व्यक्तीकृतः विभागः प्रदेशः तं तथोक्तम्। कन्यान्तःपुरं कन्यागृहम् अवगाह्य प्रविश्य प्रज्वलत्सु दीप्तिमत्सु मणि-प्रदीपेषु मणिभिः रत्नादैः निर्म्मिता प्रदीपाः तैलवर्त्तिकादिसंस्थवह्निशिखाप्रकाराः तेषु अनेकाः नानाप्रकाराः क्रीड़ा ताभिः खेदः खिन्नः श्रमो वा तेन सुप्तस्य निद्रितस्य। महितानि स्तुतानि उत्कृष्टानि वा महार्घाणि महामूल्यानि रत्नानि मणयः तद्युक्ताः प्रसुप्तसिंहा-कारा निद्रितसिंहरूपाः दन्तपादाः यस्य तस्मिन्। [महार्हरत्नप्रत्युप्तसिंहाकारदन्तपाद]

दृश्यमाननिष्टप्ततपनीयसूत्रपर्यस्तपद्मरागरुचकम्, अर्धलग्नाधर-
कर्णपाशनिभृतकुण्डलम्, उपरिपरावृत्तश्रवणपाशरत्नकर्णिका-
किरणमञ्जरी-पिञ्जरित-विषयव्याविद्धशिथिल-शिखण्ड-बन्धम्,
आत्मप्रभापटलदुर्लक्ष्यपाटलोत्तराधरविवरम्, गण्डस्थलीसंक्रान्त-
हस्तपल्लवदर्शितकर्णावतंसकृत्यम्, उपरिकपोलादर्शतलनिषण्ण-
चित्रवितानपत्रजातिजनितविशेषकक्रियम्, आमीलितलोचने-
न्दीवरम्, अविश्रान्तभ्रूपताकम्, उद्भिद्यमानश्रमजलपुलक-
भिन्नशिथिल-चन्दनतिलकम्, आननेन्दुसम्मुखालकलतञ्च वि-
श्रब्धप्रसुप्ताम् अतिधवलोत्तरच्छदनिमग्नप्रायैकपार्श्वतया चिर-
विलसनखेदनिश्चलाम्, शरदम्भोधरोत्सङ्गशायिनीमिव सौदा-

---

इति पाठे महार्हैः बहुमूल्यैः रत्नैः मणिभिः प्रत्युप्ताः अनुविद्धाः सिंहाकारादन्तपादा इभदन्तनिर्मितपादा यस्य तादृशे इति। हंसतूलः हंसकोमलपक्षाभ्यां गर्भे यस्याः तादृशी कोमला या शय्या तल्पं उपधानमुपबर्हः च तच्छालिनि तच्छोभिनि, कुसुमानां लवैः लेशैः छुरितः व्याप्तः पर्यन्तः शेषः यस्य तथाभूते, पर्यङ्कतले पल्यङ्कतले "शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः" इत्यमरः। दक्षिणपादस्य यः पार्ष्णिः पादमूलं तस्य अधोभागः तेन अनुवेल्लितं धुन्नम् इतरचरणस्य दक्षिणेतरस्य अग्रपृष्ठं यस्मिन् तद् यथा तथा "पार्ष्णिः पाश्चात्यभागेऽङ्घ्रि पादमूलोन्मदस्त्रियोः" इति विश्वः। अनुवेल्लितेत्यत्र अनुवलितेति क्वचित् पाठः, तत्र अनुवलितः संवलितः "संवृतः स्यात् सं वलितो भिन्नोऽनुवलितोऽपि च" इति गोपालितः। ईषत् किञ्चित् विवृतं विस्तृतं मधुरं मनोज्ञं गुल्फस्य पादग्रन्थेः सन्धिः संयोगो यस्मिन्, तत् यथा तथा परस्परम् अन्योऽन्यम्, आश्लिष्टौ संसक्तौ जङ्घाकाण्डौ स्तम्भौ यस्मिन् तद् यथा तथा "कुत्सिते रहसि स्तम्भे काण्डं वर्गेऽप्युदाहृतम्" इति विश्वः। आकुञ्चितं संकोचितम् कोमलं मृदुलम् उभयं जानु उरुजङ्घयोर्मध्यभागः यस्मिन् तद् यथा तथा, किञ्चित् ईषत् वेल्लितं वक्रितम् ऊरुदण्डयुगलं यस्मिन् तद्यथा तथा। "वेल्लितं वक्रितं समे" इति वैजयन्ती। नितम्बस्य श्रोण्याः पश्चाद्भागः तस्य उपरि अधिनितम्बं विभक्त्यर्थेऽव्ययीभावः। स्रस्तं च्युतं यथा तथा सुप्तं शिथिलं यद् एकभुजलताग्रम् एकभुजलतायाः बाहुलतायाः अग्रम् अग्रभागं तेन पेशलं चारु यथा तथा।

मिनीं राजकन्याम् अपश्यम् (५८)। दृष्ट्वैव स्फुरदनङ्गरागरञ्जितः चोरयितव्यनिस्पृहः तत्रैव तावत् चौर्यमनाच्छादयः किंकर्त्तव्यतामूढः क्षणमतिष्ठम्। अतर्कयञ्च—'न चेत् इमां वामलोचनामाप्नुयां न स्पृशति मां जीवितुं वसन्तबन्धुः। अस्पृष्टेतितपरामृष्टा च इयमतिबाला व्यक्तमार्त्तरवेण निष्ठ-

---

अपाश्रयः शिरोभागः तस्य अन्ते पर्यन्ते निमिलितायाः निश्चितायाः आकुञ्चितेतरायाः विस्तारितायाः भुजलतायाः बाहुवल्ल्याः उत्तानम् ऊर्ध्वमुखशयितं तल स्वरूपं यस्य तादृशः वारः पाणिः किसलयं पल्लवमिव यत्र क्रियायाम्। आभुग्नमीषत् कुटिलं श्रोणिमण्डलं कटिस्थानं यस्मिन् तद् यथा तथा। अतिशयेन अत्यधिकेन श्लिष्टं लग्नं चीनांशुकस्य चीनदेशीयवस्त्रस्य अतिसूक्ष्मस्येत्यर्थः, अन्तरीयम् अधोवस्त्रम् यस्मिन् तद् यथा यथा "अन्तरीयोपसंव्यानपरिधानान्यधोंऽशुके" इत्यमरः। अनतिवलितमीषद्वलितं नातिप्रह्वमित्यर्थः, अनुन्नतम् अतिनीचम् उदरं यस्मिन् तद् यथा तथा। अणुतरेण अतिसूक्ष्मेण अल्पायासेनेत्यर्थः, अतनुतरेति पाठे अतणुतरेण महतेत्यर्थः, प्रसुप्तस्य श्वासक्रियाधिक्यात् वदेत्याशयः। निःश्वासारम्भेण निःश्वासवृत्त्या कम्पमाने वेपमाने कठोरे कठिने कुचकुड्मले पयोधरद्वयविकाशोन्मुखप्रौढकालिके यस्मिन् तद् यथा तथा।

(५९) आतीति। आ ईषत् तिरश्चिनः वक्रः बन्धुरः नम्रः सुन्दरो वा यः शिरोधरोद्देशः ग्रीवाप्रदेशः तस्मिन् दृश्यमानं दर्शनीयं निष्टप्तम् अनलेन तापितं तपनीयं सुवर्णं तस्य सूत्रं तन्तुः तस्मिन् पर्यस्तः संलग्नः पद्मरागः लोहितकः रुचकः अङ्गुलिकामणिः यस्मिन् तत् यथा तथा। "बन्धुरं सुन्दरे नम्रे" इति व्याडिः। "तपनीयं शातकुम्भं गाङ्गेयं गर्भकर्बुरम्" इत्यमरः। "रुचकोऽङ्गुलिकामणिः" इति वैजयन्ती। अर्द्धम् एकदेशः लग्नं यस्य सः, अर्द्धलग्नः अधरः अधोभागो यस्य तादृशं कर्णपाशे श्रुतिमूले निभृतं निश्चलं कुण्डलं कर्णभूषणं यस्मिन् यथा तथा "अधस्तादपि चाधरः" इत्यमरः। उपरि परावृत्तः समुत्तानः यः श्रवणपाशः श्रवणप्रान्तप्रदेशः पाश इव समानाकृतित्वात् तथेति सूचितम्, तस्य रत्नकर्णिकायाः मणिमयकुण्डलस्य किरणानां मयूखानां मञ्जरीभिः चयैः पिञ्जरितः पिङ्गलीकृतः विषमग्रथनार्द्धं व्यायितः बद्धः आ ईषत् शिथिलः श्लथः मन्दबन्धनमित्यर्थः, शिखण्डबन्धः केशकलापः यस्मिन् यथा तथा। "कर्णिका तालपत्रं स्यात् कुण्डलं कर्णवेष्टनम्"

ब्यामो मनोरथम्, ततोऽहमेवाभ्यीये। तत् इयंमत्प्रतिपत्तिः' इति नागदन्तलग्नमिथ्यांसवालुकावाल्कवर्त्तितं फलकमादाय मणिसमुद्गकात् वर्णवर्त्तिकाम् उद्धृत्य तां तथाशयानां तस्याश्च माम् आबद्धाञ्जलिं चरणलग्नमालिखमार्थ्याञ्चैताम् (६०)।

---

इत्यमरः। आत्मनः स्वस्य प्रभा दीप्तिः तस्याः पटलः समूहः तेन दुर्लक्ष्य दुर्दर्शं पाटलस्य श्वेतरक्तोष्ठस्य विवरं छिद्रं यस्मिन् तत् यथा तथा। "श्वेतरक्तस्तु पाटलः" इत्यमरः। गण्डस्थल्यां कपोलदेशे संक्रान्तः मिलितः हस्तपल्लवः करकिसलयः तेन दर्शितं प्रकटितं कर्णावतंसः कर्णभूषणं तस्य कृत्यं कार्य्यम् यस्मिन् तद् यथा तथा। कपोल एव आदर्शतलं दर्पणतुल्यं तस्य उपरि, उपरिकपोलादर्शतलं यत्र निषक्ता संक्रान्ता चित्रवितानस्य ऊर्द्ध्वस्थितविविधचित्रितचन्द्रातपस्य पत्रजातिः प्रत्नक्रिया तया जनिता उत्पादिता विशेषकक्रिया तिलकादिक्रिया यस्मिन् तद् तद् यथा तथा। "तमालपत्र-तिलकचित्रकाणि विशेषकम्" इत्यमरः। आ-सम्यक् मीलिते मुद्रिते लोचने नयने इन्दिवरे नीलोत्पले इव यस्मिन् तद् यथा तथा। अविश्रान्ते निश्चले भ्रुवौ पताके केतू इव यस्मिन् तद यथा तथा। उद्भिद्यमानम् उद्गतं जायमानमित्यर्थः, यत् श्रमजलं घर्म्मः तस्य पुलकाः बिन्दवः तैः भिन्नं द्वैधीकृतम् अतएव शिथिलम् आर्द्रचन्दनतिलकं यत्र तद यथा तथा। "पुलको बिन्दुरोमाञ्चयोरपि" इति वैजयन्ती। आननं मुखम् इन्दुः चन्द्रः इव तस्य सन्मुखे अवभासी अलकाः चूर्णकुन्तलाः लतावल्लिरिव यत्र तद् यथा तथा। इत्येतानि क्रियाविशेषणानि। विस्रब्धेन शङ्कारहितेन सुप्ता निद्रिता तां तथोक्ताम्। अतिधवलः निरतिशयशुभ्रः यः उत्तरच्छदः उपर्य्यास्तरणपटः तस्मिन् निमग्नप्रायः गात्रेण निमग्नः एकपार्श्वो यस्याः तस्याः भावः तया। चिरं दीर्घदीनं विलसनं स्फुरणं तेन यः खेदः क्लान्तिः, तेन निश्चलां चाञ्चल्यरहिताम्। शरदम्बुधरः शरन्मेघः तस्य उत्तराङ्गेन मध्ये नेति एति तथोक्तां "मध्योन्नतिः समुत्सङ्गी" इति वैजयन्ती। सौदामनीं तडितमिव राजकन्यां राजतनयाम् अपश्यम अवलोकितवान्।

(६०) दृष्ट्वेति। दृष्ट्वा संवीक्ष्य चकितः, तत्क्षणमात् उज्ज्वलनीलमणौ "प्रियायं चकितं भीतेरस्थानेऽपि भयं महत्।" इति। स्फुरन् उद्भवन् अनङ्गस्य कन्दर्पस्य रागः आवेशः यस्य स तथोक्तः। चोरयितव्ये मुषितव्यविषये निस्पृहः आकाङ्क्षारहितः अहमिति शेषः। तया राजकन्यया एव तावत् सर्व्वं चौर्य्यमाणं ह्रियमाणं हृदयं मनः यस्य स तथोक्तः। किं कर्त्तव्यविमूढः अयं किं कर्त्तव्यमिति ज्ञानविरहितः सन्

'त्वामयमाबद्धाञ्जलि दासजनस्तमिममर्थमर्थयते।
स्वपिहि मया सह सुरतव्यतिकरखिन्नेव, मा मैवम्' ॥ (६१)

हेमकरण्डकाच्च वासताम्बूलवीटिकां कर्पूरगुटिकां पारिजातकञ्च उपयुज्य अलक्तकपाटलेन तद्रसेन सुधाभित्तौ चक्रवाकमिथुनं निरष्ठीवम्। अङ्गुलीयकविनिमयञ्च कृत्वा कथं कथमपि निरगाम्। सुरङ्गया च प्रत्येत्य बन्धनागारं तत्र बद्धस्य नागरिकवरस्य सिंहघोषनाम्नः तेषु एव दिनेषु मित्रत्वेन

---

क्षणं क्षणकालम् अतिष्ठम् स्थितवान्। अतर्कयच्च वितर्कितवान् चेत् यदि इमां वामलोचनां वामे चारुणी लोचने यस्याः ताम्, न आप्नुयां न लभेय तर्हि वसन्तबन्धुः अनङ्गः मां जीवितुं प्राणान् धारयितुं न मृष्यति सहते 'वर्त्तमानसामीप्ये वर्त्तमानवद्वा' इति भविष्यदर्थे वर्त्तमाना। अतिबाला अत्यन्तसुकुमारी इयं राजकन्या असङ्केतिता अज्ञातसङ्केता परामृष्टा स्पर्शिता स्पृष्टेत्यर्थः, व्यक्तः स्पष्टः रवः स्वरं तेन मे मम मनोरथाम् अभिलाषं निहन्यात् नाशयेत् दूरीकरिष्यतीत्यर्थः। ततः तस्मात् अतएवेत्यर्थः, अहम् एव आत्मनीये आहतो भविष्यामि। 'आङो यमहनः' इत्यात्मनेपदम्। तत् तस्मात् अत्र अस्मिन् विषये प्रतिपत्तिः कर्त्तव्यत्वमित्यर्थः। नागदन्तोऽवलम्बनकाष्ठम् 'खुंटी' इति यस्य भाषा प्रसिद्धिः। "नागदन्तोद्विरपदे गृहान्निर्गतदारुणि" इति विश्वः। तत्र लग्नं स्थापितं निर्य्यासवालुकाकल्केन चिक्कणकाथद्रव्येण वर्णितं वर्णो लोहितादि सः सञ्जातो यस्मिन् तम्। फलकं काष्ठपट्टिकाम् आदाय गृहीत्वा मणिसमुद्गकात् रत्नमयसम्पुटकात् "समुद्गकः सम्पुटकः" इत्यमरः। वर्णवर्त्तिकां वर्णानां रञ्जनद्रव्याणां वर्त्तिकां लेखनसाधनतूलिकां ताम्। "तूलिका वर्णवर्त्तिका" इति वैजयन्ती। उद्धृत्य गृहीत्वा तथाशयानां पूर्व्वोक्तप्रकारेण निद्रितां तां राजकन्यां तस्याः राजकन्यायाः चरणलग्नं पादसंस्पृष्टम् आबद्धाञ्जलिं युक्तपाणिं माम् एताम् वक्ष्यमाणरूपाम् आर्य्याच्छन्दानुबन्ध-मात्रा-यतिनिर्द्दिष्टमयी वाक् ताम् "यस्याः प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि। अष्टादश द्वितीये पञ्चदश चतुर्थके सार्य्या" इति लक्षणपरिशेषात्। आलिख्यं सम्यक् लिखितवान्।

(६१) त्वामिति। अयं दासजनः मद्रूपकिङ्करः बद्धाञ्जलिः कृताञ्जलि यथा तथा इति क्रियाविशेषणम्। त्वाम् इमं वक्ष्यमाणरूपम् अर्थं प्रयोजनम् अर्थयते याचते।

उपचरितस्य 'एवं मया हतस्सपत्नो कान्तकस्त्वया प्रतिभिद्य रहस्यं लब्धव्यो मोक्षः' इत्युपदिश्य सह शृगालिकया निरक्रामिषम्। नृपतिपथे च समागत्य रक्षिकपुरुषैः अग्रहीषि। (६२) अचिन्तयच्च—'अलमस्मि जवेनापसर्तुमनासृष्ट एवैभिः, एषा पुनर्वराकी गृह्येत, तत् इदमत्र प्राप्तरूपम्' इति। तान् एव चपलम् अभिपत्य स्वपृष्ठसमर्पितकूर्परः पराङ्मुखः स्थित्वा यद्यहमस्मि तस्करः, भद्राः! बध्नीत मां, युष्माकमयमधिकारो न पुनरस्या वर्षीयस्याः, इत्यवादिषम्। सा तु तावता उन्नीतमदभिप्राया तान् सप्रणामम् अभ्युपेत्य 'भद्रमुखाः! मम एष पुत्रो वायुग्रस्तः चिरञ्चिकित्सितः। पूर्वेद्युः प्रसन्नकल्पः प्रकृतिस्थ एव जातः, जातास्थया मया बन्धनात् निष्क्रमय्य स्नापितोऽनु-

---

अर्थधातोर्याचनार्थत्वात् याचतेश्च द्विकर्मकत्वात् त्वामर्थश्च कर्मद्वयम्। सुरतं निधुवनं तस्य व्यतिकरः व्यापारः संसर्ग इत्यर्थः, तेन खिन्ना विश्रान्ता इव मया अपहारवर्मणा सह स्वपिहि निद्रां लभस्व। एवं सुरतखेदं मा विनेत्यर्थः। अत्रैकमाशब्दो विनार्थकत्वात् एवमिति द्वितीयान्तं स्फुटम् अपरश्च निषेधवाचकः, मा स्वपिहि त्वमिति शेषः। यद्वा विनेत्यध्याहारेणार्थो ग्रहणीयः। मामेति "अमानोनाः प्रतिषेधे" इति शासनात्, चादरे वीप्सा।

(६२) इमेति। हेमकरण्डकात् स्वर्णमयपेटकात् वासताम्बूलवीटिकां सुवासितनागवल्लीदलवीटिकां यदाह वात्स्यायनः—"नागवल्लीपलाशानां तैलाक्तानां रसालतः। वेष्टनं वीटिका प्रोक्ता चन्द्रमन्दारवर्णयुक्" ॥ इति। 'मिठा पानेर खिलि' इति वङ्गीयाः। कर्पूरगुटिकां कर्पूरखण्डम् पारिजातकं परिणः अद्रेर्जातं पारिजातं मन्दारपुष्पं तादृव सुगन्धिद्रव्यमिवार्थे कन्। सुगन्धखदिरमित्यर्थः। उपयुज्य भुक्त्वा सुधाभित्तौ सुधया चूर्णेन धवलिता भित्तिः कुड्यं तस्यां "सुधालेपोऽस्त्रियां कुड्यः" इत्यमरः। अलक्तकः यावकरसः इव पाटलः रक्तः तेन। तद्रसेन तस्य पारिजातकनिश्रितताम्बूलचर्वितरसेन चक्रवाकमिथुनं चक्रवाकः पक्षिविशेष. 'चकाचकि' इति भाषा, तयोः मिथुनं द्वन्द्वं निरष्ठीवम् निष्ठीवनेन रचितवानित्यर्थः। अङ्गुलीयकस्य अङ्गुलिकाभरणस्य विनिमयं व्यत्ययं कृत्वा कथं कथमपि भत्यतिकष्टेनापीत्यर्थः,

लेपितश्च परिधाप्य निष्प्रवाणियुगलम्, अभ्यवहार्य्य परमान्नमौशीरेऽद्य कामचारः कृतोऽभूत् (६२)। अथ निशीथे भूय एव वायुनिघ्नः 'निहत्य कान्तकं नृपतिदुहित्रा रमेयम्' रंहसा परेत्य राजपथम् अभ्यपतत्। निरूप्य च अहं युतम् एवंगतम् अस्यां वेलायाम् अनुधावामि। तत्प्रसीदत, वद्धेन मह्यमर्पयत' इति यावत् असौ क्रन्दति, तावदहं 'स्थविरे! केन देवो मातरिश्वा बद्धपूर्वः? किमिते काकाः शौण्डीर्यस्य मे नियन्तारः? शान्तं पापम्' इत्यभ्यधावम्। असौ अपि अमीभिः 'त्वमेव

---

निरगाम् निर्गतवान्। सुरङ्गया सन्धिपथेन च बन्धनागारं कारागृहं प्रत्येत्य प्रत्यागत्य तत्र बन्धनगृहे तेषु एव दिनेषु मम कारागृहे वास्तव्यदिवसेषु मध्ये इत्यर्थः, मित्रत्वेन मैत्रीभावेन उपचरितस्य आरोपितस्य सख्यभावापन्नस्येत्यर्थः,बद्धस्य निगडितस्य नागरिकस्य नगरवासिनः सिंहघोषनाम्नः एतन्नामधेयस्य,अत्र शेषे षष्ठी। मया अपहारवर्म्मणा तपस्वी अनुकम्पार्हः "तपस्वीचानुकम्पार्हः" इति हलायुधः। कान्तकः कारावलः एवं निश्चितम्। हतः व्यापादितः, तत्त्वया यथार्थेन रहस्यं गोप्यं प्रतिपाद्य प्रकाश्य मोक्षः मोचनं लब्धव्यः प्राप्तव्यः त्वयेति शेषः। इति एवम् उपदिश्य उपदेशं दत्वा शृगालिकया सह निरक्रामिषम् निरगमम्। नृपतिपथे राजवर्त्मनि समागत्य यात्वा रक्षिपुरुषैः नगरपालैः अगृह्ये गृहीतः।

(६१) अचिन्तयञ्चेति। अचिन्तयम् अभावयम्। एभिः रक्षिपुरुषैः अनाक्रष्टः अस्पृष्टः लवेन वेगेन अपसर्त्तुं पलायितुम् एव अलं समर्थः अस्मि "अलं व्यर्थः समर्थयोः" इत्यमरः। पुनः किन्तु वराकी दीना एषा शृगालिका, गृह्येत धृता भविष्यति। तत् तस्मात् इदं वक्ष्यमाणरूपम्, अत्र अस्मिन् विषये प्राप्तरूपं युक्तम्। इति अचिन्तयमित्यनेनान्वयः। तान् रक्षिपुरुषान् प्रति चपलं सत्वरं यथा तथा अभिपत्य उपगम्य एव स्वस्य पृष्ठे समर्पितौ सन्निहितौ कूर्परौ कफोणी येन स तथोक्तः "स्यात् कफोणिस्तु कूर्परः" इत्यमरः। पराङ्मुखः विगताशः खिन्नः, भद्राः हे राजपुरुषाः, अहं यदि तस्करः चोरः अस्मि, मां बध्नीत बन्धनं कुरुत। युष्माकं राजपुरुषाणाम् अयम् अधिकारः तस्करबन्धनरूपः पुनः किन्तु न अस्याः समीपतरायाः वर्षीयस्याः वृद्धायाः इति एवम् अवादयम् उक्तवान्। तावता तत्परिमितवचनेन उक्तैः श्रवणमात्रेण अवगतः मम

उन्मत्ता, यां अनुन्मत्त इत्युन्मत्तं मुञ्चवती धत्तम् इदानीं बध्ना-तीति इति निन्दिता कदर्थिता रुदत्येव माम् अन्वधावत्। गत्वा च रागमञ्जरीगृहं चिरवियोगविक्लवाम् इमां बहुविधं समाश्वास्य तां निशार्धशेषमनयम्। प्रभाते पुनः उदारकेण च समगच्छे। (६४)

---

अभिप्रायो यथा सा तथोक्ता, सा शृगालिका तान् राजपुरुषान् सप्रणामं प्रणामसहितम् अभ्युपेत्य सम्मुखमागत्य भद्रमुखाः हे मङ्गलास्पदाः, वायुग्रस्तः वातुलः चिरं दीर्घदिनं व्याप्य चिकित्सितः चिकित्सकाधीनं नीतः मम एषः पुरवर्त्ती पुत्रः तनयः, पूर्वेद्युः पूर्वाह्णे प्रकृतिस्थः स्वभावस्थः प्रसन्नकल्पः प्रफुल्लप्रायः जातः प्राप्त इत्यर्थः। जातास्था आतप्रत्ययतया सुस्थतां प्राप्त इति मनीषयेत्यर्थः। मया शृगालिकया बन्धनात् निगड़ात् निष्क्रमय्य मोचयित्वा स्नापितः निमज्जयितः अनुलेपितः गन्धद्रव्येण चर्चयितः निष्प्रवाणि-युगलं नूतनवासद्वयं "अनाहतं निष्प्रवाणि तन्त्रकञ्च नवाम्बरे" इत्यमरः। परिधाप्य परिधानं कारयित्वा। परमान्नं पायसम् अभ्यवहार्य्य भोजयित्वा। अद्य शौशीरे शयनासने "शौशीरं शयनासनम्" इति हलायुधः। कामाचारः स्वेच्छाचारः कृतः अभूत्।

(६४) अथेति। अथ ततः परम् निशीथे अर्द्धरात्रे भूयः पुनः एव वायुनिघ्नः वाताधीनः। कालकं काराध्यक्षं निहत्य व्यापाद्य नृपतिदुहित्रा राजकन्यया सह रमेयम् क्रीड़ां करोमि। परेण अतिशयेन रंहसा वेगेन राजपथं राजमार्गम् अभ्यपतत् बहिर्गतवान्। अहं, युवम् एवंगतम् एतदवस्थं निबध्य दृष्ट्वा अस्यां वेलायाम् अर्द्धरात्रे अनुधावामि अन्वादागच्छामि। तत् तस्मात् प्रसीदत कृपां कुरुत इत्यर्थः। एनं पुत्रं बद्धा नियम्य मह्यं शृगालिकायै अर्पयत दत्त। इति एवम् असौ शृगालिका यावत् यावन्तं कालं क्रन्दति रोदिति, तावत् तर्हि अहं, स्थविरे हे हण्डे, केन जनेन, दीव्यतीति देवः पचादिग्रहणस्य बाधकबाधनार्थत्वादच्। मातरिश्वा वातः वद्धपूर्व्वः पूर्व्वं बद्धः इति तथा। शौङ्गेयः पक्षिविशेषः नीडपक्षयुक्तः पक्षिणामरिः तस्य "तिवच्छदस्तु शौङ्गेयो विहङ्गारातिरित्यपि" इति वैजयन्ती। काकाः वायसाः यथा तथा मे मम एते नियन्तारः बन्धनकर्त्तारः किम्? यथा शौङ्गेयस्य संयमने काकानां सर्व्वथैवासामर्थ्यं तथा मे बन्धनमिति भावः। पापम् अनिष्टं शान्तम् उपसमितम्। इति अभ्यधावम् धावितवान्। अमीभिः राजपुरुषैः असौ शृगालिका अपि, त्वमेव उन्मत्ता वायुरोगयस्ता सा त्वम् उन्मत्तं वातुलम् अनुन्मत्तः वायुरोगयुक्त इति मत्वा। मुञ्चवती मोचन

अथ भगवन्तं मरीचिं वेश्याकच्छात् उत्थाय पुनः प्रतिपन्नतपःप्रभावप्रत्यापन्नदिव्यचक्षुषम् उपसंक्रम्य तेनास्मेवम्भूतत्वद्दर्शनम् अवगमितः। सिंहघोषश्च कान्तकापचारं निर्भिद्य तत्पदे प्रसन्नेन राज्ञा प्रतिष्ठापितः। तेन एव चारकसुरङ्गापथेन कन्यापुरप्रवेशं भूयोऽपि मे समपादयत्। समगंसि च अहं शृगालिकामुखविसृतवार्त्तानुरक्तया राजदुहित्रा। तेषु एव दिवसेषु चण्डवर्मा सिंहवर्मावधूतदुहितृप्रार्थनः कुपितोऽभियुज्य पुरम् अवारुणत्। अमर्षणश्च अङ्गराजो यावत् अरिः पारग्रामिकं विधिमाचिकीर्षति तावत् स्वयमेव सालं निर्भिद्य प्रत्यासन्नानपि सहायान् अप्रतीक्षमाणो निर्गत्य अभ्यधिकबलेन विद्विषा महति सम्पराये भिन्नवर्मा सिंहवर्मा बलात् अगृह्यत (६५)। अम्बालिकां च बलवदभिगृह्य चण्डवर्मणा हठात्

---

विदधती, इदानीं साम्प्रतं कः पुरुषः तम् उन्मत्तं बध्नाति नियच्छते, इति निन्दिता गर्हिता कदर्थिता तिरस्कृता, रुदती क्रन्दतीव शृगालिका माम् अन्वधावत् पश्चात् आगतवतीत्यर्थः। रागमञ्जरीगृहं मदवल्लभागारं गत्वा यात्वा चिरं दीर्घदिनं यो वियोगः विच्छेदः तेन विक्लवा खिन्ना ताम् इमां रागमञ्जरीं बहुविधं नानाप्रकारं समाश्वास्य आश्वासं विहित्य तं तादृशं निशाशेषं रात्र्यवसानम् अनयम् नीतवान्। प्रभाते उषसि पुनर्भूयः उदारकेन मत्सख्या समगच्छे मिलितवानित्यर्थः।

(६५) अथेति। अथ अनन्तरम्, वेश्याकच्छात् वेश्याजनव्यसनात् उत्थाय उद्गत्य पुनर्भूयः प्रतिपन्नं प्राप्तं यत् तपः तस्य प्रभावः प्रतिभा तस्मात् प्रत्यापन्नं प्रत्युपस्थितं दिव्यं वैशिष्टं चक्षुः येन तथाविधम्। भगवन्तं षडैश्वर्य्यशालिनं मरीचिं महर्षिम् उपसंक्रम्य समुपेत्य तेन मरीचिना एवंभूतं एतेन प्रकारेण त्वत् तव दर्शनं विलोकनम् अवगमितः प्रतिबोधितः अस्मि अहमिति शेषः। सिंहघोषः अपहारवर्म्मणः कारागृहबन्धुः कान्तकापचारं कान्तककृतदोषं कान्तकोऽवैधभावेन राजतनयां प्रत्यासक्तः इत्यभिज्ञाय मदनुरोधेन केनापि स व्यापादितः इत्यनुबन्धेनेति भावः। निर्भिद्य प्रकटीकृत्य प्रउन्नेन सन्तुष्टेन राज्ञा अङ्गराजेन तत्पदे तस्य कान्तकस्य पदे कारांध्यक्ष-

परिणेतुम् आत्मभवनम् अनीयत। कौतुकञ्च स किल 'क्षपावसाने विवाहः' इति अबध्नात्। अहञ्च धनमित्रगृहे तद्विवाहाय एव पिनद्धमङ्गलप्रतिसरः तमेवम् अवोचम्— 'सखे! समापतितमेव अङ्गनाथाभिसरं राजमण्डलम्। सुगूढमेव सम्भूय वीरवृद्धैः तत् उपावर्त्तय। उपावृत्तस्य च कृतकृत्यः क्षत्तशिरसमेव मत्तुं द्रक्ष्यसि' इति। 'तथा' इति तेन अभ्युपगते गतायुषोऽमुष्य भवनम् उत्सवाकुलम् उपसमाधीयमानपरि-

---

रूपे प्रतिष्ठापितः निर्द्दिष्ट इत्यर्थः। तेन मतङ्गतवर्त्मना चारकसुरङ्गापथेन चारके कारागृहे सुरङ्गा सन्धिः सा एव पन्था तेन। भूयोऽपि पुनरपि मे मम कन्यापुरप्रवेशं कन्यापुरगमनं समपादयत् निष्पन्नमकरोदित्यर्थः। अहम् अपहारवर्म्मा शृगालिकायाः मुखं दधात् विसृतवार्त्ता निर्गलितवृत्तान्तः तया, अनुरक्ता आसक्तियुक्ता तया तथोक्तया, राजदुहिता राजकन्यया सह समगंसि युक्तः मिलितो वेत्यर्थः, संपूर्व्वगमेः लुङ्ः इ, 'समोगम्यृच्छि—" इत्यात्मनेपदम् सुच्। तेषु एव दिवसेषु एतावत्सु दिनेषु सिंहवर्म्मणा अङ्गराजेन अवधूता अवज्ञाता दुहितुः कन्यायाः प्रार्थना यस्य स तथोक्तः, कुपितः क्रुद्धः चण्डवर्म्मा राजवाहनस्य बन्धनकर्त्ता अभियुज्य अतिभूय पुरं नगरम् अवारुधत् अवरुरोध। अमर्षणः मर्षणासहिष्णुः सकोपः अङ्गराजः सिंहवर्म्मा यावत् यर्हि अरिः शत्रुः चण्डवर्म्मा पारग्रामिकं परग्रामावरोधनोचितं विधिं विधानं नगरपीडनं जनानामर्थापहरणादिकञ्चेति भावः। आ सम्यक् चिकीर्षति कर्त्तुमिच्छति अभिलषतीत्यर्थः। तावत् तर्हि स्वयमेव आत्मना सालं प्रकारं नगरावरणमित्यर्थः, निर्भिद्य भित्त्वा अप्रतीक्षमाणः अनपेक्षमाणः प्रत्यासन्नानपि निकटवर्त्तिनोऽपि सहायान् साहाय्यकारिणः निर्गत्य बहिरेत्य महति भयानके सम्पराये युद्धे अभ्यधिकबलेन प्रभुतशौर्य्येण द्विषा शत्रुणा चण्डवर्म्मणा भिन्नवर्म्मा छिन्नतनुत्रः "तनुत्रं वर्म्म दंशनम्" इत्यमरः। सिंहवर्म्मा बलात् शौर्य्यात् अपरुध्य गृहीतः।

(९९) अम्बेति। चण्डवर्म्मणा अम्बालिकां सिंहवर्म्मणः सुतां बलवत् यथा तथा अभिगृह्य आक्रम्य हठात् रभसात् परिणेतुं विवाहकर्त्तुम् आत्मभवनं स्वपुरम् अनीयत आनीतः। स किल चण्डवर्म्मा क्षपावसाने रात्रिशेषे विवाहः परिणयः इति हेतोः कौतुकं मङ्गलसूत्रम् अबध्नात् बबन्ध। धनमित्रगृहे मद्बन्धुभवने तस्याः अम्बालिकायाः विवाहः परिणयः तस्मै तथोक्ताय एव अहम् अपहारवर्म्मा पिनद्धः बद्धः मङ्गलप्रतिसरः

अथोपकरणम् इतस्ततः प्रवेशनिर्गमप्रवृत्तलोकसम्बाधम् अहमस्त्रस्वस्तिकः सह प्रविश्य मङ्गलपाठकैः, अम्बालिकापाणि-पल्लवम् अग्नौ साक्षिणि आथर्वणेन विधिना अर्प्यमाणम् आदित्समानस्य आयामिनं बाहुदण्डम् आकृष्य क्षुरिकया उरसि प्राहार्षम्। (६७) स्फुरतश्च कतिपयान् अन्यानपि यम-विषयम् अगमयम्। हतविध्वस्तश्च तद्गृहम् अनुविचरन्

---

शुभसूत्रकहस्तस्थसूत्रं येन स तथोक्तः। "हस्तसूत्रं प्रतिसरः" इति वैजयन्ती। तं धनमित्रम् अनीचम् अकथयम्। सखे हे बन्धो, अङ्गनाथाय अङ्गाधिपतये अभिसरं सहायकम्, राजमण्डलं राजसमूहं समापतितं समागतम् एव पौरवृद्धैः पुरप्राचीनैः सुगूढं सुगुप्तमेव सम्भूय एकत्रीभूय तत् राजमण्डलम् उपावर्त्य प्रतिनिवर्त्य, तेषां कृत्यं राज्ञा स्वयमेव प्राक् विहितत्वात् न तेषां साहाय्यमपेक्षणीयमित्युक्त्वा प्रतिनिवर्त्तयेति भावः। कृतकृत्यः सम्पन्नक्रियः उपाहृतः पुनरागतः सन् कृत्तशिरसं कृत्तं छिन्नं शिरः मस्तकं यस्य तम्, एव शत्रुम् अरातिं चण्डवर्माणमित्यर्थः, द्रक्ष्यसि अवलोकयिष्यसि। तेन धनमित्रेण तथा तद्वत् इति अभ्युपगते स्वीकृते गतायुषः क्षीणजीवनकालस्य अमुष्य चण्डवर्मणः, उत्सवः नियताह्लादजनकव्यापारः तेन आकुलं व्याप्तं तथा भूतम्। उपसमाधीयमानं संपाद्यमानं परिणयस्य पाणिग्रहणस्य उपकरणं यस्मिन् तथाभूतम्। इतस्ततः समन्तात् प्रवेशनिर्गमा गतागतानि तत्र प्रवृत्तः संलग्नः यो लोकः तेन, संबाधं संकटं "संकटं ना तु संबाधः" इत्यमरः। भवनं गृहं मङ्गलपाठकैः वन्दिभिः सह अवध्या हस्तान्तरिता शस्त्रिका क्षुरिका यस्य स तथोक्तः। प्रविश्य अन्तर्गत्य अग्नौ अनले साक्षिणि साक्षिकृते आथर्वणेन पुरोधसा "आथर्वणः पुरोधाः स्याच्छान्तिपुष्टि-करो हितः" इति कामन्दकः। विधिना विधानेन, यद्वा आथर्वणेन अथर्ववेदोक्ताचारेण अर्प्यमाणं दीयमानम् अम्बालिकापाणिपल्लवम् अम्बालिकायाः करकिसलयं आदित्समानस्य आदातुमिच्छतः आयामिनं दैर्घ्यवन्तं बाहुदण्डं भुजदण्डम् आकृष्य गृहीत्वा क्षुरिकया असिपुत्र्या उरसि वक्षसि प्राहार्षम् हतवान्।

(६७) स्फुरतश्चेति। स्फुरतः तत्प्रतिवादिन इत्यर्थः, कतिपयान् कांश्चित् अन्यान्, पारिषदवर्गानित्यर्थः। यमविषयं यमदेशम् अगमयम् प्रेरयम्। हतविध्वस्तं हतं नष्टं विध्वस्तं नष्टोन्मुखं तद्गृहं चण्डवर्मावासम् अनुविचरन् पर्यटन् विशालं विस्तृतं लोचनं यस्याः तां तथोक्ताम्। वेपमानं कम्पमानं मधुरं मनोज्ञं लावण्ययुक्तमित्यर्थः, गात्रं यस्याः

वेपमानमधुरगात्रीं विशाललोचनाम् अभिनिश्राव्य तदालिङ्गन-सुखम् अनुबुभूषुः ताम् आदाय गर्भगृहम् अविक्षम् । अस्मिन्नेव क्षणे तदास्मि नवाम्बुवाहस्तनितगम्भीरेण स्वरेण अनुगृहीतः' इति (६८) ।

श्रुत्वा च स्मित्वा च देवोऽपि राजवाहनः 'कथमसि कार्कश्येन कर्णीसुतम् अपि अतिक्रान्तः' इत्यभिधाय पुनः अवेक्ष्य उपहारवर्माणम् 'आचक्ष्व तव इदानीम् अवसरः' इति अभाषत । सोऽपि सस्मितं प्रणम्य आरभत अभिधातुम्—

इति श्रीदण्डिनः कृतौ दशकुमारचरिते उत्तरपीठिकायां अपहारवर्मचरितं नाम द्वितीय उच्छ्वासः ।

---

तां तथोक्ताम् । अभिनिश्राव्य श्रावयित्वा एतद् व्यापारपरम्परितमद्विषयमिति शेषः । तस्याः कन्यायाः आलिङ्गनम् आश्लेषणं तद्जनितं सुखम् अनुबुभूषुः अनुभवितुमिच्छुः तां कन्याम् आदाय गृहीत्वा गर्भगृहं वासगृहम् "गर्भागारं वासगृहम्" इत्यमरः । अविक्षम् प्रविष्टवान् । अस्मिन्नेव ईदृशे एव क्षणे समये तव भवतः राजवाहनस्य नवः नूतनः अम्बुवाहः मेघः तस्य स्तनितं गर्जितं तद्वत् गम्भीरं तेन तथोक्तेन । स्वरेण रवेण अनुगृहीतः बाधितः अस्मि भवामि अपहारवर्मेति शेषः ।

(६८) श्रुत्वेति । देवः राजा राजवाहनोऽपि श्रुत्वा एतत् सन्दर्भमिति शेषः । स्मित्वा स्मितं कृत्वा कार्कश्येन काठिन्येन कर्णीसुतः स्तेयशास्त्रप्रवर्त्तकः तम् अपि अतिक्रान्तः पर्युदासः इति एवम् अभिधाय उक्त्वा पुनर्भूयः उपहारवर्म्माणम् अवेक्ष्य दृष्ट्वा आचक्ष्व अभिहितवान् । इदानीम् अत्रावसरे तव उपहारवर्म्मणः अवसरः समयः, तदाख्यायिकोपवर्णनावसर इति भावः । इति एवम् अभाषत अवदत् । स उपहारवर्म्मा सस्मितं मन्दहाससहितं प्रणम्य नमस्कृत्य अभिधातुं वर्णितुम् आरभत आरब्धवान् ।

इति कृष्णात्रेय-श्रीरेवतीकान्तशर्म्मकृतायां विद्योतन्याख्यायां दशकुमारटीकायां द्वितीय उच्छ्वासः ।

# দশকুমারচরিত।

## পূর্ব্বপীঠিকা।

### প্রথম উচ্ছ্বাস।

মগধ দেশে ( পাটনায় ) পুষ্পপুরী নামে এক মহানগরী ছিল। তথায় রাজহংস নামে চন্দ্রবংশীয় এক রাজা ছিলেন। রাজ মহিষীর নাম বসুমতী। রাজা রাজহংসের শিতবর্ম্মা ধর্ম্মপাল ও পদ্মোদ্ভব নামে তিন জন প্রাচীন পৈতৃক মন্ত্রী ছিলেন। শিতবর্ম্মার সুমতি ও সত্যবর্ম্মা নামে দুই তনয়। ধর্ম্ম পালের সুমিত্র সুমন্ত্র ও কামপাল নামে তিন তনয়। পদ্মোদ্ভবের সুশ্রুত ও রত্নোদ্ভব নামে দুই তনয়। সত্যবর্ম্মা সংসার অসার ভাবিয়া তীর্থযাত্রাভিলাষে দেশান্তর গমন করেন। কামপাল অত্যন্ত ইন্দ্রিয়পরায়ণ ছিলেন; তিনি পিতা ও জ্যেষ্ঠ ভ্রাতাদিগের অবাধ্য হইয়া নানাদেশভ্রমণে বহির্গত হন। রত্নোদ্ভব বাণিজ্যের নিমিত্ত সমুদ্রপথে যাত্রা করেন। সুমতি সুমিত্র সুমন্ত্র ও সুশ্রুত এই চারি জন, রাজা রাজহংসের মন্ত্রিত্ব-পদে প্রতিষ্ঠিত ছিলেন।

একদা মগধাধিপতি মালবরাজ মানসারের দর্প চূর্ণাভিলাষে সসৈন্যে যুদ্ধযাত্রা করিলেন; এবং ঘোরতর যুদ্ধে তাঁহাকে পরাস্ত করিয়া পুনরায় অনুগ্রহ পূর্ব্বক স্বপদে প্রতিষ্ঠিত করিলেন। অনন্তর স্বদেশে প্রত্যাবর্ত্তন করিয়া প্রজাপালন করিতে লাগিলেন। রাজার অধিক বয়ঃক্রম হইল, কিন্তু সন্তান হইল না, তাহাতে তিনি নিতান্ত ম্রিয়মাণ হইয়া সন্তানকামনায় ভূতভাবন ভগবান্ নারায়ণের আরাধনায় রত হইলেন। কিছুকাল বিলম্বে রাজারমহিষী বসুমতী গর্ভবতী

হইলেন। মগধরাজ রাজহংস দিগ্‌দেশীয় আত্মীয় বন্ধুবান্ধবগণকে নিমন্ত্রণ করিয়া মহাসমারোহে পরমাহ্লাদে মহিষীর সীমন্তোন্নয়ন কার্য্য সম্পন্ন করিলেন।

এক দিন রাজা মন্ত্রিগণসমভিব্যাহারে সভায় বসিয়া আছেন, এমন সময়ে তাঁহার এক চর মালব দেশ হইতে সমাগত হইয়া সংবাদ দিল, মহারাজ, মালবেশ্বর মানসার, মহারাজের নিকট পরাজিত হইয়া, নিরতিশয় লজ্জিত ও ক্ষুব্ধ হইয়াছেন। তিনি শত্রুনির্যাতনকামনায় মহাকালনিবাসী মহেশ্বরের উপাসনা করিয়া বীর-ঘাতিনী এক গদা পাইয়াছেন। এক্ষণে মহারাজের সহ সংগ্রামমানসে আসিতেছেন, যাহা কর্ত্তব্য হয়, করুন। চরমুখে মন্ত্রিগণ দেব-দত্ত-গদা প্রাপ্তির সংবাদ পাইয়া ভীত হইলেন, মগধরাজকে দুর্গ আশ্রয়ের পরামর্শ দিলেন, এবং তন্নিমিত্ত অত্যন্ত আগ্রহ করিতে লাগিলেন। কিন্তু মগধরাজ তাঁহাদের পরামর্শ না শুনিয়া সংগ্রামের উদ্যোগ করিতে লাগিলেন। অচিরেই মালবরাজ সসৈন্যে আসিয়া মগধদেশে প্রবেশ করিলেন।

তখন অমাত্যগণ অত্যন্ত আগ্রহ সহকারে রাজহংসের আজ্ঞাক্রমে বিন্ধ্যারণ্যমধ্যে শত্রুদিগের অগম্য এক রমনীয় স্থান নির্ণয় করিলেন, এবং তথায় মগধরাজের ও আপনাদিগের পরিবার বর্গ প্রেরণ করিয়া তাহাদের রক্ষার্থ কতকগুলি লোক নিযুক্ত রাখিলেন। এ দিকে মালবরাজের সহ ভীষণ সংগ্রাম হইতে লাগিল। পরিশেষে মালবরাজ হরদত্ত সেই অব্যর্থ গদা নিক্ষেপ করিয়া, সারথিকে বিনষ্ট ও রথস্থ মগধনাথকে বিচেতন ও মূর্চ্ছিত করিয়া ফেলিলেন। তখন রথযোজিত অশ্বগণ শ্লথ রশ্মি হইয়া, দৈববশে সেই বিন্ধ্যাটবীর পথেই রথ লইয়া ধাবমান হইল। মালবনাথ এইরূপে জয় লাভ করিয়া সমস্ত মগধরাজ্য অধিকার করিলেন।

তখন রাজহংসের মন্ত্রিগণ প্রভুর অন্বেষণ করিতে লাগিলেন। কিন্তু কোনরূপেই তাঁহার উদ্দেশ পাইলেন না। অবশেষে বিন্ধ্যারণ্য-মধ্যে মহারাজ্ঞীর নিকট উপস্থিত হইলেন। রাজ্ঞী বসুমতী রাজার নিরুদ্দেশসংবাদ শ্রবণ করিয়া নিরতিশয় শোকে অভিভূত ও উন্মত্তপ্রায়

হইলেন, এবং অবিলম্বেই জীবন পরিত্যাগের স্থির নিশ্চয় করিলেন। আমাত্যগণ বলিলেন, মাহিষি, মহারাজ এখনও জীবিত থাকিলেও থাকিতে পারেন, বিশেষতঃ দৈবজ্ঞগণ নির্ণয় করিয়াছেন আপনার গর্ভে সর্ব্বশত্রু-বিনাশন সকলভূমির অধীশ্বর সন্তান রহিয়াছেন। অমাত্যদিগের শান্ত্বনা বাক্যে বসুমতী ক্ষণিক কিঞ্চিৎ শান্ত হইলেন। কিন্তু অবিলম্বেই তাঁহার শোকানল অত্যন্ত প্রবলরূপে প্রজ্বলিত হইয়া উঠিল। তখন আর ক্ষণমাত্রও জীবনরক্ষায় সমর্থ না হইয়া উদ্বন্ধমরণ স্থির করিলেন। নিশীথসময়ে সকলকে নিদ্রাভিভূত দেখিয়া নিঃশব্দপদে বাটী হইতে বাহির হইলেন। এবং বিন্ধ্যারণ্যের প্রান্তভাগে গিয়া উত্তরীয় বসন দ্বারা এক বটতরুর শাখায় উদ্বন্ধনের উদ্যোগ করিয়া করুণ উচ্চস্বরে কহিলেন —"হে নাথ! জন্মান্তরেও যেন আমি তোমাকেই স্বামী পাই।"

রাজহংসের তুরগগণ, বনপথে রথের গতি রোধ হওয়াতে, ঘটনাক্রমে সেই বট বৃক্ষের নিকটেই দণ্ডায়মান হইয়া রহিয়াছিল। তৎকালে রাত্রির হিমানীসম্পর্কে রাজার মূর্চ্ছা ভঙ্গ হওয়াতে, স্ত্রীলোকের আর্ত্তনাদ তাঁহার কর্ণগোচর হইল। স্বরপরিচয়ে মহিষী বসুমতী জানিতে পারিয়া সত্বর তাঁহাকে আহ্বান করিলেন। অকস্মাৎ এইরূপ অচিন্তনীয় আহ্বান-ধ্বনি শ্রবণ করিয়া রাণী উপস্থিত হইয়া দেখিলেন তথায় মগধনাথ রহিয়াছেন। তখন স্বামীর সন্দর্শনে তাঁহার অনির্ব্বচনীয় আনন্দ হইল। পরে বিন্ধ্যারণ্যভবনে অমাত্যগণের নিকট উভয়ে উপস্থিত হইয়া সমস্ত বৃত্তান্ত বলিলেন। এইরূপে জীবন লাভ করিয়া রাজা রাজহংস বিন্ধ্যারণ্য মধ্যবর্ত্তী গোপনভবনে বাস করিতে লাগিলেন। কিন্তু যুদ্ধে পরাজয় হেতু তাঁহার অন্তঃকরণ সদা দ্বেষানলে দগ্ধ হইতে লাগিল। একসময় সেই বনবাসী কালত্রয়দর্শী বামদেব মহর্ষির আশ্রমে উপস্থিত হইয়া তাঁহার সমক্ষে আপনার মনোবেদনা জ্ঞাপন করিয়া বলিলেন, মহাশয়, আমি কিরূপে মানসারকে পরাজয় করিতে পারি তাঁহার কোন উপায় বলিয়া দিউন। বামদেব বলিলেন, মাহারাজ, কিছু দিন অপেক্ষা করুণ, দেবী বসুমতীর গর্ভে সকলরিপুমর্দ্দন রাজনন্দন অবস্থিত করিতেছেন তাঁহা হইতেই আপনার মনোরথ সিদ্ধ হইবে।

তখন কথিতানুরূপ দৈববাণীও হইল। রাজা মুনির ও দৈববচনে নির্ভর করিয়া অরণ্যে বাস করিতে লাগিলেন। কিছু দিন অন্তর মহিষী বসুমতী শুভ ক্ষণে সর্ব্বসুলক্ষণাক্রান্ত একপুত্র প্রসব করিলেন। রাজা যথাবিধানে সন্তানের জাতকর্ম্মাদি করিয়া রাজবাহন নাম রাখিলেন। তৎকালে সুমতি, সুমিত্র, সুমন্ত্র, সুশ্রুত, এই চারি মন্ত্রীরও প্রমতি, মিত্রগুপ্ত, মন্ত্রগুপ্ত, বিশ্রুত নামক চারি পুত্র জন্মিল। রাজবাহন সেই মিত্রচতুষ্টয়ের সহিত বাল্যলীলা সুখে দিন দিন বর্দ্ধিত হইতে লাগিলেন।

একদিন এক তাপস, রাজলক্ষণযুক্ত এক কুমারকে আনিয়া রাজহংসের হস্তে সমর্পণ করিয়া বলিলেন, মহারাজ, কুশ সমিধ্ আহরণার্থ আমি এক বনে গিয়াছিলাম, তথায় এক নারী রোদন করিতেছে, দেখিয়া জিজ্ঞাসাকরিলাম কি জন্য তুমি এই জনশূন্য বনে একাকিনী রোদন করিতেছ? সে বলিল, মহাশয়, আমার প্রভু মিথিলরাজ প্রহারবর্ম্মা, নিজবন্ধু মগধরাজের সীমন্তিনীর সীমন্তোন্নয়ন উপলক্ষে নিমন্ত্রিত হইয়া সপরিবারে পুষ্পপুরে আসিয়াছিলেন। তখন মালবেশ্বর মানসার মগধরাজ্যে আসিয়া রাজহংসের সহ ঘোরতর যুদ্ধারম্ভ করেন; সেই যুদ্ধে মগধেশ্বর পরাজিত হইলেন। আমার প্রভু তখন কি করেন, কোনরূপে পরিজনগণের সহ স্বরাজ্যে প্রত্যাগমন করিলেন। তথায় আসিয়া দেখিলেন, ভ্রাতৃপুত্র বিকটবর্ম্মা অন্যায় পূর্ব্বক তাঁহার রাজ্য অধিকার করিয়াছে। সে কোনরূপেই তাঁহাকে তথায় প্রবেশ করিতে দিল না। তিনি অসহায়; কি করেন, ভাগিনেয় সুহ্মরাজের আশ্রয় গ্রহণার্থ সুহ্মরাজ্যে প্রস্থান করিলেন। বনপথে যাইতেছেন, সহসা কতকগুলা শবরসৈন্য আসিয়া তাঁহাকে আক্রমণ করিল। তাহাতে অত্যন্ত ভীত হইয়া কে কোথায় পলায়ন করিল, কিছুই জানিতে পারিলাম না। আমি ও আমার কন্যা রাজার দুটি যমজ সন্তানের ধাত্রী ছিলাম। সন্তান দুটি লইয়া এই অরণ্য মধ্যে পলায়ন করিতেছিলাম হঠাৎ এক ব্যাঘ্র আমাদিগকে আক্রমণ করিতে আসিল। আমি ভয়ে বিহ্বল হইয়া ভূমিপৃষ্ঠে পতিত ও মূর্চ্ছিতপ্রায় হইলাম। তথায় ব্যাধগণ ফাঁদ পাতিয়া এক

মৃত গাভী রাখিয়াছিল, সন্তানটি আমার হস্ত হইতে পতিত হইয়া সেই গাভীর ক্রোড়মধ্যে প্রবিষ্ট হইল। ব্যাঘ্র কালপ্রেরিত হইয়াই যেন আমাকে ত্যাগ করিয়া সেই গাভীকে আকর্ষণ করিতে লাগিল। তখন ফাঁদ হইতে এক বাণ আসিয়া ব্যাঘ্রের প্রাণ বিনাশ করিল। অনন্তর দেখিলাম, শবরেরা মৃত ব্যাঘ্র ও জীবিত বালকটি লইয়া প্রস্থান করিল। আমার কন্যা যে কোথায় গেল, কিছুই জানি না। সেই জন্যই কাঁদিতেছি। মহারাজ, এই কথা বলিয়া সে স্বীয় প্রভুর অনুগামিনী হইবার নিমিত্ত প্রস্থান করিল। আমি তখন মহারাজের মিত্র মিথিলরাজের বিপদ্ শ্রবণে দুঃখিত হইয়া তাঁহার সন্তানের অনুসন্ধান করিতে লাগিলাম, দেখিলাম অরণ্যস্থিত চণ্ডিকা দেবীর সম্মুখে একটী কুমার রহিয়াছে। শবরেরা তাহাকে বলিদান দিবার মানস করিয়াছে। আমি তাহাদিগকে বলিলাম, হে ব্যাধগণ, আমি বৃদ্ধব্রাহ্মণ, আমার একটি শিশু হারাইয়াছে তোমরা কি দেখিয়াছ? তাহারা আমার প্রতি অনুগ্রহ করিয়া সেই বালকটি দেখাইয়া বলিল, যদি তোমার এইটি শিশু হয় লইয়া যাও। আমি তাহাদিগকে আশীর্ব্বাদ করিয়া বালকটি লইয়া এই আসিতেছি, মহারাজকে উপহার দিলাম। রাজা বন্ধুর বিপত্তির কথা শুনিয়া কাতর হইলেন, এবং উপহার প্রাপ্ত হওয়াতে, বালকের উপহারবর্ম্মা নাম রাখিয়া রাজবাহনের ন্যায় পালন করিতে লাগিলেন।

রাজহংস একদিন তীর্থস্নানার্থ বনপথে যাইতে যাইতে এক শবরীর ক্রোড়ে পরম সুন্দর রাজলক্ষণযুক্ত একটি বালক দেখিতে পাইয়া জিজ্ঞাসিলেন, অবলে, এই রাজকুমারকে তুমি কোথায় পাইলে? সে বলিল, রাজন্ বনপথে শবরসৈন্যেরা একদিন মিথিলরাজের সর্ব্বস্ব হরণ করিয়াছিল। সেই সময়ে আমার স্বামী এই শিশুটি হরণ করিয়া আনিয়াছেন। রাজহংস সেই কুমারকে মিত্র মিথিলেশ্বরের পুত্র বিবেচনা করিয়া শবরীকে ধনদান পূর্ব্বক শিশুটি আনিলেন, এবং শবরের অপহৃত বলিয়া অপহারবর্ম্মা নাম দিয়া তাহাকে দেবীর হস্তে প্রতিপালনার্থ অর্পণ করিলেন।

একদিন বামদেবের এক শিষ্য, রাজার সম্মুখে একটি বালক আনিয়া,

বলিলেন, রাজন্, আমি রামতীর্থে স্নান করিতে গিয়াছিলাম। প্রত্যাগমন-কালে দেখিলাম, অরণ্য মধ্যে এক বৃদ্ধা এই কুমার ক্রোড়ে আকুলিতচিত্তে চতুর্দ্দিক্ অবলোকন করিতেছে জিজ্ঞাসিলাম, বৃদ্ধে, তুমি কে? এই শিশুটিই বা কে? কি জন্য অরণ্যে একাকিনী আসিয়াছ? বৃদ্ধা বলিল, মহাশয়, কালযবন দ্বীপে কালগুপ্ত নামে এক বণিক্ আছেন। মগধ-রাজ্যের রাজমন্ত্রীর পুত্র রত্নোদ্ভব বাণিজ্যার্থ সেই দ্বীপে উপনীত হইয়া কালগুপ্তের কন্যাকে বিবাহ করেন। কালক্রমে তিনি গর্ভবতী হইলেন। পরে রত্নোদ্ভব শ্বশুরের অনুমতি লইয়া সস্ত্রীক স্বদেশে যাত্রা করেন। দুর্ভাগ্যবশতঃ সমুদ্রে যান ভগ্ন হইয়া নিমগ্ন হইলেন। আমি সেই কন্যার ধাত্রী। সেই গর্ভিণীকে হস্তে ধরিয়া এক কাষ্ঠফলক অবলম্বন করিয়া এই তীরে উত্তীর্ণ হইয়াছি। রত্নোদ্ভব জলমগ্নই হইলেন, কি কোথাও উত্তীর্ণ হইলেন, জানি না। তাঁহার পত্নী একে পূর্ণগর্ভা, বারি-প্রবাহে অশেষক্লেশ-ভোগ হওয়াতে প্রসববেদনা উপস্থিত হইল। বন-মধ্যেই এই পুত্রটি প্রসব করিয়া অবিলম্বেই মূর্চ্ছিত হওয়ায় আমি কি করি, শিশুটি লইয়া লোকালয়ের পথ অন্বেষণ করিতে আসিয়াছি। ইহার জননী বিচেতনা সেই স্থানেই পতিত রহিয়াছেন। মহারাজ, বৃদ্ধা এই কথা বলিতেছে, এমন সময় এক বন্যহস্তী তথায় উপস্থিত হওয়ায়, বৃদ্ধা যেমন ভীত হইয়া দ্রুতপদে পলায়ন করিবে, অমনি ক্রোড় হইতে শিশুটি পতিত হইল। আমি তখন এক বৃক্ষের অন্তরালে ছিলাম। হস্তী শুণ্ড দ্বারা সেই শিশুকে উত্তোলন করিবামাত্র হঠাৎ এক সিংহ আসিয়া হস্তীকে বিনাশপূর্ব্বক প্রস্থান করিল। বালকটি হস্তীর শুণ্ডহইতে ভূতলে পতিত হইবামাত্র, তত্রত্য তরুহইতে এক বানর অবরোহণ করিয়া পক্কফলভ্রমে তাহাকে লইয়া বৃক্ষে আহোরণকরিল। কিন্তু ইহা ফল নয় দেখিয়া ফেলিয়া দিল। তখন আমি সাজ্ঘাতিক আঘাত প্রাপ্ত এই বালকটি ক্রোড়ে লইয়া ইহার জননীর ও ধাত্রীর অনেক অন্বেষণ করিতে লাগিলাম। কিন্তু দেখিতে না পাইয়া পরে গুরুর আশ্রমে নিয়া আসিলাম। তিনি মহারাজের নিকট পাঠাইয়া দিয়াছেন। রাজা রাজহংস একসময় সকলমিত্রের বিপদ্ঘটনায় বিস্ময়াপন্ন হইলেন।

অনন্তর পুষ্পতুল্য সুন্দর বলিয়া ঐ শিশুর নাম পুষ্পোদ্ভব রাখিলেন, এবং পালনার্থ তাহার পিতৃব্য সুশ্রুতের হস্তে অর্পণ করিলেন।

এক দিন মহিষী বসুমতী একটি কুমারকে ক্রোড়ে করিয়া রাজার নিকট আসিয়া বলিলেন, স্বামিন্, গত যামিনীতে এক দিব্যকামিনী এই শিশুটি লইয়া আমার গৃহে উপস্থিত হইয়াছিলেন। আমার নিদ্রা ভঙ্গ করিয়া বিনম্রবচনে বলিলেন, "দেবি আমি মণিভদ্রযক্ষের কন্যা, আমার নাম তারাবলী, আমি তোমার মন্ত্রিনন্দন কামপালের প্রেয়সী। তোমার পুত্র রাজবাহন সসাগরাধরার অধীশ্বর হইবেন, তাঁহার পরিচর্য্যার্থ আমার এই পুত্র অর্থপালকে যক্ষরাজের আজ্ঞাক্রমে আনিয়াছি; তুমি ইহাকে প্রতিপালন কর।" স্বামিন্; আমি এই কথা শুনিয়া বিস্ময়াপন্ন হইলাম এবং সেই যক্ষকন্যাকে যথোচিত সমাদর করিলাম। কিন্তু পরক্ষণেই আর তাহাকে দেখিতে পাইলাম না। রাজা রাজহংস, কামপালের যক্ষকন্যাসঙ্গ সংবাদে বিস্মিত হইলেন, এবং সুমিত্রকে ডাকিয়া তাঁহার হস্তে তাঁহার ভ্রাতৃপুত্র অর্থপালকে অর্পণ করিলেন।

পর দিবস বামদেবের শিষ্য সোমশর্ম্মা একটী অতিসুকুমার কুমার আনিয়া বলিলেন, মহারাজ, আমি তীর্থযাত্রাপ্রসঙ্গে কাবেরী-তীরে গিয়াছিলাম, দেখিলাম, এই বালকটি ক্রোড়ে এক বৃদ্ধা ক্রন্দন করিতেছে। জিজ্ঞাসিলাম, বৃদ্ধে, তুমি কে? এই বালকটিই বা কে? কিনিমিত্ত এই অরণ্যে আসিয়াছ? বৃদ্ধা, আমাকে আপনশোকশল্যের উদ্ধারক্ষম মনে করিয়া কহিল, মহাশয়, মগধরাজরাজহংসের মন্ত্রিপুত্র সত্যবর্ম্মা তীর্থযাত্রার উদ্দেশে এইদেশে আসিয়া, এক ব্রাহ্মণের কালী নামে এক কন্যাকে বিবাহ করেন। কিন্তু কালীর গর্ভে সন্তান না হওয়াতে, সত্যবর্ম্মা তাহার ভগিনী কাঞ্চনকান্তিকাকে বিবাহ করিয়া এই সন্তান উৎপন্নকরেন। কালী তাহাতে সাতিশয় ঈর্ষ্যান্বিত হইয়া এই বালককে এবং আমাকে ছলপূর্ব্বক আনয়ন করিয়া এই নদীতে নিক্ষেপ করিল। আমি ইহার ধাত্রী, ইহাকে এক হস্তে ধরিয়া একহস্তে সাঁতার দিতে লাগিলাম। ভাগ্যক্রমে ঐ সময়ে নদীবেগে এক তরুশাখা আসিয়া

উপস্থিতহইয়। আমি তাহা অবলম্বন করিয়া কোনপ্রকারে তীরে উত্তীর্ণ হইলাম। কিন্তু সেই শাখাস্থিতকালসর্প আমাকে দংশনকরিয়াছে। এক্ষণে বিষবেগে আমার প্রাণবিয়োগহইলে কে এই বালককে পালন-করিবে এই শোকে রোদন করিতেছি। এই কথা বলিতে বলিতেই বৃদ্ধা বিচেতন হইয়া পড়িল। আমি বহু যত্নকরিয়াও তাহাকে বাঁচাইতে পারিলাম না। সুতরাং বালকটি লইয়া আপনার নিকট আসিয়াছি। রাজা সোমশর্ম্মার দত্ত বলিয়া তাহার সোমদত্ত নাম দিয়া, তাহার পিতৃব্য সুমতির নিকট সমর্পণ করিলেন। রাজবাহন, প্রমতি, মিত্রগুপ্ত, মন্ত্রগুপ্ত, বিশ্রুত, উপহারবর্ম্মা, অপহারবর্ম্মা, পুস্পোদ্ভব, অর্থপাল ও সোমদত্ত এই নব কুমারের সহিত এইরূপে একত্র মিলিত হইয়া দিন দিন বৃদ্ধি পাইতে লাগিলেন। যথাযোগ্যকালে তাহাদের চূড়া উপনয়নপ্রভৃতি সমস্তসংস্কার সম্পন্ন হইল। রাজা রাজহংস তাঁহাদের বিদ্যাশিক্ষার্থ উপযুক্ত শিক্ষক নিযুক্ত করিলেন। কুমারগণ যথোচিতপরিশ্রমসহকারে কিয়ৎকালমধ্যে বিবিধ বিদ্যায় পারদর্শী হইয়া রাজা রাজহংসের আনন্দ বিধান করিতে লাগিলেন।

——:০:——

## দ্বিতীয় উচ্ছ্বাস (ব্রাহ্মণের উপকার।)

এক দিবস মহর্ষি বামদেব, কুমারগণ-পরিবেষ্টিতরাজা রাজহংসের নিকট আসিয়া আশীর্ব্বাদ করিয়া বলিলেন, মহারাজ, আপনার পুত্র রাজবাহন সংপ্রতি যৌবন প্রাপ্ত হইয়া সমস্তশত্রুসংহারে সমর্থ হইয়াছেন, এক্ষণে ইহাঁকে মিত্রগণসমভিব্যাহারে দিগ্‌বিজয়ব্যাপারে প্রেরণ করুন। কুমারগণ মহর্ষির বাক্যে সাতিশয় উল্লাসিত হইলেন। অনন্তর রাজহংস সেনাসংগ্রহ করিয়া নব-কুমার-সমভিব্যাহারে কুমার রাজবাহনকে শুভক্ষণে দিগ্‌বিজয়সাধনে প্রেরণ করিলেন। রাজবাহন কিয়দ্দূর অতিক্রমণ করিয়া বিন্ধ্যাটবীর একদেশে প্রবিষ্ট হইয়া কিরাতবেশধারী এক ব্রাহ্মণকে দেখিয়া জিজ্ঞাসিলেন, হে মানব, তোমার ব্যাধের ন্যায় আকৃতি দেখিতেছি, অথচ যজ্ঞোপবীত আছে। তুমি কিনিমিত্ত এই

নিবিড় অরণ্যে বাস করিতেছ? সেই পুরুষ রাজবাহনের তেজঃপুঞ্জ-শরীরদর্শনে কৌতুকাবিষ্ট হইয়া তাঁহার এক বয়স্যের নিকট তাঁহার পরিচয় লইলেন। পরে আপনবৃত্তান্ত কহিতে লাগিলেন। হে রাজনন্দন, কিয়ৎকাল অতীত হইল, কতকগুলি দুরাচারব্রাহ্মণ স্বীয় কুলাচার বর্জ্জন করিয়া, এই বনে ব্যাধগণের সহ মিলিত হইয়া বাস করিতেছে; এবং দস্যুবৃত্তি অবলম্বন করিয়া জীবিকানির্ব্বাহ করিতেছে। আমি তাহার একজনের সন্তান, আমার নাম মাতঙ্গ। আমি কেবল পাপ কর্ম্ম দ্বারা দিন যাপন করিতাম। এক দিন ব্যাধগণ যৎকিঞ্চিৎ অর্থ-লোভে এক ব্রাহ্মণকে বিনাশ করিবার উপক্রম করিতেছিল দেখিয়া আমি দয়ার্দ্রচিত্ত হইয়া তাহাদিগকে নিষেধ করিলাম। তাহারা আমার বারণ না শুনাতে তাহাদের সঙ্গে সংগ্রাম আরম্ভ হইল। তাতে তাহারা আমাকে বিনাশ করিল। আমি যমালয়ে গিয়া দেখিলাম, বহুপুরুষ-পরিবেষ্টিত রত্নসিংহাসনে যমরাজ রহিয়াছেন। তাঁহাকে দণ্ডবৎ প্রণাম করিলাম। তিনি আমাকে দেখিয়া মন্ত্রিপ্রধান চিত্রগুপ্তকে ডাকিয়া বলিলেন, হে চিত্রগুপ্ত, এব্যক্তির এখনও মৃত্যুসময় উপস্থিত হয় নাই, এ কেবল ব্রাহ্মণের উপকারার্থ প্রাণ দান করিয়াছে এতএব অদ্যাবধি ইহার কেবল পুণ্যকর্ম্মেই মতি হইবে। তুমি ইহাকে পাপিষ্ঠদিগের যাতনা দেখাইয়া দাও এবং পুনর্ব্বার পূর্ব্বশরীরেই অবস্থাপিত কর। চিত্রগুপ্ত আমাকে নরকযন্ত্রণা দেখাইতে লাগিলেন। দেখিলাম কোন কোন পাপাত্মাকে উত্তপ্ত লৌহস্তম্ভে বন্ধন এবং কাহাকে তপ্ততৈলকটাহে নিক্ষেপ; কাহাকেও বা যন্ত্রারূঢ় ও ঘূর্ণন করিয়া পরিতক্ষণ করিতেছে। পাপের এই সমস্ত ফলভোগ প্রত্যক্ষকরিয়া আমি পূর্ব্ব শরীরে প্রত্যাগত হইয়া পুনর্জ্জীবিত হইলাম। এক্ষণে আমি কেবল গৌরীপতি-পূজায় মনোনিবেশ করিয়াছি, পূর্ব্বের বন্ধুবর্গের সহিত আর সংসর্গও করি না। হে রাজনন্দন, বিগতনিশীথে ভগবান্ গৌরীপতি আসিয়া আমাকে জাগরিত করিয়া বলিলেন "মাতঙ্গ, দণ্ডকারণ্যমধ্যবর্ত্তি নদী-তীরে এক অতি বড় গর্ত্ত আছে, তাহার মধ্যদিয়া পাতালপুরে গমন করা যায়। যদি তুমি প্রবেশ কর, তবে তথায় এক তাম্রশাসন প্রাপ্ত হইবে।

তাহা পাঠ করিয়া তদুপদিষ্টবিধানের অনুষ্ঠান করিলে, তুমি পাতাল-পুরীর অধীশ্বর হইতে পারিবে। যে রাজকুমারের সহায়তায় তোমার এই কার্য্যসিদ্ধি হইবে, আগামী দিবস তিনি এখানে আসিবেন।" ভগবান্ এই বলিয়া অন্তর্হিত হইলেন। হে রাজনন্দন, এক্ষণে আপনি উপস্থিত হইয়াছেন, আমার সহায্য করুন। রাজবাহন মাতঙ্গের সাহায়তাদানে সম্মত হইয়া সেই দিনই অর্দ্ধরাত্রে সমস্তমিত্রগণকে নিদ্রিত দেখিয়া মাতঙ্গের সহ প্রস্থান করিলেন। পরদিন প্রভাতে, বন্ধুগণ রাজবাহনকে না দেখিয়া সাতিশয় দুঃখিত হইলেন। তিনি কোথায় গেলেন নির্ণয় করিতে না পারিয়া, তাঁহার অন্বেষণার্থ প্রত্যেকে ভিন্ন ভিন্ন দেশে গমন করিলেন।

এ দিকে মাতঙ্গ রাজবাহনের সহ গৌরীপতি-নির্দ্দিষ্ট গর্ত্তে প্রবেশ করিয়া তাম্রশাসন গ্রহণ করিলেন। ঐ তাম্রশাসন পাঠ করিয়া পাতালপুরের অপূর্ব্ব উদ্যানে মনোহর সরোবরতীরে প্রকাণ্ড অগ্নিকুণ্ড স্থাপন করিয়া তাঁহাতে হোম আরম্ভ করিলেন, রাজবাহন বিস্ময়াপন্ন হইয়া দেখিতে লাগিলেন। হোমাবশেষে মাতঙ্গ সেই জ্বলন্তহুতাশনে আপনশরীর আহুতি প্রদান করিয়া, পরক্ষণেই পরমসুন্দর পুরুষ হইয়া নির্গত হইলেন। অবিলম্বে মণিময় ভূষণভূষিতা পরমরূপবতী এক যুবতী সখীগণের সহ তথায় সমাগত হইয়া মাতঙ্গের হস্তে এক উজ্জ্বল মণি সমর্পণ করিয়া বিনয়বচনে বলিলেন হে দ্বিজোত্তম, আমি অসুরকন্যা, আমার নাম কালিন্দী। আমার পিতা এই পাতাললোকের রক্ষিতা ছিলেন। তিনি পরাক্রমদ্বারা অমরগণকে সমরে পরাজয় করেন, পরিশেষে কংসারিহস্তে ধ্বংশপ্রাপ্ত হন। আমাকে পিতৃশোকে নিতান্ত কাতর দেখিয়া এক সিদ্ধপুরুষ কহিয়াছিলেন, অবলে, কিছুকালপরে এক দিব্যশরীরধারী পুরুষ আসিয়া তোমার পাণিগ্রহণ করিবেন এবং এই পাতাললোকপালন করিবেন। হে দ্বিজোত্তম, আমি সেই সিদ্ধ-পুরুষের আদেশানুসারে এতদিন আপনার আগমনপ্রতীক্ষা করিয়া রহিয়াছিলাম। এক্ষণে আপনি আসিয়াছেন, আমাকে গ্রহণ করিয়া চরিতার্থ করুন। তখন মাতঙ্গ, রাজবাহনের অনুমতিক্রমে, সেই

